। श्रीउदयवीरगणिविरचितम् ।

# । श्रीपार्श्वनाथचरितम् ।

। सरलं गद्यबद्धम् ।

संघवी मुळजीभाइ झवेरचंद पालीताणा—नागरदास प्रागजीभाइ अमदावाद इत्येताभ्यां प्रकाशितम् ।


वीरसंवत् २४६१ विक्रम संवत् १९९१ प्रतयः ७५०

मूल्यं रूप्यकत्रयम् ।




## प्रस्तावना ।

इह किल जैनग्रन्थसन्दर्भे कथानुयोगद्वारा धर्मतत्त्वनिरूपकाः प्रभूतसंख्या ग्रन्था दरीदृश्यन्ते । ते च सर्वेऽपि महानुभावचरितख्यापनेन विशेषतश्च तीर्थंकरप्रबन्धेनैहिकामुष्मिकनीतिमयत्वेन च सर्वेषां महोपकारिणः सन्ति । तेषु च कतिचिद्ग्रन्थाः शोधयित्वा मुद्रायन्त्रणद्वारा प्राकट्यं नीता वरिवर्त्तन्ते विविधसंस्थाधिकारिभिः, यतः पठनपाठनसामग्रीसुलभत्वेन सर्वेषां साधुसाध्वीश्रावकश्राविकादीनां महोपकारितया प्रभवन्ति । किं चानन्यसाधारणमाहात्म्यानां जिनेश्वराणामनेकानि चरितानि भिन्नभिन्नाचार्यकृतानि प्राकृतसंस्कृतभाषामयानि प्रकटितानि भाण्डागारगुप्तानि च विद्यन्ते । तेषु चेदं श्रीपार्श्वनाथस्वामिनः परमपवित्रं चरित्रमस्माभिः प्रकटीकृतम् । यद्यपीदं चरितं वर्त्तत एव कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिपादनिर्मितत्रिषष्टिशलाकापुरुषचरितान्तर्गतं संक्षिप्तमस्माभिरेव प्रकटीकृतं, श्रीमद्भावदेवसूरिविरचितं च विततं वाराणसीस्थश्रीमद्यशोविजयसंस्कृतपाठशालाख्यसंस्थया प्रकटितं । प्रथमं चैतत् सरलमपि पद्यात्मकं द्वितीयं च गभीरार्थं पद्यात्मकं च, यतो द्वयमप्येतत्साहित्यरसिकानां विदुषामेवोपकारकमिति विचार्य यत्किञ्चिद्गीर्वाणज्ञानामुपकारार्थमिदं गद्यात्मकं सरलभाषोपेतं च निरधारि ।

चरितस्य चास्य निर्मातारः श्रीमच्चान्द्रगच्छीयगुरुश्रीसंघवीरगीतार्थमुख्यान्तेवासिन उदयवीरनामानः । सत्तासमयश्चैषां सं० १६५४ वर्षे ग्रन्थनिर्माणावसरेण स्पष्ट एव ज्ञायते ग्रन्थान्तलिखितस्वोपज्ञप्रशस्तौ । तथाहि—

" तदीयगच्छे गुरुसंघवीरगीतार्थमुख्याः सकला बभूवुः ।
येषां करस्पर्शनतोऽपि मूर्खः, प्राज्ञो भवेत्सर्वकलाप्रधानः ॥ ४ ॥

तदीयशिष्योदयवीर एव, सद्गद्यबन्धेन हि शास्त्रमेतत् ।
कथाप्रबन्धैः सरस प्रधानं, निरूपयामास गुरुप्रसादात् ॥ ५ ॥
वेदबाणर्तुचन्द्राख्यसंख्ये ( १६५४ ) वर्षे वचोष्टके ।
मासे च सितसप्तम्यां ग्रन्थोऽयं निर्मितो मुदा ॥ ८ ॥ ”

पूज्यानां चैषामन्यापि काचित्कृतिर्विद्यते न वेति ज्ञातुं न लब्धं किञ्चिदवलम्बनं । चरित्रे चास्मिन्नष्टसर्गात्मके स्थाने स्थाने धर्मतत्त्वनिरूपणपूर्वं रसिककथानकेनाक्षिप्यन्ते वाचकश्रोतृजनमनांसीति प्रतीत्यर्थं वाचकवर्गो वाचयितुमेव प्रार्थ्यते । विषयज्ञानार्थं च प्रतिसर्गं विषयानुक्रमः कथानुक्रमश्चाधो लिख्यते—

प्रथमः सर्गः । चतुर्विंशतितमपत्रपर्यन्तम् ।

पोतनपुराधीशोऽरविन्दो नाम राजा । राज्ञी च धारिणी । तस्य पुरोहितो विश्वभूतिर्नाम । तस्यानुद्धरा प्रिया । तयोर्मरुभूतिकमठनामानौ सुतौ । तयोरेकतरो धर्मिष्ठोऽपरश्चाधर्मतत्परः । मरुभूतेः पत्नी वसुन्धरा कमठस्य चारुणा । विश्वभूतेराद्यस्वर्गगमनमनुद्धरायाश्च तस्यैव प्रियात्वं । मरुभूतेः पुरोहितपदप्रापणं । हरिश्चन्द्रमुनेरागमनं । तद्देशनायां ललिताङ्गकथाकर्णनेन मरुभूतेर्वैराग्यप्राप्तिः । मरुभूतिपत्न्याः कमठेन सह विलसनम् । कमठस्त्रीमुखेन मरुभूतेस्तज्ज्ञानं । मरुभूतेः साक्षाद्दर्शनानन्तरं प्रस्तावे राज्ञे तद्दुश्चेष्टितनिवेदनं । सापमानं नृपकृतं कमठस्य राज्यान्निष्कासनं । तेन कमठस्य भ्रातृद्वेषः । कमठस्य शिवतापसात्तापसीदीक्षाङ्गीकारः । नृपेण निपि-

द्रस्यापि मरुभूतेर्भ्रातृसमीपे क्षामणाय गमनं । तेन प्रत्युत प्रवृद्धकोपेन कमठेन शिलामोचनात्कृतो भ्रातुर्वधः । मरणानन्तरं मरुभूतेर्हस्तिभवोऽरुणायाश्च हस्तिनीभवः ।

मेघानां क्षणदृष्टनष्टत्वं दृष्ट्वाऽरविन्दनृपस्य वैराग्येण दीक्षाग्रहणं । वने गतस्य राजर्षेर्मारणाय हस्तिनो धावनं । राजर्षेरुपदेशेन हस्तिनोधर्मप्राप्तिः । राजर्षेरष्टापदगमनं तत्र केवलाप्तिर्मोक्षगमनं च ।

भ्रातृवधेन कमठस्यान्यतापसकृततिरस्कारः, मृत्वा च कुर्कुटाहिभवनं । कुर्कुटाहेर्हस्तिस्थानगमनं, तत्कृतदंशेन हस्तिनः समाधिनाऽष्टमदेवलोकप्राप्तिर्हस्तिन्याश्च द्वितीयदेवलोके देवीत्वं । अन्योऽन्यरागातिशयाद्देवेन देव्याः स्वस्थाननयनं । कुर्कुटाहेः पञ्चमनरकगमनं सप्तदशसागरोपमायुष्ट्वेन ।

## द्वितीयः सर्गः । षट्पञ्चाशत्तमपत्रपर्यन्तम् ।

जम्बूद्वीपे पूर्वमहाविदेहे सुकच्छविजये वैताढ्यगिरौ तिलकपुर्यां नगर्यां विद्युद्गतिविद्याधरेन्द्रः । तस्य राज्ञी तिलकावती । तस्याः कुक्षौ गजजीवदेवस्य स्वर्गाच्च्युत्वाऽवतरणं, जन्मानन्तरं च किरणवेगनामकरणं । तस्य पद्मावत्या सामन्तराजकन्यया सहोद्वाहः । विद्युद्गतेर्दीक्षया मोक्षावाप्तिः । किरणवेगस्य राज्यं पालयतो धरणवेगनामपुत्रोत्पत्तिः । विजयभद्राचार्यस्यागमनं । देशनायां पञ्चाणुव्रतादिविषयककथाश्रवणादिना किरणवेगस्य वैराग्येण दीक्षाग्रहणं हिमाद्रिगमनं च । तत्र कुर्कुटाहेर्नरकादुद्वृत्य कालदारुणसर्पत्वं । सर्पदंशेन मुनेर्द्वादशे देवलोके गमनं । सर्पस्य च दवदग्धस्य षष्ठ्यां पृथिव्यां द्वाविंशतिसागरोपमायुषोत्पत्तिः ।

तृतीयः सर्गः । त्र्यशीतितमपत्रपर्यन्तम् ।

जम्बूद्वीपे पश्चिममहाविदेहे सुगन्धिविजये शुभंकरानगर्यां वज्रवीर्यनृपस्य लक्ष्मीवती राज्ञी । तत्पुत्रः किरणवेगजीवो वज्रनाभनामा । तेन विजयापाणिग्रहणं । वज्रनाभस्य मातुलेयस्य कुबेरस्य नास्तिकवादिनः तत्रागमनं । अन्यदा लोकचन्द्रसूरिसमीपे सकुबेरस्य वज्रनाभस्य वन्दनार्थं गमनं । सूरिकृतदेशनायां कर्मस्वरूपबन्धकारणस्थित्यादि श्रुत्वा कुबेरकृतनास्तिकवादो गुरुदत्तमुत्तरं सविस्तरं च । गुरूक्तवणिक्पुत्रत्रयकथा, तदुपनयश्च । पञ्चदशकर्मादानस्वरूपं, द्वाविंशत्यभक्ष्यस्वरूपं, रात्रिभोजनोपरि कथानकं, द्वात्रिंशदनन्तकायस्वरूपं, अनर्थदंडस्वरूपं, धर्ममूलं विनयो विवेकश्च, विवेकोपरि सुमतिकथा, सत्संगस्यावश्यकता, तदुपरि प्रभाकरकथा, अल्पाक्षरैर्धर्मरहस्यं, देवगुरुधर्मस्वरूपं, कुबेरस्य प्रतिबोधः । वज्रवीर्यकुबेरयोर्दीक्षाग्रहणं वज्रनाभस्य राज्यग्रहणं च । वज्रनाभस्य चक्रायुधपुत्रोत्पत्तिः । क्षेमंकरजिनपार्श्वे वज्रनाभस्य चारित्राङ्गीकारः । आकाशमार्गेण मुनेः सुकच्छविजये गमनं । तत्र नरकादुद्वृत्य भिल्लत्वं प्राप्तस्य सर्पजीवस्य बाणघातेन मुनेराराधनेन मध्यग्रैवेयके उत्पत्तिः सप्तविंशतिसागरायुषा । भिल्लस्य मृत्वा सप्तम्यामवन्यां गमनम् ।

चतुर्थः सर्गः । एकोननवतितमपत्रपर्यन्तम् ।

जम्बूद्वीपे पूर्वमहाविदेहे सुरपुरनगरनरेशो वज्रबाहुः । सुदर्शना तद्राज्ञी । मध्यग्रैवेयकाच्च्युतो देवश्चतुर्दशस्वप्नसूचितचक्रिजन्मा सुवर्णबाहुर्नाम तयोः पुत्रः । पुत्रं राज्ये न्यस्य वज्रबाहोर्दीक्षया केवलेन च मोक्षगमनं । राज्यं पालयतः सुवर्णबाहोरन्यदा वने गतस्य दिव्यगज दृष्ट्वा तदुपर्यारूढस्य गजेन वैताढ्ये उत्तरश्रेण्यां रत्नपुरनगरसमीपे मोचनम् । उत्तरश्रेणिस्वामिना मणिचूडेन सत्कारपूर्वकं नगरमध्ये नयनं, तं च स्वकन्या पद्मावती परिणायिता । तदनन्तरं तस्य पञ्चसहस्रविद्याधरकन्यानां पाणिग्रहणं । ततः स्वनगरागमनं । तत्र चतुर्दशरत्नानां प्राकट्यं । बहिर्निर्गतचक्ररत्नानुसारेण षट्खंडसाधनं नवनिधानलाभश्च । ततो नगराग-

तस्य चक्रिणो द्वादशवार्षिको राज्याभिषेक ऋद्धिवर्णनं च। अन्यदा समवसृतस्य जगन्नाथतीर्थंकरस्य वन्दनार्थं चक्रिणो गमनं। देशनायां सम्यक्त्वमिथ्यात्वस्वरूपं मिथ्यात्वस्य चाशीत्यादिभेदवर्णनं श्रुत्वेहापोहेन चक्रिणो जातिस्मरणं पूर्वजन्मचरित्रविषयं वैराग्यं, पञ्चमुष्टिलोचः, दीक्षाग्रहणं, गीतार्थत्वं, एकाकिविहारित्वं, विंशतिस्थानकाराधनं, विहारक्रमेण क्षीरगिरिगमनं च। नरकादुद्वृत्तेन कमठजीवेन सिंहत्वप्राप्तेन मुनिदर्शनजातद्वेषेण कृतप्रहारस्य मुनेराराधनया दशमे देवलोके विंशतिसागरायुषो त्पत्तिः। सिंहस्य चतुर्थपृथिव्यां गमनं, ततश्चोद्वृत्य तिर्यग्गतिभ्रमणं।

पञ्चमः सर्गः। षण्णवतितमं पत्रं यावत्।

सिंहजीवस्य नारकतिर्यग्गत्योर्भ्रमतो दरिद्रब्राह्मणपुत्रत्वेन जननं। तज्जनिमात्रादेव मातापितृमरणं। लोककृतकमठाभिधानस्य तस्य कष्टजीवनानुभवो धनिकदर्शनादिर्ष्यालुत्वमुद्विग्नत्वेन तापसदीक्षामाप्तिश्च।

जम्बूद्वीपे भरतक्षेत्रे गंगातीरे वाराणस्यां नगर्यामश्वसेनो राजा। वामादेवी राज्ञी। दशमदेवलोकाच्च्युत्वा चैत्रकृष्णचतुर्थ्यां विशाखायां वामाकुक्षाववतारः। तीर्थंकरजन्मसूचकचतुर्दशस्वप्नदर्शनफलश्रवणजातप्रमोदाया देव्याः क्रमेण पौषकृष्णदशम्यां विशाखायां सर्पलांछितस्य नीलवर्णस्य पुत्रस्य जननम्। दिक्कुमारीणामागमनं, तत्कृतसूतिकाकर्म, जन्मोत्सवः, इन्द्रासनकम्पेन तदागमनं देवकृतजन्मोत्सवः, इन्द्रकृतस्तुतिः, जिनस्य सूतिकागृहे मोचनं, नन्दीश्वरे देवकृतमहोत्सवः, प्रातरश्वसेनभूपकृतमहोत्सवः, पार्श्वनामस्थापनं, रूपवर्णनादि। अन्यदा कश्चित् पुरुष आस्थानस्थितमश्वसेनराजानमागत्य न्यवेदयत्—कुशस्थलनृपस्य प्रसेनजितः प्रभावती नाम कन्या। पार्श्वकुमारगुणश्रवणजातानुरागां तां पार्श्वकुमाराय स्वयंवरे प्रहेष्यन् राजा ज्ञाततद्वृत्तान्तेन कलिङ्गानां यवनभूपेन ससैन्येन रुद्धश्चिन्तां प्रपन्नो मंत्रीभिर्मंत्रयित्वा मंत्रिपुत्रं मां पुरुषोत्तमं भवत्समीपं प्रेषितवान्। तच्छ्रुत्वा तत्साहाय्याय जिगमिषुं पितरं

विज्ञप्य पार्श्वकुमारश्चचाल । तदा मार्गे गच्छन्तं कुमारं साहाय्यायेन्द्रो मातलिं सारथिं सरथं प्रेषितवान् । कुशस्थलागतं प्रभुं यवनराजो भयेन नमश्चक्रे । प्रसेनजिता प्रभावतीपाणिग्रहणाय प्रार्थितः प्रभुः पितुराज्ञाऽभावेन नानुमेने । ततः प्रसेनजितः प्रभावत्या सह वाराणस्यामागमनं । पितुराग्रहेण च प्रभुणा तस्याः पाणिग्रहणम् ।

षष्ठः सर्गः । पञ्चविंशत्युत्तरशततमं पत्रं यावत् ।

एकदा पार्श्वकुमारेण वातायनस्थेन पूजादिसामग्रीसहितान् जनान्नगरान्निर्गच्छतो दृष्ट्वा पृष्टो लोकः कमठतापसागमनं कथितवान् । तदा प्रभुरश्वारूढस्तत्र जगाम । तत्राग्निना दहत्काष्ठं सर्पगर्भं ज्ञानेन ज्ञात्वा प्रभुणा सर्वजनप्रत्ययार्थं द्विधा कारयित्वा सर्पो निष्कासितः । स च प्रभुदत्तनमस्कारमंत्रप्रभावेण मृत्वा धरणेन्द्रो जातः । प्रभुः स्वगृहमासदत् । विलक्षश्च कमठः प्रभूपरि द्वेषं वहन् मृत्वा मेघकुमारेषु मेघमालिनामा देवो जज्ञे ।

एकदा लोकाग्रहेण प्रभोरुद्यानगमनं तत्र च राजीमतीत्यागवृत्तान्तनिवेदकचित्रपट्टदर्शनेन वैराग्याविर्भावाच्छुभभावनारूढस्य लोकान्तिकदेवैः कृता दीक्षावसरविज्ञप्तिः । ततः प्रभाते पितुराज्ञया वार्षिकदानारंभः । वत्सरान्ते इन्द्रादिकृतमहोत्सवेन स्वामिनश्चारित्रस्वीकारः पौषकृष्णैकादश्यां प्रभोः प्रथमाष्टमस्य पारणकं धन्यसार्थवाहस्य गृहे जातं, ततस्तत्र पञ्चदिव्यभवनं । विहारक्रमेण प्रभोः कुंभसरोवरतीरे गत्वा कायोत्सर्गेणावस्थानं । तत्र महीधरनाम्नो गजस्यागमनं, प्रभुं दृष्ट्वा जातजातिस्मृतिना तेन प्रभोः कृता कमलपूजा । तज्ज्ञात्वा समीपस्थचंपापुरीस्वामिनः करकंडोः तत्रागमनं । प्रभुस्तु पूर्वमेव विहारं कृतवान् । ततस्तत्र नृपेण चैत्यं कारयित्वा प्रभुप्रतिमा प्रतिष्ठापिता, तच्च तीर्थं कलिकुंडाभिधं सप्रभावं जातं । व्यन्तरभूतेन हस्तिना तत्तीर्थमधिष्ठितं ।

शिवपुर्यगतस्य प्रभोः कौशंबाभिधाने वने कायोत्सर्गेणावस्थानं। उपकारं स्मरता धरणेन्द्रेण तत्रागतेन प्रभोरुपरि छत्र धृतं। प्रभुर्विहार कृतवान्। धरणेन्द्रः स्वस्थानं जगाम। लोकैस्तत्राहिच्छत्रा नाम पुरी वासिता। प्रभू राजपुर गतवान्। तत्रेश्वरनाम्नो भूपतेः प्रभुं नत्वेहापोहेन जातं जातिस्मरणं। मंत्रिणा पृष्टेन राज्ञा पूर्वभवः कथितः। प्रभुर्विजहार। तत्र नृपकारितचैत्यं कुर्कुटेश्वर-नाम्ना प्रसिद्धं जातं।

प्रभुः कचिदुपतापसाश्रमं कायोत्सर्गं कृतवान्। तत्रावधिना ज्ञातपूर्वभववैरेण मेघमालिनाऽऽगत्य गजव्याघ्रचित्रकसर्पवृश्चिकदेवाङ्ग-नारजोवृष्टिवेतालाद्यनेकोपसर्गाः कृताः। प्रान्ते मेघवृष्ट्या प्रभोर्नासाग्रं यावज्जले समागते आसनकंपेन धरणेन्द्रागमनं, तेनाधः कमलमुपरि च च्छत्रं निस्तारयतोपसर्गं निवार्य मेघमाली हकितः, ततः स देवाधमो वृष्टिं संहृत्य नत्वा च स्वस्थानमियाय, धरणेन्द्रोऽपि गतः।

दीक्षादिनाच्चतुरशीतितमे दिने चैत्रकृष्णचतुर्थ्यां विशाखायां घातिकर्मक्षयेण प्रभोः केवलोत्पत्तिः, देवकृतसमवसरणरचना, तद्वर्णनं, अश्वसेननृपस्य वर्द्धापनेन सपरिवारस्यागमनं, नृपकृतः प्रभुस्तवः। भगवद्देशनायां दानधर्मव्याख्या, ज्ञानदानस्योत्तमत्वं, तदुपरि धनमित्रकथा, अभयदानव्याख्यायां वसन्तककथा, सुपात्रदानविषये वणिक्पुत्रचतुष्टयकथा, शीलधर्मोपरि मदनरेखाकथा, तपोधर्मोपदेशे सनत्कुमारचक्रिकथा, भावधर्माख्यावसरे पुंडरीककंडरीककथा चेति। अश्वसेनादीनां प्रतिबोधः। वामादेवीप्रभावती-सहितेन राज्ञा दीक्षांगीकृता। भगवतो गणधरदशकस्थापना देवच्छन्दगमनं च।

## सप्तमः सर्गः। द्विपञ्चाशदुत्तरशततमं पत्रं यावत्।

आद्यगणधरार्यदत्तदेशनायाममात्यस्य गृहिधर्मपृच्छया सम्यक्त्वमूलं द्वादशव्रतव्याख्यानं सातिचारं, श्राद्धव्रतपालनाशक्तस्या-वश्यकता जिनपूजाकरणे, जिनपूजया तीर्थंकरनामकर्मोपार्जकस्य रावणस्य कथा, पूजायाः प्रकारत्रयं तत्र पुष्पपूजोपरि वयरसेनकथा,

अक्षतपूजाविषये शुकराजकथा, भावपूजाव्याख्यानावसरे च वनराजकथा। समाप्तायां देशनायां समग्रसभायाः प्रभुं वन्दित्वा स्वस्थानगमनं। पार्श्वयक्षपद्मावतीदेव्योरधिष्ठायकत्वं। प्रभोर्विहारश्च।

अष्टमः सर्गः। द्विषष्ट्यधिकशततमं पत्रं यावत्।

पुंड्रदेशे साकेतनपुरोपवने प्रभोः समवसरणं। सागरदत्तसार्थवाहवृत्तान्तः। प्रभोर्देशनया सागरदत्तस्य वैराग्येण तत्रैव शुभभावनया केवलोत्पत्तिः, प्रभोः शिष्यचतुष्टयस्य तद्भवसिद्धिश्रवणतः परिव्रज्याशैथिल्यं, पुनश्च पश्चात्तापेन प्रभुपार्श्वागमनं, शुभभावनया केवलोत्पत्तिश्च।

बन्धुदत्तकथान्तर्गतश्रीगुप्तकथानकेन पल्लीपतेः प्रतिबोधः। मधुबिन्दुदृष्टान्तः सोपनयः। बन्धुदत्तपल्लीपत्योर्भवनिस्तारः। प्रभोः परिवारः। संमेतशिखरगमनं। तत्र श्रावणशुक्लाष्टम्यां निर्वाणं। इन्द्रादीनामागमनं तत्कृतनिर्वाणमहोत्सवश्चेति। प्रशस्तिश्चेति।

एतत्पुस्तकं श्रीजैनधर्मप्रसारकसभया पूर्वं मुद्रितम्। तस्य पुनर्मुद्रणे प्रार्थितेन जैनधर्मप्रसारकसभाध्यक्षेण श्रीमान् कुंवरजीभाइ आणंदजी' इत्यनेन आज्ञा प्रदत्ता, इत्यत एतत्पुस्तकमनुसृत्य संशोध्य पुनर्मुद्रितम्, तथापि दृष्टिदोषाद् प्रमादवशाद् मुद्रायन्त्रदोषाद्वा या काचनाशुद्धयो भवेयुः ताः सहृदयैः संशोधयितव्याः।

प्रकाशकः

# अथ कथानुक्रमः ।

श्री

# श्रीपार्श्वनाथचरितम् ।

श्रीपञ्चपरमेष्ठिभ्यो नमः

प्रोद्यत्सूर्यसमं सुरासुरनरैः संसेवितं निर्मलं श्रीमत्पार्श्वजिनं जिनं जिनपतिं कल्याणवल्लीघनम् ।
तीर्थेशं सुरराजवन्दितपदं लोकत्रयीपावनं वन्देऽहं गुणसागरं सुखकरं विश्वैकचिन्तामणिम् ॥ १ ॥
भास्वद्देवविनिर्मिते वरतरे सिंहासने संश्रितं चञ्चच्चामरवीज्यमानमनिशं छत्रत्रयीराजितम् ।
रूप्यस्वर्णमणिप्रभासितवरैर्वप्रत्रयैर्भूषितं वन्देऽहं जिनपार्श्वदेवविमलं भानूयमानोदयम् ॥ २ ॥
वीणापुस्तकधारिणी भगवती देवेन्द्रसंसेविता वाग्देवी जयतात् सुरासुरनरैः संपूजिता सन्मुखा ।
संसारार्णवतारिणी विजयिनी दारिद्र्यनिर्नाशिनी विघ्नध्वान्तहरी सुसौख्यजननी सर्वार्थसंसाधिनी ॥३॥
प्रणम्य भारतीं भक्त्या नत्वा गुरुपदांबुजम् । चरित्रं पार्श्वनाथस्य गद्यबन्धेन कीर्तये ॥ ४ ॥

तथाहि—जम्बूद्वीपाभिधे द्वीपे लक्षयोजनविस्तृते दक्षिणार्धे भरतं समस्ति । तत्र पोतनपुराभिध नगर वर्तते । तच्च द्वादश-

योजनायामं नवयोजनविस्तृतं दिव्यप्रासादसुन्दरं विपणिश्रेणिविराजितं नररत्नैरलंकृतम्। तत्रारविन्दोपमः श्रीमानरविन्दनरेश्वरो राज्यं चरीकर्ति । स च न्यायवान् प्रजापालको जितारिर्विचक्षणो धर्मरतः श्रद्धालुः परोपकारी प्रतापवान् । तस्य गुणधारिणी धारिणीनाम्नी प्राणप्रिया पट्टराज्ञी समस्ति । सा च परोपकारिणी न्यायवती शीलवती गुणवती धर्मवती पुत्रवती । तस्मिन् राज्ञि राज्यमनुशासति मति प्रजाः सर्वा मुदमुदिताः सन्ति। तस्य नृपस्य विश्वभूतिपुरोहितोऽस्ति। स च विद्वान् पंडितो न्यायशास्त्रधर्मशास्त्रकुशलः श्राद्धधर्मप्रवीणो राजमान्यो महर्द्धिको राज्ञः पौरोहित्यं करोति, प्रतिक्रामति च । तस्यानुद्धरा नाम पतिव्रताव्रतप्रिया सद्धर्मचारिणी शीलालंकारधारिणी प्राणवल्लभास्ति । तयोर्मरुभूतिकमठनामानावङ्गजौ स्तः । तावेवं निपुणौ प्रवीणौ पंडितौ । मरुभूतिस्तु प्रकृत्या सरलस्वभावः सत्यवादी धर्मिष्ठः सज्जनो गुणवान् । कमठस्तु दुष्टो लंपटो दुराचारः कपटी । यतः—

एकोदरसमुत्पन्ना एकनक्षत्रजातकाः । न भवन्ति समशीला यथा वदरीकंटकाः ॥ १ ॥

कमठस्यारुणा नाम प्राणप्रियाऽस्ति। मरुभूतेस्तु वसुन्धराभिधाना वल्लभास्ति। तावेव कमठमरुभूती ताभ्यां स्त्रीभ्यां सह पञ्चभिः शब्दरूपरसस्पर्शगन्धाख्यैर्विषयैः कालं निन्यतुः। ततो विश्वभूतिपुरोहितः पुत्रयोर्गृहभारमारोप्य जिनधर्मसुधारसास्वादं केवलं गृह्णाति। तृष्णां त्यक्त्वा वैराग्येणैकाग्रमनाः सामायिकपौषधादिकं चकार। कालान्तरेण विविक्ताचार्यगुरोः पार्श्वे गृहीतानशनः परमेष्ठिमंत्रमेकमनाः स्मरन् विश्वभूतिः स्वतनुं त्यक्त्वा सौधर्मत्रिविष्टपे सुरोऽभवत्। ततः पतिवियोगविधुराऽनुद्धराऽप्युग्रतपस्तप्त्वा विपद्य विश्वभूतिसुरस्याङ्गना जाता। ततः कमठमरुभूती पित्रोः प्रेतकार्यं कृत्वा स्वकुटुंबचिन्तायां व्यग्रमानसौ जातौ, कालेन विगतशोकौ संजातौ। मरुभूतिस्तु जनकवद् राज्ञः पौरोहित्यं करोति । एकदा हरिश्चन्द्रमुनीश्वरश्चतुर्ज्ञानी सदुपशमामृतसिक्तात्मा

भव्यकमलानि प्रतिबोधयन् तत्र पोतनपुरादूरवने समवासरत्। पौरास्तदागमनं ज्ञात्वा स्वं धन्यं मन्यमाना मुनीश्वरस्य वन्दनार्थं समाजग्मुः। नृपकमठमरुभूतिप्रभृतिः सकलोऽपि राजलोको मुनिवन्दनार्थमागतः। सर्वेऽपि नृपाद्या मुनीश्वरं भावेन प्रणम्य यथास्थानमुपाविशन्। तत्र मुनीश्वरोऽपि ज्ञानेन मरुभूतिं भाविपार्श्वजिनजीवं ज्ञात्वा विशेषतस्तमुद्दिश्य प्रतिबोधयितुं धर्मदेशनां प्रारब्धवान्। तथाहि—

भवकोटीदुष्प्रापामवाप्य नृभवादिसकलसामग्रीम्। भवजलधियानपात्रे धर्मे यत्नः सदा कार्यः ॥१॥

असावनक्षरो लेखो निर्देवं देवमन्दिरम्। निर्जलं च सरो धर्मं विना यन्मानुषो भवः ॥ २ ॥

भो भविका ! विशेषेण कर्णपुटैराकर्णयध्वम्। तथा च—

धनैश्वर्याभिमानेन प्रमादमदमोहिताः। दुर्लभं प्राप्य मानुष्यं हारयध्वं मुधैव मा ॥ ३ ॥

छिन्नमूलो यथा वृक्षो गतशीर्षो यथा भटः। धर्महीनो धनी तद्वत् कियत्कालं ललिष्यति ॥ ४ ॥

धरान्तःस्थं तरोर्मूलमुच्छ्रयेणानुमीयते। अदृष्टोऽपि तथा प्राच्यधर्मो लक्ष्येत संपदा ॥ ५ ॥

मूलभूतमतो धर्मं सिक्त्वा भोगफलं बुधाः। गृह्णन्ति बहुशो मूढास्तमुच्छिद्यैकदा पुनः ॥ ६ ॥

कुलं गतमलं कामानुरूपं रूपमव्ययम्। विश्वभोग्यं च सौभाग्यं श्रीविलासो विकस्वरः ॥ ७ ॥

अनवद्या पुनर्विद्या कीर्तिः स्फूर्तिमती सती । अभिरामो गुणग्रामः सर्वः धर्मादवाप्यते ॥ ८ ॥ युग्मम्
पक्षपातो ऽपि धर्मस्य जयाय ललिताङ्गवत् । तद्भृत्यसज्जनस्येव क्षयाय पुनरन्यथा ॥ ९ ॥

तथाहि–अस्मिन्नेव जंबूद्वीपे भरतनामनि क्षेत्रे श्रीवासनाम पत्तनं वरीवर्ति । तत्र नरवाहनो नाम भूपतिर्दासीकृताशेषभूपतिः राज्यं चरीकर्ति । तदीयदयिता कमला कमलानना राज्ञी समस्ति । तयोरङ्गजो ललिताङ्गाभिधः सुधीर्धीमान् द्विसप्ततिकलाकुशलः शास्त्रशस्त्रकलापटुः प्रदीप इव निजकुलमुद्योतयामास । दीपे कश्मलं भवति, तस्मिंस्तु कश्मलं न । तस्य लघोरपि महान् गुणोदयः । यतः—

न तेन वृद्धो भवति येनास्ति पलितं शिरः । युवापि गुणवान् यो वै तमेव स्थविरं विदुः ॥ १ ॥

तस्य ललितांगस्य भूरिगुणस्यापि दानगुणे विशेषतो मतिः । यथाऽर्थिनि दृष्टे रतिस्तथा कथाकाव्यवनिताश्वगजलीलादिषु नो रतिः । यस्मिन् दिने याचको नो आयाति स दिनो गलिततिथिवन्न गण्यते । तस्य सुतलाभादपि अर्थ्यागमोऽधिकं शस्यते । तस्य दानव्यसनिनोऽदेयं किमपि नाभवत् । अथ तस्य सज्जनो नाम्ना प्रकृत्या च दुर्जनो भृत्याधमः समभवत् । कुमारेण वार्यितोऽपि कुमारस्यैव प्रतिकूलकृत् । यथा जलैः पुष्टोऽपि वार्धेर्वडवानलः शोषाय स्यात्तथा सज्जनः कुमारस्य दुर्जनरूप एव । तथापि कुमारस्तं भृत्याधमं न त्यजति । यथा चन्द्रः कलंकं न त्यजति । अन्यदा भूपतिः कुमारगुणरञ्जितः प्रीतमानसः स्वकीयं हाराद्यलंकारं महामूल्यं ददौ । तमप्यलंकारं राजसूरेकदाऽर्थिने ददाति । तत्सर्वं सज्जनो गत्वा नृपतेर्विज्ञापयामास । तच्छ्रुत्वा हुताशनवन्नृ-

पतिरन्तरदीपिष्ट। तदा महीपतिः रहः कुमारमाकार्य कोमलगिरा शिक्षयामास–हे वत्स! तव जरसा विनाऽपि गुणगणैर्वृद्धत्वं समागतं, तथापि तव योग्यत्वान्मया किञ्चिदुपदिश्यते, तच्छृणु, वत्स! राज्यं बहुकार्यनिरन्तरम्। त्वं बालोऽसि। इदं सप्ताङ्गं सकलं राज्यं तवैवास्ति। सावधानतया करंडस्थभुजंगवच्चिन्त्यम्। फलितक्षेत्रवन्नित्यं प्रयत्नतो रक्षणीयम्। नव्यारामवन्मुहुर्मुहुः सेवनीयम्। कस्यापि न विश्वासो विधीयते। महीभुजा कोशेन दृढस्कन्धो विधीयते। स्वार्थैककरणं गजाश्वादिपरिवारवृद्धिकरणं प्रतिपाद्यते। स्वयं निपुणोऽसि, विचक्षणोऽसि। एष यद्यपि ते सर्वगुणोत्तमो दानगुणोऽस्ति, परं स्तोकं स्तोकं दीयते। अत्यासक्तिर्न शोभना। यतः—

तरुदाहोऽतिशीतेन दुर्भिक्षमतिवर्षणात्। अत्याहारादजीर्णं च अति सर्वत्र वर्जयेत्॥ १॥
अतिदानाद्बलिर्बद्धोऽतिगर्वेण च रावणः। अतिरूपाद् धृता सीता अति सर्वत्र वर्जयेत्॥ २॥

अतिकर्पूरभक्षणाद्दन्तपातः संभवेत् तस्माद् द्रव्ये यत्नः कार्यः। भार्यापुत्रादिपरिवारस्तावद्यावद् द्रव्यसमागमः। विशुद्धोऽपि गुणव्रातो द्रव्यं विना निष्फल एव। तस्मात्त्वया द्रव्यव्ययो यथा तथा न कार्यः"। कुमारस्तदुपदेशामृतं पीत्वा मुदा ह्यचिन्तयत्–"धन्योऽहं, यस्य मे तातः स्वयमेव प्रत्यक्षमित्यनुशंसति। तदिदं स्वर्णं सौरभं। मातापित्रोर्गुरूणां च शिक्षणादपरं जनेऽमृतं नास्ति" इति चिन्तयित्वोवाच—'पूज्यादेशः प्रमाणं मे' इति चोक्त्वा भक्त्या कृतनमस्कारः कुमारः स्वगृहं ययौ। ततः पितुराज्ञया तस्य स्तोकतरं यच्छतो याचकानां मुखादपवादः प्रववृधे। ततः कतिपयैर्याचकैः संमील्य कुमारस्योक्तम्– 'भो कुमार! दाने-

श्वरशिरोमणे आकस्मिकं किमिद्मारब्धम् ? चिन्तामणिसमो दानेन भूत्वा भूतलेऽटोलपाषाण इवेदानीं कथं भवान् संजातोऽसि ? जगति दानमेकं श्रेष्ठम् । मानवो दानेन विना महर्द्धिरपि न शोभते, यथा स्थूलांगा गौः क्षीरं विना नार्हति । यतः—

कीटिकासञ्चितं धान्यं माक्षिकासंचितं मधु । कृपणैः संचिता लक्ष्मीरन्यैरेवोपभुज्यते ॥ १ ॥

संग्रहैकपरः प्राप समुद्रोऽपि रसातलम् । दाता तु जलदः पश्य भुवनोपरि गर्जति ॥ २ ॥

धनांगपरिवाराद्यं सर्वमेव विनश्यति । दानेन जनिता लोके कीर्तिरेकैव तिष्ठति ॥ ३ ॥

भो कुलदीपक कुमार तव मतिविपर्ययः कथं जातः ? सन्तो नांगीकृतं व्रतं मुञ्चन्ति । यतः—

कस्यादेशात्क्षपयति तमः सप्तसप्तिः प्रजानां छायां कर्तुं पथि विटपिनामञ्जलिः केन बद्धः ।
अभ्यर्थ्यन्ते नवजलमुचः केन वाःस्रष्टिहेतोर्जात्यैवैते परहितविधौ साधवो बद्धकक्षाः ॥ १ ॥

आहृतं नैव मुञ्चन्ति कदापि पुरुषोत्तमाः । गन्धमुक्तं वृषांकोऽपि धत्तूरकुसुमं यथा ॥ २ ॥

हरो विषं मृगं चन्द्रः समुद्रो वडवानलम् । अरम्यमपि मुञ्चन्ति नाहृतं किं पुनः प्रियम् ॥ ३ ॥

शशिनि खलु कलंकं कंटकाः पद्मनाले जलधिजलमपेयं पंडिते निर्धनत्वम् ।
दयितजनवियोगो दुर्लभत्वं सुरूपे धनपतिकृपणत्वं रत्नदोषी कृतान्तः ॥ ४ ॥

अतः कारणत्रयादङ्गीकृतं दानव्रतं न मोक्तव्यम् । यतः—

समुद्राः स्थितिमुज्झन्ति चलन्ति कुलपर्वताः । प्रलयेऽपि न मुञ्चन्ति महान्तोऽङ्गीकृतं व्रतम् ॥५॥

ततो ललितांगकुमारो निशम्यैवमिदमचिन्तयत्—'अथाहं किं कुर्वे ? व्याघ्रदुस्तटीन्यायः संजातः । एकतः पितुराज्ञा मेऽनुलंघ्या, अन्यतोऽपवादो दुस्तरः । यद्भवति तद्भवतु' । इति विचार्य तथैव दातुं पुनः प्रवृत्ते । तज्ज्ञात्वा नराधिपः कुमारस्योपरि रोषं कृत्वा भृत्यैः सह प्रवेशद्वारं निरोधयामास । अथात्मापमानेन वाढं हृदि कोपेन च पूरितश्चिन्तयति—'अहो मम यथा दानव्यसनं, नैवं राज्यरक्षा । अथ च जन्तुप्रीतिकरं दानं ददतो मे पितुरपमानं जातं, तदत्र मम स्थातुमतः परं न युक्तं, देशान्तरगमनं युक्तमेव । यतः—

> देशाटनं पंडितमित्रता च पणांगना राजसभाप्रवेशः ।
> अनेकशास्त्रार्थविलोकनं च चातुर्यमूलानि भवन्ति पञ्च ॥ १ ॥
> दीसइ विविहचरियं जाणिज्जइ सज्जणदुज्जणविसेसो ।
> अप्पाणं च कलिज्जइ हिंडिज्जइ तेण पुहवीए ॥ २ ॥

इति निश्चित्य कुमारो निशि निर्जने गृहान्निर्गूढं निर्गत्य वरतुरंगममारुह्यैकदिशं प्रति चचाल । तदा स भृत्याधम इंगितज्ञः सज्जनो निजतुरंगमारुह्य तमन्वगात् । क्रमेण तौ द्वावपि देशान्तरे प्रस्थितौ । अन्यदा पथि प्राह कुमारः—'भो भृत्य किञ्चिद्विनो-

दक्षद्वाक्यं वद ' । तदा तेनोचे—'देव कथ्यतां, पुण्यपापयोः किं श्रेष्ठम् ? ' । कुमारोऽवादीत्—'अरे मूर्ख किमिदं गदितं त्वया ? तवाभिधानं सज्जनः, परं गुणैस्तु दुर्जन एव। यतः—

**भौमे मंगलनाम वृष्टिविषये भद्रा कणानां क्षये वृष्टिः शीतलिकातितीव्रपिटके राजा रजःपर्वणि ।**
**मिष्टत्वं लवणे विषे च मधुरं राःकंटकाढ्या यथा पात्रत्वं तु पणांगनासु रुचिरं नाम्ना तथा नार्थतः ।।१।।**

अबलाबालगोपालहालिका अपि स्पष्टं वदन्तीदं यज्जयो धर्मादेव, अधर्मात्क्षय एव" । तच्छ्रुत्वा सज्जनः प्राह—" देव सत्यं, अहं मूर्खः, परं कथय, कीदृशौ धर्माधर्मौ ?" । कुमारेण भणितं—"भो दुरात्मन् शृणु—

**वचः सत्यं गुरौ भक्तिः शक्त्या दानं दया दमः । अधर्मः पुनरेतस्माद्विपरीतोऽसुखावहः ।।१।।**

पुनः सज्जनो भणति—"समयबले कदाचिदधर्मोऽपि सुखावहः । नो चेदिदानीं तव धर्मिणोऽपीदृश्यवस्था कथं ? अतोऽधर्मसमयोऽयम् । धनं चौर्यादिनाऽर्जय" । कुमारोऽप्याह—"अरे पापिष्ठ दुष्ट शृणु, अश्रोतव्यमिदं वचो मा वादीः । धर्मादेव जयः । यस्तु कोऽप्यजयः, तदन्तरायकर्मकारणम् । अन्यायेन तु या लक्ष्मीः सा प्रदीपनादुद्योतः" । पुनरपि भृत्याधमोऽवक्—"स्वामिन् अरण्यरुदितैः किं ? अग्रेतनग्रामे ग्रामीणनराः पृच्छ्यन्ते । ते चेदधर्माज्जयं वक्ष्यन्ति तदा त्वं किं करिष्यसि ?" । कुमारेणोचे—"तवाहं तुरंगमादिसामग्रीं सकलां मदीयां दत्त्वा यावज्जीवं भृत्यभावं करिष्ये" । तावेवं कृतमर्यादौ वेगाद् ग्रामं गतौ । तत्र वृद्धान् पप्रच्छतुः—"भो उत्तमा आवयोश्चिरं संशयोऽस्ति यज्जयो धर्मादधर्माद्वा ? तन्निर्णीय सम्यक् कथ्यताम्" । ते तु दैवादसंभाव्यनवीनप्रश्ने सहसेद-

मूचुः-'अधर्माजय एवाधुनास्ति'। तच्छ्रुत्वा तौ मार्गेऽग्रतश्चेलतुः। पथि सोपहासं भृत्याधमोऽवादीत्-"भोः सत्यैकधन धार्मिक मुञ्चामुं तुरंगं, शीघ्रं भृत्यभावं मदीयं कुरु"। कुमारेण चिन्तितम्—

"राज्यं यातु श्रिया यान्तु यान्तु प्राणा विनश्वराः। या मया स्वयमेवोक्ता वाचा मा यातु शाश्वती ॥१॥

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा

पुराकृतं कर्म तदेव भुज्यते स्वकर्मसूत्रग्रथितेहि लोकः शरीर रे निष्ठुर यत्त्वया कृतम् २

इति विमृश्य कुमारेणोक्तं—"गृहाणेमं तुरंगं, अहं तव पृष्ठचारी सदास्मि"। ततः स भृत्याधमोऽश्वं गृहीत्वा शीघ्रमश्वारूढो वेगाद् व्रजन् सहर्षं कुमारमनुधावन्तं श्रमखेदयुतमवलोक्येदमब्रवीत्—"भोः कुमार तवेदं धर्मपक्षपातभवं फलं, अद्याप्याग्रहं मुञ्च। अश्वं गृहाणाधर्मादेव जय इत्युक्त्वा"। कुमारोऽवोचत्—"आः पाप वृथा ते सज्जनाभिधा। किंच भो दुर्मते दुर्मतिं यच्छन् व्याघ्रादप्यधिकोऽसि। यथा वने कोपि व्याध आकर्णान्ताकृष्टसायको मृगीवधार्थमधावत्, तदा मृग्योक्तं—"अहो व्याध क्षणं प्रतीक्षस्व, मदीयापत्यानि क्षुधया बाध्यमानानि मदीयागमनाशयाऽवतिष्ठन्ति। अहं तानि स्तन्यपानं कारयित्वा तवान्तिकं शीघ्रमायामि। चेन्नायामि तदा मया ब्रह्महत्यादिपञ्चातिपातकान्यंगीकृतानि"। तेनोक्तं—'न प्रत्ययः'। पुनस्तयाऽभाणि—"भो व्याध यः पृच्छतो विश्वस्तस्य दुर्मतिं दत्ते तस्य पापेन जगृहेऽहं यदि सत्वरं नायामि"। ततस्तेन मुक्ता, साप्यर्भकाणां स्तन्यपानं कारयित्वाशु तत्र व्याधसमीपे समागता। व्याधं पप्रच्छ-'भो व्याध तव प्रहारतः कथं छुटये?'। तदा व्याधेन चिन्तितं-'पशवोऽपि पापभीताः,

अहं कथं दुर्मतिं यच्छामि ? ' इति विचार्य तेन कथितं–' भद्रे मम दक्षिणे पार्श्वे चेत्प्रयासि तदा मुञ्चामि' । तया तथैव कृतम् । सा मुक्ता जिजीव च । अतः कारणात्सन्तो विपद्यपि गताः पापकर्म न कुर्वते । क्षुधितोऽपि हंसः कुर्कुटवत् कृमिकीटकान्नात्ति । निर्गुणस्य क्षणविनाशिनः शरीरस्य धर्म एव शरणम् । यदि ग्राम्यैरजानद्भिर्धर्मो न बहुमानितस्तदा किं धर्ममाहात्म्यं गतम् ? द्राक्षासु करभो मुखं वक्रं कुर्यात्तदा किं द्राक्षामाधुर्यं गतम् ? एक एव सुहृद्धर्मः " । पुनः सज्जनो भृत्याधमः प्राह—" कुमार त्वं महाकदाग्रही । यथा पुरा कोऽपि ग्राम्यो जनन्याऽभाणि–' रे वत्स गृहीतोऽर्थो न मोक्तव्यः ' । अन्यदा स महाबलं वृषभं पुच्छे महाबलेन जग्राह । तेन वृषभेण स बाढं हन्यमानोऽपि पुच्छं न मुञ्चति । तदा जनैः मुञ्च मुञ्चेति प्रोच्यमानोऽपि स तु पुच्छं न मुमोच । तद्वद्भवानपि कदाग्रही । एवं चेत्तर्हि भूयोऽप्यन्यग्रामीणजनाः पृच्छ्यन्ते । तेऽपि तथैव वदन्ति तदा तव कः पणः ? चक्षुरुत्पाटनं विनान्यत्किमपि नास्ति" कुमारेण तदपि वचोऽमर्षादङ्गीकृतम् । ततोऽग्रेतनग्रामे जनान् पप्रच्छतुः । तैरपि भवितव्यनियोगतः प्राग्वद् व्याख्यातम् । तौ तथैव मार्गे प्रस्थितौ । तदा सज्जनः पुनरूचिवान्–"अहो कुमार अहो धर्मकर्मैकनिधे अहो स्वकीयवाक्पालनपरायण ब्रूहि, किमिदानीं करिष्यसि ? " । कुमारस्तस्योल्लुंठवचनैः शाणघृष्टकृपाणवद् भृशमुत्तेजितस्वान्तस्तत्क्षणमरण्ये वटस्याधो गत्वोवाच– " अहो वनदेवाः शृण्वन्तु, अहो लोकपाला यूयं साक्षिणो भवत, एष एव केवलं जयी धर्मो मम शरणं भूयात् " । इत्युक्त्वा नेत्रे शस्त्रिकयोत्पाट्य सज्जनाय समार्पयत् । तदा स भृत्याधमोऽवक्–" अहो कुमार सत्यशौंड धर्मशाखिनः फलमिदं भुंक्ष्व " । इत्युक्त्वा हयारूढो हास्यं कुर्वन् ययौ । अथ तत्र कुमारो दुस्तरापन्नदीपूरकल्लोलमग्नमानसो दध्यौ–"किमिदमसंभाव्यं संजातम् ? आः मम धर्मपक्षपातं कुर्वतः किमिदं निष्पन्नम् ? भवतु ममेदं दुष्कर्मफलम् । जगत्त्रये धर्म एव जयहेतुर्ध्रुवम्" । तदा तस्य महादुःखेन सूर्योऽस्तं प्राप्तः

तदा पक्षिणोऽपि शब्दायमाना दुःखेन नीडवेश्मसु निलीना इव। दिङ्मुखानि तमसा श्यामताभगुः। अत्रान्तरे तत्र वटे भारंडपक्षिण एकत्र संमीलिताः स्वैरं संलापमेवं चक्रिरे—"येन यदृष्टं श्रुतं वा क्वापि कौतुकं तत्कथ्यताम्"। तदैकेन कथितं—"अहं कथयामि, निशम्यताम्। इतः प्राच्यां दिशि चंपा नाम महापुरी वर्तते। तत्र भुवनविख्यातो जितशत्रुर्महीपती राज्यं करोति। तस्य पुष्पावती नाम्ना पुत्री जीवितव्यादपि वल्लभा सुन्दरी सुरूपा चतुःषष्टिकलाप्रवीणा चास्ति। परं तु नेत्राभावतः सर्वं वृथैव। एकदा भूपतिस्तां तथाविधां दृष्ट्वा चिन्तातुरोऽभवत्—"अहो विधिविलसितं किं करोति?। अथवा दैवोपालंभैरलम्। कोऽप्युपायो विधीयते" इति निश्चित्य नृपो घोषणामिति कारयामास—"अहो जना जितशत्रुराज्ञः पुत्रिकाया लोचने सुखं यः करिष्यति तस्मै नृपः कन्यां निजराज्यस्यार्धं च प्रदास्यति"। तच्छ्रुत्वा देशान्तराद्विविधा नेत्रचिकित्सकाः समेता विविधोपायं कुर्वन्ति। परं किञ्चिदपि नेत्रे सुखं न जातम्। नृपश्चिन्तया पीडितः। यतः—

बिन्दुनाप्यधिका चिन्ता चिता चिन्तासमा न हि। चिता दहति निर्जीवं चिन्ता जीवन्तमप्यहो ॥१॥

तथापि स राजा नित्यं पुरे पटहोद्घोषणां कारयति। प्रातः तेन दुःखेन राजा राज्ञी पुत्री च काष्ठभक्षणं करिष्यति। पश्चात्र जाने किं भविष्यति। प्रातरास्माभिस्तत्र गमिष्यते"। तच्छ्रुत्वैको लघुपुत्रको विस्मयात् पप्रच्छ—'तात नेत्रसंभवे कश्चिदुपायोऽस्ति'? तदा वृद्धोऽवक्—"वत्स जात्यंधायाः कथं नेत्रे भवतः? तथापि मणिमंत्रमहौषध्योऽचिन्त्यप्रभावाः सन्ति"। तेनोक्तं—'तर्हि कथ्यताम्'। वृद्ध ऊचे—"रजन्यां नैव कथ्यते। उक्तं च—

दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च। संचरन्ति महाधूर्ताः स्थाने स्थाने विशेषतः ॥ १ ॥"

पुनर्निर्बन्धेन शिशुस्तं वृद्धं प्रति प्रष्टवान्। वृद्धेनोक्तं—"अस्य तरोः स्कन्धदेशे या वल्ल्यभित आश्लिष्य तिष्ठति, तदीयरसात् भारंडपक्षिविट्संसिक्तात् सद्यो नव्यनेत्रोद्भवो जायते"। इत्थं संलपनात्तेषां [1]प्रमीला समागता। कुमारोऽपि तत्र वटाधस्थस्तत्सर्वं श्रुत्वाऽचिन्तयत्—"किं सत्यं वाऽसत्यं वा? अत्र को भ्रमः? सतामापदुच्छेदे धर्म एव जागर्ति"। इति निश्चित्य करस्पर्शाल्लतां छुरिकया च्छित्त्वा तत्र पतितां भारंडपक्षिणो [2]विपं लात्वा कराभ्यां संपिष्याक्षिकूपावपूरयत्। मुहूर्तेनैकेन सद्यो नवोद्भिन्नदिव्यनेत्रे जाते। सर्वं निरूपयामास। संतोपं प्रापः। यतः—

भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः स्वजनतामुपयाति तस्य।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १ ॥
वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा।
सुप्तं प्रमत्तं विपमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥ २ ॥

सर्वोऽयं धर्मानुभावः। अथ तत्र गत्वा तां कन्यां पटुं करोमि। एभिः सार्धं याम्यहं"। इति विमृश्य तं वटमारुह्य पक्षिपक्षांतर्निलीय तस्थौ। निशात्यये पक्ष्युड्डीय चंपोद्यानवनं ययौ। ततः कुमारो निर्गत्य सरसि स्नात्वा कृतस्वादुफलाहारः पुरीं प्रति चलितः। पटहोद्घोपणां शृण्वन् प्रतोलीद्वारमागतः। तत्र श्लोकमेकं लिखितमवलोक्य वाचयति। यथा—

[1] निद्रा [2] विष्ठा.

जितशत्रोरियं वाचा मत्पुत्रीनेत्रदायिने । राज्यस्यार्धं स्वकन्यां च प्रदास्यामीति नान्यथा ॥ १ ॥

श्लोकमेन वाचयित्वा हृदि मुदित आसन्नस्थनराणामेवमुवाच—" भो भो नराधिपं कथयन्तु, कोऽपि विद्यावान् सिद्धपुरुषः समागतोऽस्ति । स कथयति, अहं तव पुत्रीं दिव्यनेत्रां करिष्ये इति" । तैर्नृपस्याग्रे तथैवोक्तम् । तेषां राजा बहु द्रव्यं दत्तवान् । उत्कंठितश्च तं शीघ्रमाकार्य गाढमालिङ्ग्य आसनं दत्त्वा बादतरं मानं दत्त्वा तं पप्रच्छ—"वत्स कुतः समागतः ? किं कुलं का वा जातिः किं नाम" ? । तच्छ्रुत्वा कुमारोऽवादीत्—"स्वामिन् किं बहु-पृच्छ्यमानेन ? किं कृत्यं ? शीघ्रमुपदिश्यतां, तदेवोत्तरम्" । राज्ञा चिन्तितं—"कोऽपि सत्त्ववान् नरः परार्थकरणरसिकः । अस्य कुलादिकमनुमानेनोत्तमम्"। इति विमृश्य तेन समं कन्यागृहं ययौ । 'अस्या मत्पुत्र्या नरोत्तम दिव्यनेत्रे कुरु' इति नृपेणोक्ते स सुगन्धिद्रव्यैर्विधिना मंडलमापूर्य जापहोमादिकं करोति । उक्तं च—

आडंबराणि पूज्यन्ते शत्रुमध्ये तथैव च । सभायां व्यवहारे च स्त्रीषु राजकुलेषु च ॥ १ ॥

इति वचनात् तेनाडंबरध्यानं कृत्वा कटिन्यस्तलताखंडपक्षिविद्योगेन कन्या दिव्यनेत्रा कृता । तत्क्षणात्सा स्पष्टनेत्रा जाता । सापि तं कुमारं भाग्यसौभाग्यनिकरं रूपेण निर्जितानंगं लावण्यौदार्यगांभीर्यादिचारुचातुर्यादिगुणपात्रं वीक्ष्य मुदं प्राप्ता, अनंगविकारमपि प्राप्ता । राजापि तां सविकारां दृष्ट्वाऽवादीत्—" वत्से अयं पुरुषः परोपकारकः । यतः—

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये, सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये, ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥१॥

हे कन्यकोत्तमे अनेन पुरुषोत्तमेन त्वं स्वगुणैरेव स्वायत्तीकृता । त्वयाप्यस्मै स्वयमेवात्मा स्फुटं समर्पितः । अहं तु निमित्तमात्रमस्मि । त्वं सभर्तृका चिरं जीव, सुखं भुंक्ष्व" । तदा नृपः शुभलग्ने तयोश्चित्तवित्तानुमानेन सर्वसामग्रीपूर्वकं पाणिग्रहणमहोत्सवमकारयत् । कुमाराय महासौधं मनोहरं ददौ । देशकोशादिसप्तांगराज्यस्यार्धं सर्वं विभज्य नृपः कुमाराय समार्पयत् । सोऽपि पुण्यप्रभावात् पुष्पावत्या समं तत्र काव्यकथारसैर्धर्मशास्त्रविनोदैश्च दोगुंदुकामर इव सुखं भुनक्ति । पुण्यैः सर्वं समीहितं भवति । यतः—

रे चित्त खेदमुपयासि किमत्र चित्रं रम्येषु वस्तुषु मनोहरतां गतेषु ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा पुण्यं विना न हि भवन्ति समीहितार्थाः ॥ १ ॥

दुर्वारा वारणेन्द्रा जितपवनजवा वाजिन स्यन्दनौघा,
लीलावत्या युवत्यः प्रचलितचमरैर्भूषिता राज्यलक्ष्मीः ।
उच्चैः श्वेतातपत्रं चतुरुदधितटीसंकुला मेदिनीयं,
प्राप्यन्ते यत्प्रभावात्त्रिभुवनविजयी सोऽस्तु पुण्यप्रभावः ॥ २ ॥

स कुमारः पुण्यप्रभावाविर्भूतप्रभूतसुखेन वासरान्निरवाहयत् । अन्येद्युः कुमारो वातायनस्थितः पुरमालोकयन्नकस्मात्तं भृत्या-

घममैक्षत । कीदृशं ? गलन्नेत्रास्यबीभत्सं दुर्निवारक्षुधया करालवदनोदरं मलीमसतनुं व्रणपङ्कैर्दूषितगात्रं जंगमपापराशिमिव दुश्चेष्टितं, ईदृशं तं भृत्याधमं निरीक्ष्य सम्यगुपलक्ष्य करुणार्द्रमनसा कुमारश्चिन्तयति—"अहो अस्य वराकस्येदृशी कीदृशी दशा समजनि ? ।

उक्तं च—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ १ ॥

धिग्दैवम् " । इति चिन्तयन् चेटैस्तमाकार्य कुमार इदमभ्यधात्–' अहो जानासि मां, ब्रूहि ' । सोऽपि कंपितांगः सज्जनो भयेन गलक्षेप इदमवोचत्–' स्वामिन् पूर्वाचलोत्तुंगशृंगस्थं रविं को न वेत्ति ? ' । कुमारोऽवादीत्–' संभ्रमवाक्येनालं सत्यमाख्याहि ' । पुनः सोऽप्याह–' तर्हि देव सत्यं न वेद्मि ' । ललितांगोऽब्रवीत्–" यस्य चक्षुरुत्पाटने उपक्रमस्त्वयोपचक्रे भोः सज्जन तं मां कथं नो वेत्सि ? " । तच्छ्रुत्वा सहसा लज्जाभयाशंकाभराक्रान्तोऽधोमुखः स संस्थितः । अथ कुमारस्त्याजितदुर्वेषं तं स्नानभोजनं कारयित्वा सत्वराणि परिधाप्येत्थमभाषत–" भोः सज्जन तेन द्रव्येण किं ? येनात्मीयसज्जनमनुष्याणां संविभागो न विधीयते ? । अद्य मे सफलं राज्यं । मम तवानुभावाद्धर्ममाहात्म्यं जातम् । त्वं मम मार्गसखा । अतः कारणान्निश्चितमानसः सौख्यं भुंक्ष्व " । अथ स सुरयाधमः सविस्मयमना इति हृदि दध्यौ–" अहो ! अस्य कुमारस्य निष्कारणकारुण्यम् । यतः—

संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥१॥

ततः स तत्रैव सुखेन स्थितः । अथान्यदा कुमारेण सुहृद्गोष्ठ्या स पृष्टः–' भोः सज्जन तत्रैव तव तादृशी दुर्दशा कथं समा-

गता ? ' । तदा सज्जनोऽब्रवीत्–" स्वामिन् श्रूयतां त्वां तादृशं वटस्याधो विमुच्य मार्गे गच्छतो मम तस्करैर्यष्टिमुष्टिभिराहत्य सर्वं गृहीतम् । तैरहं दुष्कर्मफलभोगार्थं जीवन्मुक्तः । नाथ साक्षान्मया स्वस्यैव पाप्मना फलं दृष्टम् । त्वयापि साक्षात्सुकृतस्यैव फलं दृष्टम् । अतः कारणाद्धर्मादेव ध्रुवं जयः । अथ स्वामिन् मामदृश्यमुखं दूरेण विसर्जय" । कुमार आह—"भो मित्र विकल्पं हृदि मा कृथाः । तव साहाय्येन ममेदं सर्वं विजृंभितम् । नो चेत् कथं ममात्रागमनं कन्याराज्यलाभादिकं च भवेत् ? अतस्तवैवोपकारः । अथात्र मदीये राज्येऽखिलकृत्यकृत् भव । प्रधानपदवीमेत्य मां गतचिन्तं विधेहि " । तदा सज्जनस्तत्रस्थः सुखं भुनक्ति । अन्येद्युः राजपुत्र्या प्रकृतिदक्षया तस्य दौरात्म्यं विदित्वा नृपात्मजोऽभाणि–"कुलस्त्रीणां भर्तुः शिक्षाप्रदानं न युक्तम् । तथापि तव मुग्धत्वात् किञ्चिदुपदिश्यते । हे स्वामिन् एतस्य संगतिस्तव न शोभना । चेच्चैतस्योपरि स्नेहरागोऽस्ति तदा द्रविणं देशो वा दीयताम् । परं प्राणेशानेन सह संगतिस्तव न शोभना । सर्पस्य पयःपानं केवलं विषवर्धनाय भवति । तेजोमयोऽपि वह्निर्लोहेन सह मिलितो घन-ताडनां सहते । उक्तं च—

संततायसि संस्थितस्य पयसो नामापि न ज्ञायते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ १ ॥

अतः कारणान्नीचानां संगतिः सुखाय सतां न स्यात् । नीतिशास्त्रेऽप्युक्तं–हंसश्च नीचकाकसंसर्गदोषतो मृत्युमवाप्नोति । तथाहि–यथैकस्मिन् वनमध्ये सरसि वायसस्तरीतुमजानन् बकस्पर्धया व्योममंडलान्मीनं जिघृक्षुः प्रविष्टः । स तरीतुमशक्तः शेवालैर्वेष्टितो मृत्यु-

भयाकुलोऽत्यन्तं दुःखं प्राप्तः। तं दृष्ट्वा कृपयासन्नस्था हंसी पतिं राजहंसं प्रत्यब्रवीत्—“ प्रिय पश्य पुरः काको वराको म्रियते। त्व पक्षिगणेषूत्तमो जनैर्गीयसे, तदस्य जीवदानं तीरमुत्तार्य दीयताम्”। तदा साधु साध्विति भाषित्वा हंसो हंसी च चंच्वाऽऽदाय तूर्णं तत्र विलग्नं वायसं बहिर्निन्यतुः। क्षणमेकं विश्रम्य काको बाढं पादयोर्विलग्य हंसं न्यमंत्रयत—“ हे हंस तव कोऽपि प्रत्युपकारो मया निष्पाद्यते। मद्वनं समागत्य मम तोषं कुरु”। हंसेन तदाकर्ण्य प्रियामुखं वीक्षितम्। सापि तदाकूतं ज्ञात्वा प्रच्छन्नमिदमब्रवीत्—“ हे प्राणप्रिय न युक्तमिदम्। निर्विचारं नो विधीयते। स्तोकापि नीचसंगतिः कर्तुं न युज्यते। उक्तं च—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव संपदः ॥ १ ॥

इत्यादिना तया वारितोऽपि दाक्षिण्यतः क्षणं यामीति तामुक्त्वा तेन सह वनं गतः। तत्र निंबस्य शाखायां उपविष्टावुभावपि। तदासन्नस्थपुरनृपो वाह्यालीक्रीडाश्रान्तः निंबशाखाधः समेतः। तदा वायसो नृपशिरसि विष्टां कृत्वा समुड्डीनः। हंसस्तत्रैव स्थितः। तदैकेन नरेण धनुर्गोलकेन हतो हंसोऽपतत्। तं भुवि पतितं वीक्ष्य नृपः सपरिच्छदोऽवदत्—‘अहो चित्रं हंसरूपेण वायसो वीक्ष्यते’। कंठगतात्मापि हंसस्तं जनालापं निशम्य स्वजातिदूषणनिवारणाय नृपमब्रवीत्। यतः—

“नाहं काको महाराज हंसोऽहं विमले जले। नीचसंगप्रसंगेन मृत्युरेव न संशयः ॥ १ ॥”

इत्यादि गदितं तस्य वचः श्रुत्वा सदयमानसस्तद्दिनादारभ्य नृपो नीचसंगान्निवृत्तः। अतः कारणात् प्रियतम मया पुनः पुनर्निवार्यसे। स्त्रीणामपि वचनं सानुकूलं बुधैर्मन्यते। [1]वामा वा [2]दुर्गापि मार्गगामिभिः किं न शस्यते ?"। कुमारस्तस्या वाक्यं श्रुत्वा हृदि चमचक्रे। तथापि तस्याधमस्य संसर्गं न त्यजति, यथा कर्पूरस्यांगारेण समं रतिः। अथ कियत्यपि गते कालेऽन्यदा वसुधाधीशः प्रच्छन्नमिति सज्जनं पप्रच्छ—"अहो कुमारस्य तव चान्योऽन्यं कथं प्रीतिः ? कुमारस्य को देशः ? का जातिः ? का माता ? कः पिता ? त्वं कः ? कुतः समागतः ?"। तदा सज्जनेन चिन्तितं—"कुमारः कदाचिन्मम पूर्वविकारं स्मृत्वाऽशुभं करिष्यति"। इति विमृश्य नृपस्योक्तम्—"स्वामिन्न प्रष्टव्यमकथितं सुन्दरम्"। तदा नृपः ससंभ्रमं पुनः पृष्टवान्। सज्जनो भूयो भूयः पृष्टोऽपि किञ्चित् हास्यं चक्रे। नृपः शपथपूर्वकं पृच्छति। सज्जन उवाच—"स्वामिन् यथातथं शृणु। श्रीवासपुरपत्तने नरवाहनो राजा। तस्य पुत्रोऽहम्। मदीयभृत्योऽयं प्रकृत्या रूपवान् कुतोऽपि सिद्धपुरुषात् विद्यां प्राप्य स्वजातिलज्जया गेहं त्यक्त्वा देशान्तरं भ्रमन् अत्रायातः। प्राच्यभाग्यवशादत्र संपदोऽवाप्तवान्। अहं च पितुः पराभवादत्र पर्यटन् आयातः। अनेनाहं दृष्ट्वोपलक्षितः। मर्मज्ञोऽयं इति ज्ञात्वा मम महादरं करोति"। राजा सज्जनोक्तं समाकर्ण्य व्याकुलीभूतो दध्यौ—"हा हा कीदृशमसमञ्जसं जातम्। अनेन मत्पुत्री पणबद्धा परिणीता। मत्कुलं मलिनीचक्रे। तदेनं जामातरं पापिनं निग्रहीष्यामि"। इति विमृश्य सुमतिप्रधानमाकार्य सर्वमुक्त्वा कथयामास—'अस्य निग्रहं कुरु'।

---

१ वामभागवर्तिनी। २ पक्षिणीविशेष.। ३ प्रष्टुं योग्यं न वर्ततेऽतो मयाऽकथितमेव शोभनमित्यर्थः।

तदाऽमात्येन प्रोक्तं स्वामिन्नविमृष्टं कार्यं न कार्यं । उक्तं च—

> सगुणमपगुणं वा कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पंडितेन ।
>
> अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १ ॥

"तस्मात् स्वामिन् किमपि शीघ्रतरं नो कार्यम्"। तदा नृपोऽमात्येन वारितो मौनमादाय स्थितः। एकदा निशि यत्कृत्यादेशकारिणो भृत्यानाकार्य समादिशत्—" अर्धनिशि गृहान्तराध्वनि य एकाकी समायाति स युष्माभिर्निर्विचारं हन्तव्य एव " । तैरूचे—'देवादेशः प्रमाणं'। इति कृत्वा ते तत्रैव रहःस्थाने निशि स्थिताः । अथ रजन्यां कुमाराह्वानहेतवे नृपो नरं प्रैषीत्। सोऽपि नरो गत्वा कुमारमवदत्—"स्वामिंस्त्वां नृपः कार्यौत्सुक्यात् मध्यमरात्रे समाकारयति शीघ्रमागन्तव्यम्"। तच्छ्रुत्वा कुमारः खड्गमादाय पल्यंकादुत्तीर्य सहसाऽचलत्। तदा करेण पटाञ्चलं धृत्वा प्रिययाऽभाणि—" प्रियतम मुग्धस्वभावोऽसि। राजनीतिं नो जानासि! मध्यनिशि यदेवमविचार्य एकाकी चलितोऽसि। निपुणेन नरेण कस्यापि विश्वासो न कार्यः। नीतिशास्त्रेऽप्यप्युक्तं—'राजा मित्रं केन दृष्टं श्रुतं वा'। स्वामिन्नत्र समस्तकार्येषु सज्जनः समर्थोऽस्ति, स एव प्रेष्यताम् "। कुमारो दयितायां वचः श्रुत्वा मुदितोऽचिन्तयत्—'अहो कैयं मतिप्रौढिमा' इति विचिन्त्य चित्ते चमत्कृतः । ततस्तेन गृहांगणे सुप्तः सज्जनः प्रेषितः । तदा सज्जनो मुदितः सौधान्तर्मार्गे गच्छन् तत्रस्थैः पुरुषैस्तीक्ष्णखड्गघातैर्दृढं हतः । तत्रैव पतितः पञ्चत्वं प्राप्तः सत्य आभाणको जातः ' स्वस्यैव खड्गः स्वकीयप्राणघातको भवति ' तस्य चिन्तितं तस्यैव शिरसि पतितम् । तत्र कलकलारवं श्रुत्वा नृपपुत्रिका सगद्गदं जगाद—

" हे नाथ सरलस्वभाव मदीयकथितं यदि नोऽकरिष्यस्तदा मम काऽवस्थाऽभविष्यत् । आर्यपुत्र प्रभातसमये [1]गजनिमीलिकां मुक्त्वा सन्नद्धो भूत्वा ससैन्यः पुराद्बहिस्तिष्ठेः " । प्रभाते राज्ञः कपटं ज्ञात्वा कुमारः ससैन्यः सज्जः पुराद्बहिर्निर्गतः । नृपोऽपि दीप्तकोपो चलाटोपं कृत्वा सन्नद्धयुद्धसज्जः पुराद्बहिः कुमारसन्मुखं गतः । द्वयोः सैन्ययोर्मेलापको जातः । तदाऽमात्यैश्चिन्तितं–' अहो राज्ञा किमसमञ्जसमारब्धम् ' । तदा प्रधानाः सर्वे संमील्य राज्ञोऽग्रे समागताः । मुख्यप्रधानेनोक्तं–हे स्वामिन्—

पुष्पैरपि न योद्धव्यं किं पुनर्निशितायुधैः । युद्धे विजयसन्देहः प्रधानपुरुषक्षयः ॥ १ ॥

स्वामिन् यथा ग्रहाणां नायकश्चन्द्रः नदीनां नायकः समुद्रः तथा त्वमेव प्रजानां नायकः । अविमर्शसंग्रामोऽनर्थाय भवति । स्वामिन् यः कुदृष्टं कुपरीक्षितं कुज्ञातं कार्यं करोति स आपदं प्राप्नोति, यथा जयराजश्चिन्तां प्राप्तः । तथाहि—

विन्ध्याचलपर्वतासन्नभूमिभागे महाटव्यामनेके वृक्षाः सन्ति । तत्रोत्तुंगविस्तीर्णो वटवृक्षोऽस्ति । तत्रैककीरयुग्मं वसति । तयोः सस्नेहं कालं गमयतोः शुकापत्यमजायत । पित्रोः पक्षवातचूर्णिदानादिना क्रमात् वृद्धिं प्राप । उद्भिन्नपक्षो जातः । अन्यदा बालचापल्यादुड्डीय गमनोत्सुकः कियद् दूरं गतः । मार्गान्तराले सहसा श्रान्तो व्याप्तमुखोऽपतत् । तदा तपस्विना तापसेनैकेन जलायागतेन स शुको भुवि पतितो वीक्ष्य कृपया करे गृहीतः । वल्कलेन वातं वीजयित्वा कमंडलाज्जलं पाययित्वा तं स्वाश्रमं निन्ये । पुत्रवत्पालितः स्वादुनीवारफलवारिभिः,पोषितः प्रौढिं प्राप्तः । तापसमुनिभिः संभूय शुकराज इति नाम निर्ममे । सल्लक्षणधरो ज्ञात्वा

[1] आलस्यम् ।

कुलपतिना पाठितः तस्य पितरावपि तत्रैवागत्य तत्पार्श्वे तस्थतुः । अन्येद्युः कुलपतिर्निजशिष्याणां पुरो जगौ—"भोः शिष्या मदीयोक्तं श्रूयतां । वारिधिमध्ये हरिमेलाभिधो द्विपोऽस्ति । तत्रेशानकोणे सहकारमहाद्रुमोऽस्ति । स सदाफलः । तं विद्याधराः किंनरा गान्धर्वाश्च सेवन्ते । स दिव्यानुभावः । तस्य फलं य उपजीवति स रोगदोषजरामुक्तः पुनर्नवः स्यादेव" । शुकोऽपीदं वचः श्रुत्वा हृष्टमना भृशं संजातः चिन्तयति—"गुरुणा शुभं कथितम् । मम पितरौ जराजीर्णौ दृष्टिभ्रष्टौ वर्तेते । तदाम्रफलदानेनानृणीभवामि । उक्तं च—

पुत्रः स एव शिष्यस्तु यः पित्रोर्गुरुवत्सलः । निर्वापयति संतापं शेषस्तु कृमिकीटकः ॥ १ ॥

तथा च—

वरं वृक्षोऽपि सिक्तोऽसौ यस्य विश्राम्यते तले । सचेतनोऽपि नो पुत्रो यः पितुः क्लेशकारकः ॥२॥
उच्यन्ते दुष्प्रतीकाराः पितरो गुरवस्तथा । नरैस्तथापि यच्छक्यं कृत्यं तेषां पदार्चनम् ॥ ३ ॥

इति ध्यात्वा शुकः पितरावापृच्छ्य सत्वरमुड्डीय तस्मिन् द्वीपे ययौ । तत्र तमेवाम्रं ददर्श । प्रातः स्वादुफलं तस्य सहकारस्य चञ्चुपुटेनादाय पश्चाद्व्याघुट्य नगरे गच्छन् शुको भृशं श्रान्तोऽभवत् । स्वतनुं धर्तुमक्षमः सहसांबुधौ पतन् तत्फलं वदनान्मुमुच्चत् । अत्रान्तरे सागराख्यसार्थेशेन स्वपुरात्समुद्रं प्रति यानेन गच्छता व्याकुलः स शुको जलधौ ब्रुडन् दृष्टः । तदा स सार्थेशस्तारकपुरुषाने

कथयति–" अहो गृह्णातु गृह्णातु कोऽपि एतं वराकं कीरं म्रियमाणं जले ब्रुडन्तम् " इत्युक्ते सागरणकस्तारक सागर स्वमाक्षपत्। तत्र गत्वा शुकं धृत्वा सागरात् सागरस्य चार्पयत्। सागरोऽपि शुकं करे कृत्वा चिरमाश्वासयत्। शुकोऽपि लब्धचैतन्यः सागर मत्यवदत्– "उपकारिशिरोमणे सार्थवाह चिरं जय। ते धन्या ये परोपकाररसिकाः। यतः—

परोपकाराय सतां विभूतयः परोपकाराय वहन्ति नद्यः।
परोपकाराय फलन्ति वृक्षाः परोपकाराय भवन्ति मेघाः ॥ १ ॥
विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ २ ॥

केवलं मम प्राणा नो दत्ताः, भोः सार्थनायक मम पित्रोजीर्णान्धयोरपि प्राणा दत्ताः। ममोपकारकारिन् शृणु। उक्तं च—

"क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा।
दन्तात्तृणं प्राणान् नरेण किं निरुपकारेण ॥ १ ॥"

पुनः शुकेनोक्तं—" मम गुरुणा निगदितं सागरे हरिमेलाभिधे द्वीपे ईशानकोणके दिव्यानुभावः सहकारोऽस्ति। तस्य फलं यः कोऽपि भुंक्ते तस्य रोगा जरा च न भवन्ति, पुनर्नवत्वं भवति शरीरस्य। तच्छ्रुत्वा मया चिन्तितं–मम पितरावत्यन्तवृद्धौ स्तः।

ममागच्छन् श्रान्तः । त्वया च कालधर्मात् रक्षितः । अथ तवैवाहमनृणीभवामि, प्रत्युपकारं च करोमि" । तदा सार्थेशेनोक्तं–'त्वं किं करिष्यसि ?' । शुकेनोक्तं—'सार्थपते इदं सहकारफलं त्वमेव गृहाण' । पुनरपि सार्थपतिरवक्–'हे शुक त्वं मातापित्रोः किं दास्यसि' । कीरेणोक्तं–"पुनरप्यहं तत्र गत्वा सहकारतरोः सकाशात् फलं गृहीत्वा गमिष्यामि" । इत्युक्त्वा तत्फलं दत्त्वा शुक उड्डीय गतः । सार्थेशस्तत्फलं गृहीत्वा यत्नेन रक्षति । क्रमाज्जयपुरं प्राप्तः । सार्थं पुराद्बहिरवास्थापयत् । मनसीदं विचारयति–"ममैतत्फलभक्षणात् कृधिमरित्वेन किं ? परं तु तथा कुर्वे यथा विश्वस्योपकृतिर्भवेत् । ततो नृपं ददामि" । इति चित्ते चिन्तयित्वा मुक्ताफलभृतस्थालोपरि चूतफलं मुक्त्वा तदुपायनमादाय भूपधाम्नि जगाम । प्रतीहारनिवेदितश्चास्थानस्थनृपाग्रे स्थालं मुक्त्वा नृपं प्रणनाम । भूपालस्तदुपायनं सविस्मयं वीक्ष्य सादरं पप्रच्छ–"किमिदं सहकारफलं ? सहकारतरुस्त्वया किं कदापि नो दृष्टः ?" तच्छ्रुत्वा सार्थेशोऽवादीत्–'स्वामिन्नस्य फलस्य प्रभावं शृणु' । इत्युक्त्वा तत्प्रभावं सर्वं सागरः कथयमास । ततः प्रीतो नृपस्तस्य सन्मानं दत्तवान् । नृपस्तस्योत्सुक्यात् दानमोचनं करोति । ततः अहं कथमेकाकी फलं भक्षयामि ? मदीया प्रजा नीरोगा स्यात्तथा करोमि" एवं विचिन्त्य नृप आरामिकमाकार्य शिक्षां दत्त्वारोपणायाम्रफलमापर्यत् । आरक्षकांश्च तत्र रक्षार्थं मुमोच । सोऽप्यारामिकः शुभस्थाने तदाम्रं रोपयति क्रमेणास्याङ्कुरभिन्नं श्रुत्वा नृपतिरुत्सवं चक्रे । पुत्रजन्मवत् कृतार्थमात्मानममन्यत । आरामिकारक्षकांश्च भक्तवस्त्रादिसत्कारेण तोषयामास । पक्षे पक्षेऽनिशं तं द्रष्टुं याति । तस्मिन् प्रवर्धमाने चूते राज्ञो मनोरथा अपि हृदि प्रवर्धन्ते स्म । एवं क्रमेण तस्य सर्वाङ्गरम्यस्य मञ्जरी प्रादुर्बभूव । फलैरभितोऽलंचक्रे । नृपः स्वप्रजां मनसा गतरोगजरापदं मनुते । अथैकस्य फलस्योपरि शकुनिकागृही-

तमर्पस्य मुखाद् गरलं पपात । गरलतापेनैकं फलं पक्वं गलित्वा भुव्यपतत् । तत्फलमारामिकेण गृहित्वा राज्ञोऽग्रे ढौकितम् । नृपस्तस्य पारितोषिकं दत्त्वा तत्फलं निजपुरोधसे समार्पयत् । सोऽपि पुरोहितो निजावासे गत्वा देवार्चनं कृत्वा मुदाम्रं भक्षयामास । भक्षयंश्च सहसा विपन्नः । शोककोलाहले जाते नराधिपो ज्ञात्वा किमिदमिति संभ्रान्तश्चिन्तयामास, श्याममुखश्चाभवत् । दध्यौ च–" विषफलमिदं केनापि वैरिणा वणिजः करात् दापितम् । हा किं करोमि ?" । ततो राजा क्रुधा ज्वलन् कुठारधरान् भृत्यानित्यादिदेश–' भो भो भृत्यास्तथायमाम्रश्छेद्यो यथा तस्य नामापि नो भवेत् ' । तैः कुठारकरैः शीघ्रं गत्वा स वृक्षश्छिन्नः । तज्ज्ञात्वा जीवितोद्विग्नैः कुष्ठिभगन्दरादिभिस्तत्र गत्वा सुखमृत्यवे सहकारस्य फलपत्रादि भक्षितम् । क्षणेन तत्प्रभावान्मन्मथसन्निभा जाता नीरोगाश्च । ते तुष्टास्तद्वृत्तं नृपाय न्यवेदयन् । विस्मितो नृपो दध्यौ–"किमहोऽद्भुतमाश्चर्यं ? ध्रुवं सत्यं वचस्तस्य सार्थेशस्य । केनापि कारणेनेदं विषमयं फलं जातम् । आरामिकमाकार्य शपथपूर्वकमप्राक्षीत्–'वद भोः सत्यम् ' । तेनोक्तं–" अन्यानि सर्वाण्यपि फलान्यपक्वानि । इदमेव फलं पक्वं भुवि पतितं वीक्ष्य मया देवस्य पुरो ढौकितम्" । तच्छ्रुत्वा नृपोऽचिन्तयत्–' नूनं विषयोगादिदं फलं पक्वं गलित्वा भूतलेऽपतत् ' । तत आम्रं रक्षितुं पुरुषान् प्रैषीत् । तैर्गत्वा वीक्ष्यागत्य च नृपो विज्ञप्तः–"हे स्वामिन् स वृक्षो जनैस्तथा चूर्णीकृतो यथा तस्य स्थानमपि न जानीमहे" । तन्निशम्य नृपस्तमाम्रं महार्तिभाग्विललाप—'हा मया मन्दभाग्येन किं विहितम्' ? । तद्वत् स्वामिन् अविमृश्य किमपि कार्यं नो विधेयम् । हे राजेन्द्र सर्वगुणसंपूर्ण ललितांगे त्वयाऽपरीक्ष्य संरंभः कथमारेभे । ततो यथादिशसि तदा कुमारस्यान्तिकं गत्वा सर्वं तस्य कुलादिकं जानीमहे" । तत्सर्वं श्रुत्वा राज्ञोक्तं–'अमात्य साधु साधु, कुरुष्वेदम्' इति नृपोदितं निशम्य नृपात्मजसमीपे समेत्य प्रणम्य मंत्र्युवाच–'कुमारेन्द्र किमिदमसमञ्जसमारब्धम् ?

जात्यादिकं स्वकीयं कथयतु'। कुमार ऊचे–"भो भो अमात्य मम दोर्दंडपराक्रमो जात्यादिकं कथयिष्यति। मम पराक्रमं विलोकयतु पूर्वं, पश्चात्सर्वं ज्ञास्यते। तच्छ्रुत्वा पुनः प्रधानः प्रोक्तवान्–"स्वामिंस्त्वं गुणवान् पराक्रमेण ज्ञायसे। तव जात्यादिकं पापिना मज्जनेन विरुद्धं कथितं। अथ राज्ञा प्रणयपूर्वकं त्वमुक्तः कुलादिकं स्वस्य कथयेति। अतस्तव पादयोर्लगित्वा मया तव कुलादिकं पृच्छयते, कथय"। तदा कुमारः स्वकीयं कुलजनकादिकं सर्वं यथातथमचीकथत्। तन्निशम्य प्रधानो राज्ञे शशंस। राजापि जहर्ष। तथापि श्रीवासनगरे दूतेन सह लेखं नरवाहननरेशाय प्राहिणोत्। दूतस्तत्र गत्वा लेखमार्पयत्। वदनेनापि तत्स्वरूपं न्यवेदयत्। नरवाहनो नृपस्तद्वचसा प्रत्युज्जीवित इवाभूत्। हर्षेण चैवं जगाद—"अहो संप्रति मम जितशत्रुनृपसमो न बन्धुः। येन मयाऽतिरयागभयात्तिरस्कारादपमानितः स्वं राज्यं मुक्त्वा देशान्तरं भ्रमन् ललितांगः स्वात्मासन्निधौ स्थापितः पोषितश्च। अथ मद्वचसा सन्मान्य महादरादत्र प्रेष्यताम्"। इत्युक्त्वा स्वप्रधाननरान् विशिष्टप्राभृतान्वितान् प्रैषीत्। ते प्रधाननराः सर्वं यथातथं न्यवेदयन्। तच्छ्रुत्वा जितशत्रुर्महिपतिर्हृद्यचिन्तयत् —'हा मया किं कृतं अज्ञानवशतः'?। ततः पुत्रिकामाकार्याङ्कमारोप्य गलदश्रुजलार्द्रनेत्रः सगद्गदमिति जगाद—"वत्से सभर्तृका त्वं चिरं जीव। मया पापिनाऽसमञ्जसं कृतं तत्क्षन्तव्यं। परिपूर्णमनोरथा भव"। अथ कुमारेन्द्रमाहूय जितशत्रुनृपतिः सलज्जवदनोऽवदत्—"भोः सत्यशौण्ड कुमार दुर्जनसज्जनवचसा मया विरुद्धमिदमारेभे। परं तवैव महद्भाग्यं। यत्तेन पापिनाऽलीकं मालिन्यमाहितं तत्तस्यैव फलितं। अतः कारणाद्वत्स कुसंगं मा कृथाः। किं च शृणु—मदीयराज्यस्यार्धं स्वगुणैरेवार्जितं। शेषमर्धमपि मया तव दत्तं। त्वं गृहाण"। इति संबोध्य भूपालस्तमनिच्छन्तमपि स्वयं निजसिंहास-

नाधिरूढं विधाय विधिपूर्वकं पट्टाभिषेकं कृत्वा राज्यं दत्वा तपस्यायै तपोवनं ययौ। ललितांगोऽपि तद्राज्यं भाग्याधिकतरं शुशुभे लोकानां सुखाय पितेव जातः। सर्वत्रैव पुण्यं जागर्ति। यतः—

पुण्यादवाप्यते राज्यं पुण्यादवाप्यते जयः। पुण्यादवाप्यते लक्ष्मीर्यतो धर्मस्ततो जयः ॥ १ ॥

ललितांगस्य सर्वत्रैव जयः समजनि तत्पुण्यप्रभावो ज्ञेयः। अथ ललितांगकुमारस्तत्र राज्ये सुपरीक्षितं मंत्रिणं समादिश्य पुण्यानतीपुत्रः प्रधानादिपरिवारेण समं पौरानापृच्छ्य पितुस्त्वरिताकारणात् सुप्रयाणैरविच्छिन्नैः श्रीवासनगरे ययौ। तत्र सौधमध्य-स्थितं नृपमद्राक्षीत्। नत्वाऽश्रुपातैस्तापं पितुर्निवारयन्निव पितुश्चरणौ प्रणम्य योजिताञ्जलिः सानन्दं विनयान्वितो भक्त्येदं व्यजिज्ञपत्—" तात शास्त्रेषु चन्दना इव नन्दनाः कुलदीपकाः कथ्यन्ते। मया कुपुत्रेण पूज्यानां दुःखं कृतम्। एके पुत्राश्चिन्तामणि-निभा वंशे स्युः। अहं तु पूज्यानां वंशे घुण इवाभवम्। हा मया मन्दभाग्येन प्रतिवासरं पितृपादा न वन्दिताः। किं बहुना? आबालकालादद्य यावत् अहं पित्रोः केवलं क्लेशकारको जातः। तत्सर्वमपि क्षमयित्वा मम पूज्यैश्चंपाराज्यं ढौकितं। पूज्यैर्मे प्रसद्य चंपाराज्यं कस्याप्यादिश्यतां। एषा कुलवधूः पूज्यपादार्चनं करोति। यथोचितमनुज्ञामभिवाञ्छति"। इति वदन्तं सुतं भूपालो दोर्भ्यामादाय पृथुवक्षसा दृढमालिंग्य पूर्णचन्द्रसमं पुत्रमुखं वीक्ष्य हर्षितः सन् मुखेन मूर्ध्नि आघ्राय सगद्गदमिदमुवाच–"कुलदीपक वत्स त्वमेवं मा भाषस्व। सुवर्णे श्यामता कथमपि नायाति। रविः पूर्वाशां परित्यज्य पश्चिमाशां नोदेति। त्वयि कल्पद्रौ मयैवायुक्तं कृतं। यदि मम वृद्धभावेन मतिविपर्यासो जातः,परं तव नेदं युक्तं। त्वद्वियोगेन यद् दुःखमभूत्, तद् दुःखं शत्रूणामपि मा भवतु। तव तु देशान्तरेऽपि महते राज्यलाभायाभूत्। यतः—

यत्रापि तत्रापि गता भवन्ति हंसा महीमंडलमंडनाय ।
हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ १ ॥'

पिता तु पुत्रस शिक्षां ददाति । शिक्षया पुत्रो गौरवं प्राप्नोति । यतः—

पितृभिस्ताडितः पुत्रः शिष्यस्तु गुरुशिक्षितः । घनाहतं सुवर्णं च जायते जनमंडनम् ॥ १ ॥

अथ चोपालंभैर्विना ईदृक् स्वपुत्रमाहात्म्यं कथमज्ञास्यत ? । हे वत्स अद्यापि भाग्यानि जाग्रति, यतस्त्वय्यागते ममानभ्रवृष्टिः समजनि । अथ किं बहुना ? त्वं योग्योऽसि । इदं राज्यमिदं गेहमयं परिजन इदं सर्वमंगीकुरुष्व । प्रजां पालय अहं पूर्वजाचीर्णं व्रतं गुरुसमीपे समाश्रये "। ललितांगोऽपि तद्वचः पितुर्विरहसूचितं निशम्य सदैन्यमवदत्—" तातैतावन्ति दिनानि मम निष्फलान्यगुः, यन्मया पूज्यपादानां सेवा नो विहिता । विभो पुनर्नैवं समादेश्यं । तेन राज्येन किं ? किं तेन जीवितेन ? यतः प्रसन्नं पितृपादांबुजद्वयं प्रतिदिनं नेक्ष्यते । या शोभा पितुः पुरःस्थायिनो भवेत् सा शोभा उच्चैः सिंहासनस्थस्य सहस्रांशापि नो भवेत् । अहं पूज्यानां सेवाहेवाकी । पूज्याः सिंहासनस्थाः साम्राज्यं पालयन्तु । अहं तु सेवां करिष्ये । पुनरपि पूज्यचरणांबुजविरहो मा भूत्" इति पुत्रवचो निशम्य भूपतिः किंकृत्यतामूढो जातः । पुनर्नृपतिर्धीरतामवष्टभ्य जगाद—"वत्स मम त्वं प्रतिबन्धं मा विधेहि । इदं क्रमायातं द्वयं तव राज्यं मम व्रतं चैव "। इति संबोध्य विलक्षवदनं सुतं तत्कालमुच्छलत्पंचशब्दनिर्घोषपूर्वकं सिंहासने निवेश्य राज्याभिषेकं कारयामास । राज्ये निवेश्य स पुत्रमिति शिक्षयामास—' वत्स तथा वर्तितव्यं यथा मम प्रजा न स-

रन्ति'। मंत्रिसामन्तमुख्यांश्चादिदेश—"भो युष्माभिरेतस्याज्ञापरैर्भाव्यम्। युष्माभिरेतस्याज्ञा नोल्लंघनीया। मया यत्किंचिदपचक्रे तत्क्षन्तव्यं" इति लोकानापृच्छ्य सद्गुरोः समीपे व्रतं जग्राह। स परित्यक्तराज्यश्रीकलत्रादिपरिग्रहोऽत्यन्तं शुशुभेतरां। मुक्ततोयोऽम्बुद इव स मुनीश्वरः पञ्चमहाव्रतधरः शान्तो दान्तो जितेन्द्रियः समितिभिः समितः गुप्तिभिर्गुप्तः विशुद्धधर्मधीः सद्धर्मश्रद्धानध्यानतत्परः द्वाविंशतिपरीषहचमूजेता अल्पकालेनाभ्यस्तागमो गुणगौरवो जातः। तं तादृशं मत्वा गुरुणा गुरुपदक्रमे स न्यस्त आचार्यो जातः। महामुनिपरिवारो धरातले विजहार। ललितांगोऽपि नृपमाज्यसाम्राज्यसंपदं प्राप्य विश्वजनस्य मुदेऽभवत्। प्रजां पालयति। यतः—

शठदमनमशठपालनमाश्रितभरणं च राजकृत्यानि। अभिषेकपट्टबन्धो वालव्यजनं व्रणस्यापि॥ १॥

दुष्टस्य दंडः स्वजने च पूजा, न्यायेन कोशस्य च संप्रवृद्धिः।
अपक्षपातोऽरिपु राष्ट्ररक्षा, पञ्चैव धर्माः कथिता नृपाणाम्॥ २॥

ललितांगो नृपो धर्मवान्। तस्मिन् पुण्यवति प्रजापि पुण्यं प्रकरोति। यतः—

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। राजानमनुवर्तन्ते यथा राजा तथा प्रजा॥ १॥

ललितांगनृपः प्रजाया जननीव परित्राणकारकः, धनदायकः पितेव, धर्मकारित्वाद्गुरुवत्। एवं सुखेन नृपः कालं निनाय। अन्येद्युर्मुदिताननः उद्यानपालकोऽभ्येत्य विहितांजलिर्नृपमास्थानस्थितमब्रवीत्—"स्वामिन् जयेन विजयेन वर्धाप्यसे। बहिरुद्याने नरवाहनराजर्षिर्भव्यांबुजान् बोधयन् समवासरत्"। तच्छ्रुत्वा हर्षोल्लसन्मनास्तस्मै लक्षसंख्यं धनं ददौ नृपतिः। सत्वरं सादरं सा-

नन्दं गुरोः पादवन्दनाय सान्तःपुरपरीवारो ययौ । पञ्चाभिगमपूर्वकं तं नेत्रानन्ददं त्रिःप्रदक्षिणीकृत्य भूतलन्यस्तमस्तकः प्रणम्य विधिना शुद्धभावेन पुरतो भक्त्या प्राञ्जलिं बद्ध्वा समुपाविशत् । पौरा अपि ज्ञानातिशयभासुरं मुनिभिः संसेवितपदांबुजं मुनीश्वरं प्रणम्य यथास्थानमुपाविशन् । मुनिरपि धर्मलाभाशिषं कल्याणकारिणीं दत्त्वा धर्मदेशनां प्रारब्धवान् । तथाहि—

"यः प्राप्य दुष्प्रापमिदं नरत्वं धर्मं न यत्नेन करोति मूढः ।
क्लेशप्रबन्धेन स लब्धमब्धौ चिन्तामणिं पातयति प्रमादात् ॥ १ ॥
केचित्प्रवालमिव रागभृतः स्वयं स्युः केचिच्च चूर्णकणवत्परिरंगयोग्याः ।
काश्मीरजातमिव सौरभपूरगौरा धन्याः पुनः स्वपुररंगिततां भजन्ते ॥ २ ॥

मानुष्यमार्यदेशश्च जातिः सर्वाक्षपाटवम् । आयुश्च प्राप्यते तत्र कथञ्चित्कर्मलाघवात् ॥ ३ ॥
आस्वादिते पुनस्तस्मिन् अक्षयं सुखमिच्छुभिः । धारणीयं हृदि ज्ञात्वा सम्यक् सम्यक्त्वमच्युतम् ॥४॥
या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्मे च धर्मधीः शुद्धा सम्यक्त्वमिदमुच्यते ॥ ५ ॥
सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । संसारतारको देवो वीतरागः स देवता ॥ ५ ॥
स्वपरोत्तारणे काष्ठयानतुल्यो भवांबुधौ । संविज्ञः स्याद् गुरुर्धीरः सदा सदुपदेशभाक् ॥ ७ ॥

महाव्रतधरा धीरा भैक्षमात्रोपजीविनः । सामायिकस्था धर्मोपदेशका गुरवो मताः ॥ ८ ॥
दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते । संयमादिदशविधः सर्वज्ञोक्तो विमुक्तये ॥ ९ ॥
धर्मतत्त्वमिदं ज्ञेयं भुवनत्रयसंमतम् । यद्दया सर्वभूतेषु त्रसेषु स्थावरेषु च ॥ १० ॥
इति तत्त्वं त्रयीरूपं शमप्रमुखलक्षणैः । लक्षितं पञ्चभिर्धर्मस्थैर्याद्यैर्भूषितं पुनः ॥ ११ ॥
स्थैर्यं प्रभावना भक्तिः कौशलं जिनशासने । तीर्थसेवा च पञ्चास्य भूषणानि प्रचक्षते ॥ १२ ॥

तां देशनां निशम्य ललितांगनृपो जगौ—" भगवन्नहं प्रव्रज्यां गृहीतुमशक्तस्तस्मान्मम देशविरतिमङ्गीकारयतु " । गुरुणोचे 'प्रथमं सम्यक्त्वमङ्गीकुरु' । तदानीं ललितांगनृपः सम्यक्त्वमंगीचकार । गुरुणाऽवादि—महानुभाव मिथ्यात्वं वर्जनीयमेव । तथा च—

अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च मिथ्यात्वं च तदुच्यते ॥ १ ॥

अतीचाराः पञ्च त्याज्याः । तथाहि—

संका कंख विगिच्छा पसंस तह संथवो कुलिंगीसु । सम्मत्तस्सइयारे पडिक्कमे देसियं सव्वं ॥ १ ॥

तथा च—

शंका कांक्षा विचिकित्सा मिथ्यादृष्टिप्रशंसनम् । तस्य संस्तवश्च पञ्च सम्यक्त्वं दूषयन्त्यमी ॥ १ ॥

तस्माच्छंकादिचौरेभ्यः सम्यक्त्वं रक्षणीयम् । अन्योऽपि मंत्रः शंकया न सिध्यति । तत्र दृष्टान्तो यथा—वसन्तपुरे नगरे गन्धारश्रावको वसति । स देवपूजादयादानदाक्षिण्यादिभिर्युतः । सोऽनुदिनं दूरगोद्यानवनमध्ये जिनेन्द्रभवने सोपस्करं जिनपूजनार्थं याति । तत्र जिनेश्वरं प्रपूज्य निरन्तरमेकमना भावना भावयति । अन्येद्युर्जिनं स्नपयित्वा सुगन्धकुसुमादिभिः समभ्यर्च्य रोमाञ्चिततनुः स्तवनैरुत्तमैः स्तौति । तदा चैको विद्याधरो महाजैनः परमश्रावकस्तत्र जिनान्नमस्कर्तुं समागात् । तत्र तं दृष्ट्वा जिनस्तवनं श्रुत्वा सानन्दः सहर्षं साञ्जलिं निकटीभूय गन्धारश्रावकमब्रवीत्—" अहो धार्मिक त्वामहं वन्दे । अद्य मम नेत्रकर्णयोः पारणकं जज्ञे । वद, यत्तव रोचते, तदहं ददामि । अदृश्यकरणकुञ्जररूपपरकायप्रवेशाद्या, भूरिशो विद्याः सन्ति परं च भूतले आकाशगामिनी विद्या दुर्लभाऽस्ति । तदिमां विद्यां गृहाण । त्वं योग्योऽसि । मे प्रियं कुरु " । गन्धारः प्राह—'भो भद्र किं मे विद्याप्रयोजनं । एका मे धर्मविद्याऽस्तु' । खेचरोऽप्याह—" जानामि, त्वं संतोषवानसि । तथापि तव साधर्मिकत्वाद्विद्यामर्पयामि । अहं कृतार्थो भवामि" । श्रेष्ठिनाऽङ्गीकृतं तद्वचनं । खेचरोऽपि तस्मै विधियुतं मंत्रं ददौ । तौ स्वस्वस्थानं जग्मतुः । परोपकारी गन्धारः सुखेन कालं निनाय । कियत्यपि गते कालेऽचिन्तयत्—' मम मंत्रोऽरण्यजातीव वृथा मा भूत् ' । इति विचिन्त्य, स्कन्दिलमित्रायात्मीयमंत्रं विधियुतं प्रदत्तवान् । सोऽपि स्कन्दिलः विद्यां साधयितुं सोपस्करः कृष्णचतुर्दश्यां निशि श्मशानासन्नोद्याने गयो । बलिविधानादिकं विधायैकस्य तरोरधः प्रज्वलत्खदिराङ्गारपूरितं कुंडमातनोत् । तस्य तरोः शाखामारुह्य शिक्यकं बद्धं अधो वह्निकुण्डम् । तत्र शिक्यके तरुशाखामारुह्य निषण्णः । तत्राष्टोत्तरशतवारान् मंत्रमक्षतं जपित्वा क्षुरिकया यावत् रज्जुपादमेकं

छिनत्ति तावदङ्गारानधस्ताद्वीक्ष्येति शंका मनस्यभूत्–" शिक्यकस्य पादचतुष्केऽपि च्छिन्ने क्रमेण मंत्रसिद्धिसन्देहे निश्चितं वह्निपातो भवति । किं मुधा प्राणा हार्यन्ते ? । जीवन्नरो भद्रशतानि पश्यति " । इति विचिन्त्य समुत्तीर्य भूमावुपागतः । किंकर्तव्यतामूढः—"पुनरेवंविधा सामग्री दुर्लभा क्व मिलिष्यति ? किं करोमि ? " इति विचिन्त्य पुनरपि शिक्यके उपविष्टोऽपि तथैव मनसि शंकामकरोत । एवं चटति चोत्तरति च । तस्मिन्नेवावसरे कश्चिच्चोरो नृपतेः सौधादलंकारकरण्डकमादाय तत्र समाययौ । पदानुसरतः पृष्ठलग्ना राजपुरुषाः समागताः । तत्र चौरं ज्ञात्वा वनं वेष्टयित्वा स्थिताः । उद्योतदर्शनात् चौरेण स्कन्दिलान्तिके उद्याने सर्वसमाचारः पृष्टः । पृष्टे सति तेन सर्वं सत्यं कथितं । चिन्तितं चौरेण—" गन्धारिको जिनधर्मे स्थिरः श्रावको धार्मिकः तदाग्यातमलीकं युगान्तेऽपि न संभवेत् " । इति विचार्य तेनोक्तं–" मम त्वं मंत्रं कथय, रत्नकरण्डकं गृहाण, यथाहं तव तत्प्रत्ययं जनयामि " । स्कन्दिलोऽपि तदा तस्मै कौतुकेन मंत्रमेकमना यथातथमचीकथत् । सोऽपि चौरः शिक्यकमारुह्य मंत्रगेकमनाः स्मरन् साहसमवलंब्य चतुरोऽपि पादान् युगपत् चिच्छेद । विद्याधिष्ठायिनी सुरी तुष्टा विमानमढौकयत् । तस्करोऽपि तदारुह्य गगनमंडलं ययौ । तत्र प्रभातसमये आरक्षकनराः सायुधा विलोकयन्ति । स्कन्दिलो दृष्टः । तैरुक्तं–' अरे गृह्णीत बध्नीत । स च चौरो लब्धः ' । इति जल्पन्तस्ते भटाः स्कन्दिलं नृपाग्रेऽढौकयन् । तावच्चौरविद्याधरो महतीं शिलां विकुर्व्य नृपोपरि स्थित्वाऽवोचत्—" मदीयो गुरुः स्कन्दिलः । अस्य यो विरुद्धं करिष्यति तस्योपरि शिलां मोक्ष्ये " । तदाकर्ण्य सर्वेऽपि जनास्त्रस्ता भीताश्च । नृपः ससंभ्रमं भीत इत्यवक्–' खेचराधीश कथ्यतां, कथं तवायं गुरुः ? ' । तदा चौरेण वृत्तान्तः कथितः । सर्वेऽपि विस्मयं प्राप्ताः । नृपस्तदा स्कन्दिलं स्वगृहे प्राहिणोत् । यथा शंकया स्कन्दिलस्य विद्यासिद्धिर्न जाता तथा सम्यक्त्वमपि

शंकया याति। इत्थं विभाव्य सम्यक्त्वं निःशंकमानसैर्धार्यम्। चारित्रयाने भग्ने सम्यक्त्वफलकग्रहणात् भवांभोधिं भव्यस्तरति। निसर्गरुचिप्रमुखा दश रुचयः सम्यक्त्वधारिणा हृदये स्थाप्याः। तथा हि—

द्रव्यक्षेत्रादिभावा ये जिनैः ख्यातास्तथैव च। श्रद्धत्ते स्वयमेवैतान् स निसर्गरुचिः स्मृतः ॥ १ ॥

यः परेणोपदिष्टस्तु छद्मस्थेन जिनेन वा। तानेव मन्यते भावादुपदेशरुचिः स्मृतः ॥ २ ॥

रागो द्वेषश्च मोहश्च यस्याज्ञानं क्षयं गतम्। तस्याज्ञायां रुचिं कुर्वन्निहाज्ञारुचिरिष्यते ॥ ३ ॥

अधीयानं श्रुतं तेन सम्यक्त्वमवगाहते। अंगोपांगप्रविष्टेन यः स सूत्ररुचिः स्मृतः ॥ ४ ॥

स बीजरुचिरासाद्य पदमेकमनेकधा। यो॓ऽध्यापयाति सम्यक्त्वं तैलबिन्दुमिवोदके ॥ ५ ॥

श्रीसर्वज्ञागमो येन दृष्टः स्पष्टार्थतोऽखिलः। आगमज्ञैरभिगमरुचिरेषोऽभिधीयते ॥ ६ ॥

द्रव्याणां निखिला भावाः प्रमाणैरखिलैर्नयैः। उपलंभगता यस्य स विस्ताररुचिर्मतः ॥ ७ ॥

ज्ञानदर्शनचारित्रतपःसमितिगुप्तिषु। यः क्रियासु रतो नित्यं स विज्ञेयः क्रियारुचिः ॥ ८ ॥

अनाप्रवचने जैनः कुदृष्टावनभिग्रहः। यः स्याद् भद्रकभावेन तं संक्षेपरुचिं विदुः ॥ ९ ॥

१ ग घ इति पा पाठ.। २ 'यो व्यापयति' इति स्यात्।

यो धर्मं श्रुतचारित्रास्तिकायविषयं खलु। श्रद्दधाति जिनाख्यातं स धर्मरुचिरिष्यते ॥ १० ॥
इत्येवं सर्वभेदानां मानसं मूलकारणम् । तस्मात्तदेव कर्तव्यमेकतानं मनीषिभिः ॥ ११ ॥

इति गुरूपदेशं निशम्य ललितांगो भूपतिः सम्यक्त्वे निश्चलमनाः संजातः । गुरुवचनामृतसिक्तात्मा सप्तक्षेत्र्यां स्वधनं वपति, विशेषतस्तु संघभक्तिं विदधाति । संघभक्त्या बहुलाभो भवति । यत उक्तं—

लक्ष्मीस्तं स्वयमभ्युपैति रभसा कीर्तिस्तमालिंगति, प्रीतिस्तं भजते मतिः प्रयतते तं लब्धुमुत्कंठया ।
स्वःश्रीस्तं परिरब्धुमिच्छति मुहुर्मुक्तिस्तमालोकते, यः संघं गुणराशिकेलिसदनं श्रेयोरुचिः सेवते ॥ १ ॥
लोकेभ्यो नृपतिस्ततोऽपि हि वरश्चक्री ततो वासवः, सर्वेभ्योऽपि जिनेश्वरः समधिको लोकत्रयीनायकः।
सोऽपि ज्ञानमहोदधिः प्रतिदिनं संघं नमस्यत्यहो, वैरस्वामिवदुन्नतिं नयति यः सोऽयं प्रशस्यः क्षितौ ॥२॥

स नृपो नित्यं धर्मकृत्यानि कुर्वन् कालं नयति । स भूपतिरन्यदा संसारासारतां मन्यमानः सद्रत्नस्तंभोपशोभितं सुवर्णभित्तिचित्रितं स्फुरन्मणिमयोत्तानचारुसोपानसंस्कृतं सर्वांगसुन्दरं पवित्रं पुण्यमंदिरं रंगमंडपस्नात्रमंडपनृत्यमंडपादिचतुरशीतिमंडपमंडितं दिव्यशिखरैरखंडितं चारुजिनेन्द्रभवनं कारयामास । तत्र श्रीनाभेयबिंबं विधिना प्रतिष्ठाप्य न्यवीविशत् । तत्र विधिना स्नात्रं कृत्वा घनचन्दनकर्पूरमिश्रैः सुगन्धिद्रव्यैर्विलेपनं विरच्य भक्त्या विभूषणमारोप्य शतपत्रचंपकजातिकुसुमैरभ्यर्च्य कृष्णागरुधूपमुदक्षिपत् । तत

उत्तरासंगं कृत्वा शुद्धदेशस्थितो जिनेन्द्रपुरतो भूमौ कृतजानुयुग्मस्थिः प्रणम्य विहिताञ्जलिः परमेशितारं स्तोतुं प्रचक्रमे । तद्यथा—

जय त्रिभुवनाधीश युगादिपरमेश्वर । जय त्रैलोक्यतिलक वीतराग नमोऽस्तु ते ॥ १ ॥
जय स्वामिन् जगन्नाथ प्रसीद नतवत्सल । जय जंगमकल्पद्रो शरणं भव मे प्रभो ॥ २ ॥
सदानन्दमय स्वामिन् जय कारुण्यसागर । इहलोके परलोके त्वमेव शरणं मम ॥ ३ ॥

इति स्तुत्वा जिनेन्द्रं आनन्दजलपूर्णाक्ष उत्थाय पुनर्विज्ञप्तिमिमां कृतवान्–हे स्वामिन् त्रैलोक्यनायक मां भवांभोधेस्तारय । इति कृत्वा नित्यमेव बहुकालं निर्गाह्य वार्धकं प्राप । उक्तं च—

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रंश्यति रूपमेव हसितं वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, हा कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥१॥
गलल्लालामालं गलितरदनं रुच्यवदनं, जराजीर्णः कायो ललितपलितव्रातमिलितः ।
गतिश्रान्तिर्भ्रान्तिर्नयनयुगले क्षीणसलिले, वृथा कृष्णा तृष्णा त्यजति न जनं निर्घृणमनः ॥ २ ॥

एवंविधं वार्धक्यं प्राप्य तृणवद्राज्यं विहाय सुते राज्यभारं न्यस्य सद्गुरोः समीपे व्रतं जग्राह । पश्चाष्टमादितपांसि करोति । द्वाविंशतिपरीषहान् जित्वा स विधिना चारित्रं प्रतिपाल्य पर्यन्तेऽनशनं व्यधात् । देहमौदारिकं त्यक्त्वा ललिताङ्गमुनिर्दिवं ययौ ।

तत्र देवसुखं भुक्त्वा महाविदेहे सिद्धिमेष्यति। अतो धर्मादेव जयं ज्ञात्वा धर्मे सदोद्यमः कार्यः"।

इति ललितांगकुमारकथा ।

इति मुनेर्वाक्यं श्रुत्वा बहवो जना अबुध्यन्त। स्वस्वभावानुमानतो नियमाभिग्रहादीनादाय कृतनमस्कारा जनाः सर्वे यथास्थानं जग्मुः। तदा मरुभूतिः प्रकृत्या लघुकर्मा गुरूपदेशतो विषयेभ्यो विरक्तात्मा धर्मकृत्यपरायणो जातः। दाक्ष्यदाक्षिण्यसौजन्यसत्यशौचदयाभिर्गुणैः कनिष्ठोऽपि ज्येष्ठोऽभूत्। ज्येष्ठोऽपि कमठो मिथ्यात्वकठिनत्वेन मुद्गशैलोपल इव स्थितः। एककुलोत्पन्नावपि न सदृशौ भवतः। यतः—

एके केचिद्यतिकरगतास्तुंबकाः पात्रलीलां, गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः।
एके केचिद्ग्रथितसुगुणा दुस्तरं तारयन्ति, तेषां मध्ये ज्वलितहृदया रक्तमन्ये पिबन्ति ॥ १ ॥

तथा च—

प्रदीपसर्षपौ श्लाघ्यौ लघू अपि गुणोज्वलौ। महान्तावपि न श्रेष्ठौ प्रदीपनविभीतकौ ॥ २ ॥

भावयतिनो मरुभूतेः स्वप्नेऽपि मारविकारो नाभूत्। तस्य पत्नी वसुन्धरा मदनविह्वला जाता। कमठस्य तस्यां भृशं सविकारं मनोऽजनि। ततस्तेन सविकारवचनोक्तिभिर्भृशं वशीकृता। तावेव निरन्तरं निरंकुशतया कामान्धावनाचारपरौ जातौ स्वेच्छया रमतः। कमठस्य प्रिया वरुणा तद्ममसुखं ज्ञात्वा गर्वे मरुभूतये न्यवेदयत्। तचाहक् श्रुत्वा मरुभूतिनोक्तं—'नेदृशं संभवति'।

वरुणा पुनः पुनः कथयति । अन्यदा मरुभूतिर्ग्रामान्तरमिषात् कमठमापृच्छय कियद्भूमिं गत्वा न्यवर्तत । संध्यायां श्रान्तकार्पटीभूय निशारात्र्याश्रयं कमठं ययाचे । तदा कमठेनाचिन्ति—

**अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १ ॥**

इति ध्यात्वा तस्य गृहकोणाश्रयं दर्शयामास । स तत्रैव स्थितो व्याजनिद्रां प्राप्तः । मरुभूतिस्तयोर्दुश्चरितं दृष्टवान् । प्रभाते कार्पटिस्ततः स्थानादुद्गत्य मरुभूतिरूपोऽयं स्वगृहे समागतः । मनसि कुपितः । यतस्तिरश्चामपि जायापराभवो दुःसहः । अथ भवितव्यतानियोगेन मरुभूतिररविन्दभूभुजे तयोर्दुश्चरितं सर्वं निवेदयामास । तच्छ्रुत्वा तेजोनिधी राजा कुपितः । स राजा धर्मिणां सौम्यः । अन्यायपथवर्तिनां यमः । अर्थिनां धनदः । दंडपाशेश्वरमाकार्येत्यादिदेश—'भो भोः कमठस्य शीघ्रं निग्रहं कुरु'। तदा स तस्य भवने गत्वा यमदूत इव कमठं रुध्वा हठाद्रासभं समारोप्य शिक्षापूर्वकं शूर्पकातपत्रं शिरसि धृत्वा, पापफलैः स्थूलबिल्वफलैर्हारं कंठे निवेश्य, शरावाणां कंठे वरमालां कृत्वा, काहलिकावाद्यपुरस्सरं पुरमध्ये भ्रामयित्वा विडंबयामास । यतः—

**अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगवान् । विधेया व्यंगिता तेषामपराधे महत्यपि ॥ १ ॥**

अतः कारणादवध्यं ज्ञात्वा पुरान्निष्काश्य बहिर्मुमुचे । स्वस्थानं राजपुरुषा जग्मुः । ततः कानने एकाकी शरणरहितो दीन इतस्ततो भ्रमन्नेवं मनस्यचिन्तयत्—'अहो सहोदरान्ममेदृशं जातं । तमहं कथमपि हन्मि' इति चिन्तयन् क्षुधया रुषा च पूर्णोऽपि मरुभूतेः किमपि प्रतिकर्तुमशक्तः कतिपयदिनैस्तापसाश्रमं ययौ । तत्र शिवतापसं प्रणम्यात्मीयदुःखं निवेद्य तापसीं दीक्षां गृहीत्वा गिरौ गत्वा तपस्तपति स्म । तापसानां सेवां करोति ।

इतश्च मरुभूतिर्ज्येष्ठबन्धोः कमठस्यातिदारुणं वृत्तान्तं वीक्ष्य कुत्रापि रतिं न लभते। यथा पादपः कोटरान्तःप्रविष्टेन पावकेनान्तरा दह्यते, तथा मरुभूतिर्मनसोऽन्तरा दह्यते। अन्यदा जनवाक्याच्छ्रुतं—'कमठः शिवतापससन्निधौ तापसो जात इति' तदा मरुभूतिना चिन्तितं—विपाके क्रोधस्य फलं दुष्टं। यत उक्तं—

संतापं तनुते भिनत्ति विनयं सौहार्दमुच्छादयत्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम्।
कीर्तिं कृन्तति दुर्मतिं वितरति व्याहन्ति पुण्योदयं दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः संताम्॥
यो धर्मं दहति द्रुमं दव इवोन्मथ्नाति नीतिं लतां दन्तीवेन्दुकलां विधुंतुद इव क्लिश्नाति कीर्तिं नृणाम्॥
स्वार्थं वायुरिवांबुदं विघटयत्युल्लासयत्यापदं तृष्णां घर्म इवोचितः कृतकृपालोपः स कोपः कथम्॥ २॥

करडकुरडवत्क्रोधफलं ज्ञात्वा संवेगवान् मरुभूतिर्मनसि चिन्तयति—'अहं कथमपि कमठं क्षमयामि'। इति मनसि विचिन्त्य नृपं पृच्छति—'स्वामिन् वने गत्वा कमठं क्षमयामि'। इति निगद्य नृपेण वारितोऽपि मरुभूतिर्वने कमठं क्षमयितुं जगाम। तस्य पादयोः पतित्वा सगद्गदमुवाच—"भ्रातस्त्वया क्षन्तव्यं। उत्तमः प्रणामान्तक्रोधा भवन्ति। ममापराधः क्षन्तव्यः" एवं तस्य प्रणामानुनयात् कमठस्तीव्रमत्सरोऽभूत्। तप्ततैले जलप्रक्षेपवत् संजातः। एकां महतीं प्रस्तरशिलां समुत्पाट्य तस्य शिरसि मुमोच। पुना रक्तेक्षणः कोपाटोपादेकामन्यां शिलां समुत्पाट्य कमठस्तमचूर्णयत्। प्रहरार्तिजातार्तध्यानो मृत्वा मरुभूतिर्विन्ध्याचले भद्रजातीयो यूथनायको हस्ती समभूत्। स कीदृक्? स्थूलोपलसदृशकुंभो गंभीरमुखकन्दर ऊर्ध्वसंचारदंडाकारसुंडया युक्त

उद्दाममदनिर्झरपंकिलीकृतभूभागस्तद्गन्धलुब्धागतभृङ्गालिध्वनिबन्धुरो बहुकलभैः परिवेष्टितो जंगमपर्वत इव राजते । वरुणापि कोपान्धा मृत्वा तस्यैव यूथनायकस्य वल्लभा करेणुकाऽभूत् । स करी तया सह गिरिनद्यादिषु सर्वत्र विचरन् अखंड-सुखसंभोगमभिक्रीड ।

इतश्च पोतनपुरेऽरविन्दनरपतेरनुपमं राज्यसुखं भुञ्जानस्य शरत्कालः प्रवृत्तवान् । सरांसि जलैः पूर्णानि । काशपुष्पाणि विक-स्वराणि । सर्वत्र सुभिक्षः संजातः । लोकाः सर्वत्र मुदितानना वर्तन्ते । तस्मिन् शरत्कालेऽन्येद्युररविन्दभूपतिः सौधोपरि गवाक्ष-स्थितः स्त्रीभिः सह स्नेहरसनिर्भरं रममाणः सहसा व्योम्नि गर्जितोर्जितं नवोदयजलधरं शक्रचापतडिद्धरमपश्यत् । व्योमनि क्वापि स्फटिककंसेन्दुमंडलरजतहिमानीपिंडसन्निभमभ्रपटलमपश्यत् । क्वापि अंबरे शुकपिच्छेन्द्रनीलसमप्रभमभ्रपटलमपश्यत् । क्वापि कज्जललाजवर्गरिष्टरत्नसमप्रभमभ्रपटलमपश्यत् । एवं नयनाक्षेपकं विलोकनयोग्यं दशार्धवर्णमभ्रपटलं च जलधरं च गर्जितं वीक्ष्य नृपोऽवदत्—'अहो चित्रं, अहो रम्यत्वं दृश्यते' । एवं पुनः पुनस्तस्मिन्नृपे स्वसन्मुखं विलोकयति सति सहसैव तत्सर्वं वाता-द्विलयं गतं । तत्तादृशमाकाशस्वरूपं दृष्ट्वा संजातसंवेगो नृप इत्युवाच—'अहो चित्रं, यत्तादृशं घनवृन्दं वाताक्षिप्तार्कतूलवत् प्रलयं गतं । यथाऽभ्रपटलं तथाऽन्यदपि संसारे सर्वं क्षणविनश्वरं । यतः—

विद्युदुद्योतवल्लक्ष्मीरिष्टानां संगमाः पुनः । मार्गस्थतरुविश्रान्तसार्थसंयोगसन्निभाः ॥ १ ॥

यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि । निरीक्ष्यते भवे चास्मिन् पदार्थानामनित्यता ॥ २ ॥

रमणीयं कियत्कालं तारुण्यं शक्रचापवत् । प्रियाणामपि निर्वाहे स्नेहरंगः पतंगवत् ॥ ३ ॥
आपातमधुराः सर्वे विषयाः प्रान्तदारुणाः । भवे किञ्चिन्न पश्यामि संसारासारता सदा ॥ ४ ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुंभ इवांभस्थो विशीर्णः संविभाव्यते ॥ ५ ॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने । आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ३ ॥
पितुर्मातुः शिशुभ्रात्रोस्तनयानां च पश्यताम् । अत्राणो नीयते जन्तुः कर्मभिर्यमसद्मनि ॥ ७ ॥

इत्यनित्यमेव सर्वम् । तथा चोक्तम्—

जरा जाव न पीडेइ वाही जाव न वड्ढइ । जाव इंदिया न हायंति ताव धम्मं समायरे ॥ १ ॥

ते महानुभवाः कृतपुण्या ये राज्यं परित्यज्य सद्गुरोरन्तिके व्रतं गृह्णन्ति । अहमधन्यो राज्यलंपटः । अथ यौवनं गतं । अधुना मम प्रव्रज्या योग्या । कस्य भार्यासुतराज्यादिकम् " । इति विचिन्त्य नृपो वैराग्यवारिधौ चटितः सज्जनसमक्षं पञ्चमुष्टिलोचं कर्तुं प्रारेभे । इत्थं नृपं विरक्तात्मानं व्रतोन्मुखं ज्ञात्वाऽन्तःपुरीजनो भृशं सदुःखमित्यभाषिष्ट—"हे प्राणप्रिय तव राज्यपरित्याग-वार्तयाऽशनितुल्ययाऽस्माकं हृदयं शतखंडं जायमानमास्ते । स्वामिन् जीवितेश्वर प्रसीद । इममाग्रहं मुञ्च । इदं तपः कर्कशं क्व, इदं सुकुमालं तव वपुः क्व । राज्यं भुंक्ष्व । प्रजां पालय । भटान् रक्ष रक्ष " । इत्येवं प्रबलस्नेहनिर्भरा निजवल्लभाः प्रति संबोधयितुं प्रारब्धवान्—"प्रियाः शृणुत—

जन्मदुःखं जरादुःखं मृत्युदुःखं पुनः पुनः। संसारसागरे घोरे तस्माज्जाग्रत जाग्रत ॥ १ ॥
कामः क्रोधश्च लोभश्च देहे तिष्ठन्ति तस्कराः। ज्ञानरत्नमपाहारि तस्माज्जाग्रत जाग्रत ॥ २ ॥
माता नास्ति पिता नास्ति नास्ति भार्या सहोदरः। अर्थो नास्ति गृहं नास्ति तस्माज्जाग्रत जाग्रत॥३॥
आशया बाध्यते लोकः कर्मणां बहुचिन्तया। आयुःक्षयं न जानाति तस्माज्जाग्रत जाग्रत ॥४॥
मा सुअह जग्गियव्वे पलाईऊण कीस वीसमह। तिन्नि जणा अणुलग्गा जरा य वाही य मच्चू अ ॥५॥
इन्द्रोपेन्द्रादयोऽप्येते यन्मृत्योर्यान्ति गोचरम्। अहो तदन्तकातंके कः शरण्यः शरीरिणाम् ॥ ६ ॥
संसारे दुःखदावाग्निज्वलज्ज्वालाकरालिते। वने मृगार्भकस्येव शरण नास्ति देहिनाम् ॥७॥"

एवं तस्य संवेगरंगतो ज्ञानावरणीयदर्शनावरणीयमोहनीयक्षये सद्योऽवधिज्ञानं समुत्पन्नं। तदा महेन्द्रसुतं स्वपदे न्यस्य स्वयं राजा भद्राचार्यगुरुपार्श्वे व्रतं जग्राह। एकादशांगानि चतुर्दशपूर्वाणि च पपाठ। गुरोरनुज्ञया एकलविहारी नित्यप्रतिमाधरः ग्रामे एकरात्रं नगरे च पञ्चरात्रं निर्ममो निरहंकारः शान्तात्मा त्यक्तगौरवः। तथा समः सर्वशत्रुमित्रेषु, तुल्यधीः काञ्चनाश्मनोः, उद्वसे वसतौ ग्रामे पुरे वा कुत्रापि तस्य महात्मनः प्रतिबन्धो नाभूत्। एकमासक्षपणे पारणं, अनया रीत्या क्रमेण द्वादशमासक्षपणे पारणकं कृतवान्। नानाविधासु लब्धिषु समुत्पन्नासु तस्य पुण्यात्मनो देहस्तुपवज्ञातः। तदा च तस्य चतुर्थं मनःपर्यवज्ञानं समुत्पन्नम्। सोऽरविन्दर्षिरन्यदाऽष्टापदाचले यात्रार्थं प्रचलितः। मार्गे गच्छतस्तस्य सागरदत्तसार्थवाहो व्यापारार्थं व्रजन् मिलितः। तदा सागर-

दत्तसार्थेशस्तं मुनिं पप्रच्छ–' यूयं क्व यास्यथ ? '। मुनिरूचे – ' अष्टापदाचले देवान् वन्दितुं यास्यामः '। सार्थेशः पुनरप्राक्षीत्— ' साधो तत्र पर्वते के देवाः ? केन कारिताः ? तद्वन्दनेन च किं फलं?' । तदाऽरविन्दराजर्षिस्तमासन्नभव्यं ज्ञात्वाऽऽख्यत्–"महानुभाव ! तत्रार्हन्तो देवा देवगुणान्विताः सन्ति । तेषु गुणा अनन्ताः । अष्टादशदोषरहिताः । यतः—

अन्नाणकोहमयमाणलोहमायारइअरई य । निद्दा सोअ अलियवयण चोरीया मच्छरभया य ॥ १ ॥

पाणिवहपेमकीला पसंगहासा य जस्स इअ दोसा । अट्ठारस वि पणट्ठा नमामि देवाहिदेवं तं ॥२॥

तत्राचले ऋषभाद्या वीरान्ताश्चतुर्विंशतिर्जिनाः । तेषां प्रतिमाः सन्ति । इक्ष्वाकुकुलसंभवश्रीआदिनाथतीर्थकरस्य सुतो भरतचक्रवर्त्यभूत् । तेनाष्टापदाचले दिव्यमुत्तुङ्गं चैत्यं कारितं । तत्र चैत्ये ऋषभादीनां चतुर्विंशतितीर्थकृतां प्रतिमाः स्वस्ववर्णरत्नैर्निर्मिताः स्वस्वमानेन कारिताश्च भरतचक्रवर्त्यस्थापयत् । तद्वन्दनेन नरेन्द्रस्वर्गसाम्राज्यपदलाभादिकं प्रासंगिकम्, मुख्यफलं तु मोक्ष एव । ये तु भूरिभाग्याः पुमांसस्ते एव तान् पूजयन्ति । पूजनात् दुर्गतिद्वयं च न भवति । पुनरपि सार्थेश शृणु—

जिनाज्ञा भूषणं मूर्ध्नि ललाटस्याञ्जलिर्गुरौ । सच्छ्रुतं कर्णयोः सत्यं जिह्वायां स्वच्छता हृदि ॥१॥

पादयुग्मस्य सत्तीर्थं प्रति चंक्रमणक्रमः । जिनेन्द्रपूजनं दानं निर्विकल्पं करस्य च ॥ २ ॥

विकल्पेन देवार्चनं यः करोति, स स्वकीयं पुण्यं हारयति । तत्रोदाहरणद्वयं शृणु । तथाहि—

प्रतिष्ठानपुरे द्वौ वणिजौ भ्रातरौ स्तः । तावेकदा पृथग्जातौ । तौ नन्दकभद्रकाख्यावापणद्वयं मण्डयतः । उभावपि श्राद्धौ ।

भद्रकः प्रातरुत्थाय नित्यं निजापणे याति । नन्दको जिनालये जिनपूजनाथ नित्यं प्रयाति । भद्रकश्चेतसि चिन्तयति–"अहो धन्यो-ऽयं नन्दकः, योऽन्यकार्यं त्यक्त्वा प्रातरुत्थाय प्रत्यहं जिनमर्चयति । अहं तु पापवानल्पधनो धनोपार्जनलालसोऽत्रागत्य पामराणां मुखं विलोकयामि दिवसोदये । धिग्मे जीवितं" । इति ध्यानजलेन स्वकीयं पापमलं क्षालयति । तदनुमोदनोदकेन पुण्यबीजं च सिंचति, तेन स्वर्गायुर्बद्धं । नन्दकस्त्विति चिन्तयति—" मम देवार्चनक्षणे भद्रको बहुधनमर्जयिष्यति । किं करोम्यहं ? । मयाऽभिग्रहो गृहीतः । देवार्चायाः फलं दूरे । व्यापारहानिफलं तु सद्य एव " एवमेभिः कुविकल्पैर्निजं पुण्यं हारितवान् । तेन व्यन्तरायुर्बद्धं । ततो भद्रको जिनपूजानुमोदनातः सौधर्मे देवत्वं प्राप्तः । नन्दकः कुविकल्पैर्व्यन्तरो जातः । तस्मात्कुविकल्पैर्जिनपूजनं न कार्यं । शुभभावेन जिनपूजा विधेया ।

अथ कुविकल्पदानफलं शृणु—उज्जयिन्यां धन्यो नाम वणिक्पुत्रो निजापणे व्यापारायोपविष्टोऽस्ति । इतश्च को-ऽप्यनगारो मासक्षपणकेऽटनार्थं निर्गतः । यतः—

पढमपोरिसि सज्झाए बीए झाणं झियाय पन्नत्ते । तईयाए गोयरीए पुणो चउत्थीय सज्झाओ ।। १ ।।

धन्यो वणिक् मुनिं भिक्षाभटन्तं वीक्ष्य भावेनाकार्य तस्य भाजने घृतं दातुमुद्यतोऽखंडधारया यच्छन् उच्चैर्गतिमुपार्जयत् । प्रवर्ध-मानतत्पुण्यविघाताशंकया मुनिना न वारितः।तावद्दातुर्मनस्येवमभूत्—'अहो अयमेकाकी इयता घृतेन किं करिष्यति, यत् घृतान्न विरमति?' तेन देवलोकायुर्बद्धं । तदा ज्ञानिमुनिनोदितं—' भो मुग्ध त्वमूर्ध्वगतिं बध्नीयाः, अधो मा पत ' । स ऊचे—'असंबद्धं मा वद । ' मुनिनोक्तं—"त्वया मम घृतदानं दत्तं, तेन त्वया सुरलोकायुर्बद्धं । अथ विकल्पचिन्तनेनाधोगतिस्त्वया बध्यते" । पुनः श्राद्ध उवाच—

'भूयो ददामि' । मुनिरुवाच—'लोभान्न फलं' । ततः स कालेन मृत्वा सहस्राराष्टमदेवलोके सुरोऽभूत् । पुनरपि सुपात्रदानेन विकल्परहितत्वेन मुक्तिमवाप" । इत्यादिधर्मशिक्षां सागरदत्तसार्थवाहो निरन्तरं शृणोति । कल्पद्रुमप्राप्तिसन्निभं गुरुसंयोगं मत्वा स सार्थवाहो मिथ्यात्वं सर्वथा त्यक्त्वा श्रावकत्वं प्रपन्नवान् । अरविन्दमुनिना सार्धं सागरदत्तसार्थवाहः क्रमेण गच्छन् यत्र वने मरुभूतिर्गजराजोऽस्ति तस्मिन् वने सगार्थोऽवसत् । तत्रासन्नं महासरः समस्ति । तत् कीदृशं ? तत्रांबुजकानने भ्रमद्भ्रमरावलीव्याजात् पान्थानामातिथ्यहेतवे आकारयदिव, हंससारसचक्रवाककदंबादिभिः शब्दायमानैर्गीयमानगुणोत्करमिव, मुनीश्वराणां चेतांसीव स्वच्छवारिभिर्भृतं । तत्र सरसि सार्थजनो नीरेन्धनान्नपचनादिभिः प्रवर्तते । तदा मरुभूतिकरीश्वरः करिणीभिः परिवृतस्तत्र सरस्येत्याम्भः पपौ । तत्र पयःपूर्णे सरसि करिणीभिः समं चिरं रंत्वा निर्गतः सरःपालिमारुरोह । तत्र दिशोऽवलोकयन् सार्थं पश्यन् स करी कृतान्तवत् ताम्रमुखेक्षणो निष्प्रकंपश्रवणयुगलः कुण्डलीकृतशुंडादंडो गर्जाभिः पूरितदिगन्तरालः सार्थिकान् नाशयामास । नरनार्यो वाहनानि करभादीनि दिशो दिशं पलायांचक्रिरे । तदा ज्ञानवान् भगवानरविन्दराजर्षिस्तस्य गजस्य ज्ञानेन बोधकालं ज्ञात्वा कायोत्सर्गं व्यधात् । स गजराजो जातिस्वभावक्रोधानुभावात् दूरतो मुनिसंमुखं धावितः । तत्तपःश्रीप्रभावतः संजातसंवेग इव मुनेः पुरतो नूतनशिष्य इव तस्थौ । साधुस्तस्योपकारार्थं कायोत्सर्गं पारयित्वोपशान्तगंभीरवाण्या तं गजं संबोधयितुमब्रवीत्—" भो भो गजेन्द्र स्वकीयं मरुभूतिभवं किं न सरसि ? । मामरविन्दभूपतिं किं नोपलक्षयसि ? । प्राच्यजन्मनि मरुभूतिभवेऽर्हत्प्रणीतश्राद्धधर्मं प्रतिपन्नं विस्मारयसि किं ? । गजपते सर्वं स्मर । श्वापदजातिजातमिमं मोहाज्ञानं मुञ्च " । इति पीयूषसन्निभं तस्य मुनेर्वाचामृतं कर्णपुटेन पपौ । अथ स गजराजः शुभाध्यवसायतः तत्क्षणाज्जातिस्मरणं प्राप्य हर्षाश्रुवारिणार्द्रलोचनो दूरावनतकायः करेण साधुचरणयुगलं स्पृशन् संवि-

ऽऽत्मा तं मुनिराजं शिरसा नमश्चक्रे। पुनरपि तं गजेन्द्रं मुनिराह—"भो गजराज शृणु। अस्मिन्नाटकोपमे भवे जीवो नटवन्नाटकरूपाणि विकरोति। त्वं पूर्वभवे द्विजः श्रावकस्तत्त्वज्ञोऽभूः। इदानीं स्वजातिजातमूढात्मा करी जातः। किं क्रियते?। बहुखेदेनालं। प्राग्जन्मानुसारेण करिपुंगव त्वं कषायविषयसंगं त्यज। शमतारसं भज। सर्वविरतिक्षमोऽधुना नासि। तथापि पुनरपीह भवे द्वादशव्रतात्मकः श्रावकधर्मः प्राग्जन्मांगीकृतस्तवास्तु" इत्यादि साधुनोक्तं धर्मरहस्यमखिलं श्रद्धानसहितः कराग्रसंज्ञयाऽनुमेने। करिणी वरुणापि गजेन्द्रवज्जातिस्मरणं प्राप। मुनीन्द्रोऽपि तयोः स्थिरीकरणार्थं भूयोऽपि धर्मोपदेशं ददाति। गजराजोऽपि श्रावकीभूय मुनिं नत्वा सकरिको ययौ। पुनः सर्वे लोका अपि मिलिताः। तद्बोधविस्मिताः केऽपि दीक्षां जगृहुः। केऽपि श्राद्धा जाताः। तदा सागरदत्तसार्थेशोऽपि श्रीजिनधर्मे दृढाशयो जातः। सोऽरविन्दराजर्षिरष्टापदाद्रौ गत्वा सर्वानर्हतोऽवन्दत। तत्रानशनं कृत्वा केवलं प्राप्य सिद्धः शिवमचलमरुजमनन्तमक्षयमव्याबाधमपुनरावृत्तिकं सिद्धिगतिस्थानं प्राप्तवान्। अथ स कुञ्जरः श्रावको भूत्वा शमतां भावयन् जीवदयां पालयन् षष्ठादितपः कुर्वन् सूर्यरश्मितप्ताम्भसः पानेन शुष्कपत्रादिना पारणं विधाय करिणीकेलिविमुखो विरक्तधीरिति दध्यौ—"ते पुमांसो धन्या ये मानुषभवमवाप्य प्रव्रजन्ति। गतभवे मनुष्यभवं प्राप्य मया मुधा नृभवो हारितः। अथ किं करोमि? अधुनाऽहं पशुः"। इत्थं भावनां भावयन् येन तेन वन्यघासाहारेण कुक्षिगुहां प्रपूरयन् रागद्वेषौ विवर्जयन् सुखदुःखयोः शमतां बिभ्रत् स गजः कालमगमयत्।

इतश्च कमठो रोषेण मरुभूतिवधाद् गुरुणाऽभाष्यमाणोऽन्यतापसैर्निन्द्यमानो विशेषेणार्तध्यानस्थो विपद्य कुर्कुटोरगोऽभूत्। सोऽटव्यां दर्शनमात्रेणापि सर्वसत्त्वभयंकरोऽभूत्। स कुर्कुटोरगो दंष्ट्रया पक्षविक्षेपैर्नखैश्चञ्चुपुटेन च यम इव जन्तून् संहरन् अस्थात्।

अन्येद्युः स गजराजः सरस्युष्णांशुरश्मिभिः संतप्तं प्रासुकमंभः पिबन् तेन पापिना कुर्कुटोरगेण तत्र वंभ्रमता दृष्टः । तदा पानीयं पिबन् स करी पंके मग्नः । तपसा क्षामदेहत्वात् निर्गन्तुमशक्तस्तेन कुर्कुटाहिना कुंभे दष्टः । तद्विषप्रसरः शरीरे जातः । तदा स मतंगजः स्वकीयमवसानकालं ज्ञात्वा चतुर्विधाहारप्रत्याख्यानं चक्रे 'भवचरिम पच्चक्खामि' इति प्रत्याख्यानं पूर्वभवाभ्यासात् करोति तथा सम्यक्त्वं सस्मार—

अरिहंतो मह देवो जावज्जीवं सुसाहुणो गुरुणो । जिणपन्नत्तं धम्मं इअ सम्मत्तं मए गहिअं ॥ १ ॥

तथाष्टादश पापस्थानानि स्मरति । तथाहि—

पाणाइवायमलिअं[1] चोरिक्कं[2] मेहुणं[3] दविणमुच्छं[4] । कोहं[5] माणं[6] माया[7] लोभं[8] पिज्जं[9] तहा दोसं[10] ॥२॥

कलहं[11] अब्भक्खाणं[12] पेसुन्नं[13] रइअरइसमाउत्तं[14] । परपरिवायं[15] मायामोसं[16] मिच्छत्तसल्लं[17] च ॥ २ ॥

इत्यष्टादश पापस्थानानि व्युत्सृजामीति चिन्तयति । तथा—

खामेमि सव्वजीवे सव्वे जीवा खमंतु मे । मित्ती मे सव्वभूएसु वेरं मज्झं न केणइ ॥ १ ॥

तथा—

क्षमयामि सर्वसत्वान् सर्वे क्षाम्यन्तु ते मयि । मैत्र्यस्तु सर्वसत्त्वेषु वीतरागशरणं च मे ॥ १ ॥

इत्यादिभावनां भावयन् परमेष्ठिनमस्कारमेकमनाः स करी सस्मार । परो निमित्तमात्रं स्वकर्मणः शुभाशुभफले । इत्थं शमसुधासिक्तो धर्मध्यानं कुर्वन् विपद्य सहस्राराष्टमदेवलोके स करी सप्तदशसागरोपमायुः सुरोऽभवत् । तत्र विमानेऽन्तर्मुहूर्तेन एकेन देवदूष्ययुग्मान्तरादुत्थितः । तत्र सेवका देवा देवांगनाश्च तस्यां शय्यायामासीनं तरुणनराकारं सर्वांगाभरणविभूषितं रत्नकुण्डलकोटीरतारहारादिभिः सहसाऽलंकृतगात्रं एवंविधं देवं तत्कालोत्पन्नं निरीक्ष्य सहर्षमिदमुचिरे–" जय जय, चिरं कालं नन्द नन्द, अस्मान् प्रीणय प्रीणय, अस्माकमनाथानां नाथो भव, वयं किंकरा आस्महे । इयं श्रीः सर्वापि तवायत्तास्ति । यज्जानासि तत्कुरुष्व" । तत्र स सुरो विहितस्नानमंगलः कल्पतल्पपुस्तकवाचकः सिध्धालयस्थप्रतिमाः पूजयित्वा स्तुत्वा च स्थानमशिश्रियत् । तत्र सदेवदेवीगणे मंगलक्रमे विहिते संगीतामृतलीनात्मा दिव्यभोगानबूभुजत् । यतः—

देवाणं देवलोए जं सुक्खं तं नरेसु भणएवि । न भणे वाससएण वि जस्स वि जीहासयं हुज्जा ॥१॥

केसट्ठिमंसनहरोमरुहिरवसचम्ममुत्तपुरिसेहिं । रहिआ निम्मलदेहा सुगंधनीसास गयलेवा ॥ २ ॥

अणिमिसनयणा मणकज्जसाहणा पुप्फदाम अमिलाणा । चउरंगुलेण भूमिं न छिवंति सुरा जिणा विंति ३॥

इतश्च वरुणा करिणी दुस्तपं तपस्तप्त्वा प्रान्तेऽनशनं कृत्वा विपद्य द्वितीये कल्पे देव्यभूत् । सा देवी महारूपलावण्यसंपदाधिकतरा कस्मिन्नपि देवे मनो नो चक्रे । गजेन्द्रजीवदेवस्य संगमध्यानलीनाऽभूत् । गजेन्द्रजीवो देवोऽपि तस्या रागवान् तां रक्तामवधिना ज्ञात्वा सहस्रारेऽप्यानयत् । पूर्वजन्माभिसंबन्धात्तस्या महास्नेहो जातः यतः—

दोकप्पकायसेवी दो दो दो फरिसरूवसद्देहिं । चउरो मणेणुवरिमा अप्पविआरा अणंतसुहा ॥१॥

तया सह स नन्दीश्वरे शाश्वतार्हत्प्रतिमानां महार्चनैर्गीतगानैर्मुनीनां पर्युपासनैः कदाचिन्नन्दनोद्याने दीर्घिकाजलकेलिभिः कदाचिद्गीतवादित्रनित्योत्सवमहारसैः स्वच्छन्दं चिक्रीड । तत्र वैषयिकं सुखं भुञ्जानयोस्तयोः कालो गच्छति स्म।

अथ कियता कालेन कुर्कुटाहिर्विपद्य धूमप्रभायां पञ्चमनरकपृथिव्यां सप्तदशसागरोपमायुर्नारकोऽभूत् । तत्र पञ्चमावनियोग्या विविधा वेदनाः सदापि सहते स्म । यदुक्तं सिद्धान्ते—

नरएसु जाइ अइकक्खडाइं दुक्खाइं परमतिक्खाइं । को वन्नीहे ताइं जीवंतो वासकोडी वि ॥ १ ॥

कक्खड दाहं सामलि असिवण्ण वेयरणि पहरणसएहिं । जा जायणा उ पावंति नारया तं अहम्मफलं ॥२॥

स कमठजीवसर्पनारकः कदाचिदपि रतिं क्वापि न पाप ।

पार्श्वः करी हरतु दिक्षु विदिक्षु कुर्वन् गर्जारवं जलदवत् नितरां नितान्तम् ।
प्राक् संचितानि दुरितानि स्वशुंडया वः सूर्यो यथा हरति विश्वतमांसि नित्यम् ॥१॥

पार्श्वः सुरो जयतु देवसुखे निमग्नो जीवो जिनस्य विशदः पुरुहूतपूज्यः ।
त्रैलोक्यवन्दितपदस्त्रविपप्रधानो नाम्ना महेन्द्रतिलको भुवनप्रसिद्धः ॥ २ ॥

इति श्रीतपागच्छे श्रीजगच्चन्द्रसूरिपट्टपरंपरालंकारश्रीहेमविमलसूरिसन्तानीयश्रीहेमप्रभसोमसूरि-
विजयराज्ये पंडितश्रीसंघवीरगणिशिष्यपंडितश्रीउदयवीरगणिविरचिते श्रीपार्श्व-
नाथगद्यबन्धलघुचरित्रे प्रथमद्वितीयतृतीयभववर्णनो नाम प्रथमः
सर्गः। प्रथमो मरुभूतेरवतारः, द्वितीयो गजाव-
तारः, तृतीयश्च देवावतारः।

पार्श्वनाथचरित्रस्य सर्गः प्रथम एव च।
पंडितोदयवीरेण गद्यबन्धेन निर्मितः॥ १॥



# अथ द्वितीयः सर्गः ।



सरस्वतीं शासनदेवतामहं, प्रणम्य भावाच्च गुरोः क्रमाम्बुजम् ।
द्वितीयसर्गं प्रवदामि सामतः, कर्णामृतं देवगुरुप्रसादतः ॥ १ ॥

अथ पूर्वमहाविदेहे सुकच्छविजये वैताढ्यपर्वते तिलकपुरी नाम्ना नगरी धनैराढ्यास्ति । उत्तुंगचंगरंगधवलप्रासादश्रेण्युपशोभिता सर्वदाऽनेकविद्याधरराजिराजिता एवंविधा नगरी चास्ति चतुरशीतिचतुष्पथहट्टश्रेण्युपशोभिता । तत्र विद्युद्गतिनामा सकलविद्याधरनरेश्वरो राजास्ति । स कीदृशः ? निजयशःपयसा प्रक्षालिताशेषदिग्मुखो निजाचारेण जनानां रक्षणेन च शिष्टप्रशिष्टहृष्टन्यायनिष्ठ इति ख्यातिमवाप । तस्य राज्ञः पट्टराज्ञी तिलकावती नाम बभूव । सापि कीदृशी ? रूपलावण्यसौभाग्यादिगुणैरन्ययोषितां तिलकाभा । विद्युद्गतिविद्याधरनरेश्वरस्तया तिलकावत्या राज्या सार्धं मनोवाञ्छितं वैषयिकं सुखं बुभुजे ।

इतश्चाष्टमदेवलोकात् गजजीवदेवश्च्युत्वा तिलकावत्या राज्या उदरे समवातरत् । सा राज्ञी शुभदिने शुभलग्नसमये द्वात्रिंशल्लक्षणधरं पुत्रमजीजनत् । पित्रा च तस्य बालकस्य किरणवेग इत्यभिधा निर्ममे । स किरणवेगकुमारः पञ्चभिर्धात्रीभिर्लाल्यमानः सन् क्रमेण व्यवर्धिष्ट । लेखशालायां विद्याभ्यासं करोति । शास्त्रशस्त्रकलादिद्वासप्ततिकलाप्रवीणः क्रमेण यौवनमारुरोह । अष्टचत्वारिंशत्सहस्रविद्यापारीणो जातः । तदा विद्युद्गतिनृपतिः कुमारं महासुवंशसामन्तराजकन्यया पद्मावत्या सह महर्ध्या महामहोत्सवेन पर्यणाययत् ।

ततस्तस्य कुमारस्य युवराजपदवी दत्ता । कियता कालेन नृपो गुरुसंयोगेन संवेगरंगं प्राप्तः । ततः किरणवेगपुत्रस्य राज्यं दत्त्वा सचिवानित्यभाषत–" भोः प्रधाना भवतामयं स्वामी । एतस्याज्ञा स्वप्नेऽपि नोल्लंघनीया । भोः सेवका अयं किरणवेगो नृपतिर्मद्वज्ज्ञातव्यः " । ततः पित्रा किरणवेगनृपोऽप्युक्तः—"महाराज त्वयाप्ययं राजलोकः पालनीयः । महत्यप्यपराधे बाहुल्यता रोपो विधेयः । समुद्रवन्मर्यादा नोल्लंघनीया । पंडितैः सह संगमः कार्यः । द्यूतादिव्यसनानि त्याज्यानि । तथाऽगुणेष्वादरः कार्यः । स्वाम्यमात्यराष्ट्रदुर्गकोशबलसुहृदात्मका सप्तांगराज्यलक्ष्मीः पालनीया । वत्स राज्यं नरकान्तं समस्ति । तत्रापि धर्मकार्ये यतितव्यं" । एवंविधां शिक्षां दत्वाऽखिलं जनं क्षामयित्वा श्रुतसागरचारणश्रमणस्यान्तिके राजा चारित्रमग्रहीत् । चारित्रं निरतिचारं प्रतिपाल्य पर्यन्तेऽनशनं विधाय केवलज्ञानं प्राप्य मुक्तिमवाप ।

अथ किरणवेगो भूपतिः पैतृकीं राज्यसंपदं प्राप्य नीतिशास्त्रानुसारेण प्रजां पालयामास । यतः—

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः । गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ १ ॥

तथा च

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥

अनासक्तमना विषयोद्भवं सुखं नृपः सिषेवे । तस्य किरणवेगनृपस्य पद्मावतीसमुद्भवो धरणवेग इति नामाङ्गजो बभूव । तस्य

नृपस्य राज्यं भुञ्जतो बहूनि वर्षाणि जातानि । अन्यदा बहिरुद्याने नन्दनवने ध्वस्तकल्मषः भव्यारविन्दानि प्रतिबोधयन् ग्रामानुग्रामं विचरन् विजयभद्राचार्यः समवासरत् । तस्य स्वाध्यायध्यानतत्पराः संयता बभूवुः । वनपालः किरणवेगं नृपं व्यज्ञपयत्—" राजेन्द्राद्य नन्दनोद्यानवने बहुमुनिपरिवारपरिवृता गुरवः समवसृताः" । तच्छ्रुत्वा नृपो जहर्ष । तस्य वर्धापनिकां दत्वा नृपस्तत्र गत्वा मुनीन् भक्तितो नमश्चक्रे । पुरीलोकः सर्वोऽपि गुरुं वन्दितुमागमत् । गुरवोऽपि राज्ञो जनस्याप्यनुग्रहाय धर्मोपदेशनां प्रारेभिरे । तथाहि—

आसाद्यते भवांभोधौ भ्रमद्भिर्यत्कथञ्चन । मुग्धैस्तत्प्राप्य मानुष्यं हा रत्नमिव हार्यते ॥१॥

अपारे संसारे कथमपि समासाद्य नृभवं, न धर्मं यः कुर्याद्विषयसुखतृष्णातरलितः ।
ब्रुडन् पारावारे प्रवरमपहाय प्रवहणं, स मुख्यो मूर्खाणामुपलमुपलब्धुं प्रयतते ॥ २ ॥

उत्तराध्ययनेऽप्युक्तम्—

जहा य कागिणीहेऊ सहस्सं हारए नरो । अपच्छ अंबगं भुच्चा राया रज्जं तु हारए ॥ १ ॥

यथा—सोपारकपत्तने द्वा भ्रातरौ वसतः । धर्मदत्तदेवदत्तनामानौ श्राद्धौ परस्परस्नेहलौ व्यापारं कुरुतः । लघुर्जिनधर्मेऽत्यन्तासक्तः, वारद्वयं प्रतिक्रामति त्रिकालं जिनानर्चयति, सामायिकावश्यकपौषधादीनि च करोति । व्यापारमपि करोति' एकदा वृद्धोऽनुजं वदति—" हे बान्धवाधुना लक्ष्मीं समुपार्जय, वृद्धत्वे धर्मानुष्ठानं क्रियते " । लघुना प्रोक्तं—" मदुक्तं शृणु । शास्त्रेऽप्युक्तं—

**यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो, यावच्चेन्द्रियशक्तिरप्रातिहता यावत्क्षयो नायुषः ।**
**आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ।।१।।**

तत एकदा ज्येष्ठभ्रात्रोक्तं–"अहं द्रव्योपार्जनार्थं देशान्तरे यास्यामि इदं गृहं धनं च सर्वं तवायत्तमस्ति । यत्नो विधेयः'। इत्युक्त्वा स देशान्तरे चचाल। रोहणाद्रौ गत्वा व्यापारं करोति । पञ्चदश वर्षाणि जातानि । सहस्रैकसंख्यया रत्नानि समुपार्जितानि । तेन चिन्तितं–'अथाहं निजधाम्नि यामि । व्यापारेणालं' इत्थं निश्चित्य स्वग्रामं प्रति चलितः । रत्नानां नवलिकां कृत्वा कटौ बद्ध्वा संनद्धः सुसार्थेन सह स्वनगरासन्नग्रामे समेतः।तत्र भोजनार्थं स्थितः। तत्रैकस्मिन्नापणे नवलिकां मुक्त्वा भोजनार्थं अन्नादिसामग्रीं गृहीत्वा सरसि गतः । करे चैका कपर्दिकाऽस्ति। तां भूमौ मुक्त्वाऽन्नं पक्त्वा भुक्त्वा चापणान्नवलिकां गृहीत्वा कटौ बद्ध्वा स्वनगरं प्रति चलितः । कपर्दिका तत्रैव सरस्तटे मुक्ता सा विस्मृता। तस्य मार्गे गच्छतो दिनशेषोऽस्ति। अतः शीघ्रं याति । इतश्च सा कपर्दिका स्मृता । 'अथाहं किं करोमि ? कपर्दिका विस्मृता । याम्यहं'। इति निश्चित्य तत्र पिप्पलतरोरधो गर्तां कृत्वा तत्र नवलिकां मुक्त्वा कपर्दिकाग्रहणार्थं पश्चाद्वलितः । तत्र गत्वा कपर्दिकां गृहीत्वा यावत् पश्चाद्वलति तावन्निशा जाता । ततस्तस्मिन्नेव ग्रामे स्थितः । इतश्च कोऽपि काष्ठवाहकः तद्वृक्षोपरिस्थितोऽस्ति। तेन गर्तायां नवलिकां क्षिपन् स दृष्टः । पश्चात्तां कर्षयित्वा स्वालये समानीय दीपकोद्योते सर्वं विलोकयति । मूढः किमपि नो वेत्ति । तेन मनसि विचारितं–" किमेते काचशकलाः ? एभिरहं किं करोमि ? प्रभाते कस्यापि दास्यामि । सोऽपि मे किंचिदन्नादिकं दास्यति "। इति विमृश्य काष्ठभारकं शिरसि गृहीत्वा तां नवलिकां साभिधानां वस्त्रांचले बद्ध्वा नगरसंमुखं चलितः ।

इतश्च लघुभ्राता देवदत्तो गृहे स्थितोऽस्ति । स च मात्रोक्तः—" वत्स तव ज्येष्ठो भ्राता धर्मदत्तो देशान्तरे गतोऽस्ति । तस्य बहुवासराः संजाताः । तस्योदन्तमात्रोऽपि नागतः । कुत्रापि विलोकय । कस्यापि पृच्छ " । इति माता पुनः पुनः कथयति । एकदा देवदत्तो जलपात्रं करे गृहीत्वा नगरान्निर्गतः । तेन मनसि चिन्तितं —' कोऽपि गच्छन्नागच्छन् विलोकनीयो मया ' । इति विभाव्य निर्गतः । तस्य पथि गच्छतः स काष्ठवाहकः शिरसि सभारकः श्रान्तः संमुखं मिलितः । तेनोक्तं—" हे पुरुषोत्तम श्रेष्ठिन् श्रान्तः तृषाक्रान्तश्चास्मि । मम जलपानं कारय " । तच्छ्रुत्वा तेन व्यवहारिणोक्तं—'जलमिदं पिब' इत्युक्त्वा जलं पायितं । स जलं पीत्वा संतोषं प्राप्तः क्षणमेकं विश्रम्योवाच—' हे श्रेष्ठिन् मद्वस्त्रे किञ्चिद्वद्धमस्ति । तव दर्शयामि ' । इत्युक्त्वा नवलिका साभिधाना दर्शिता । तेन नवलिकायां बान्धवाभिधानं दृष्ट्वा पृष्टं—'भो इयं नवलिका क्व प्राप्ता ? ' तेन सत्यमुक्तं—" नोपलक्षयामि । कोऽपि नरः पथा गच्छन् नवलिकां गर्तायां प्रक्षिप्य किञ्चिद्विमृश्य शीघ्रं पश्चाद्वलितः । मया तद् दृष्टं । ततो मया नवलिकां गृहीत्वा गृहे गत्वा दीपकच्छायायां विलोकिता । तन्मध्ये काचशकलाः सन्ति । मम किञ्चिद् द्रव्यं दत्त्वा गृहाण"। स व्यवहारी स्तोकमात्रं किञ्चिद् दत्त्वा नवलिकां गृहीत्वा बान्धवागमनं ज्ञात्वा मुदितः संमुखं ययौ ।

इतश्च ज्येष्ठबन्धुः रात्रिं विलंब्य सूर्योदयवेलायां चलितः । तत्र गर्तायां समेतः । द्रव्यस्थानं विलोकयति तद्द्रव्याभावे विलापं करोति रोदिति मुहुर्मुहुर्भूमौ लुठति विलपति आक्रन्दं करोति 'गतं गतं ' इति मुहुर्मुहुः कथयति । तदा लघुभ्राता देवदत्तः समागतः । स च तेन गृहिलत्वेन नोपलक्षितः । तदा लघुभ्रात्रा नवलिका दत्ता । तां पश्यन् सावधानो जातः । तां दृष्ट्वा चुंबत्यालिंगति च । ततोऽन्योन्यमालिंग्य स्नेहलौ गृहं प्रापतुः । स्वजना मिलिताः । सर्वेऽपि मुदिताः । स्नानभोजनानन्तरं ज्येष्ठेन भ्रात्रो-

क्तं—'बन्धो त्वया किमुपार्जितं ?'। लघुरुवाच—"मया साधर्मिकवात्सल्यादिषु बहुद्रव्यव्ययः कृतः, इयमेव मुख्यनवलिका ज्ञेया"। ज्येष्ठेनोक्तं—'विलोकय, मया तु बहुधनमुपार्जितं। लघुनोक्तं—"हे बन्धो त्वया बहुधनं समुपार्जितं, परं निर्गमितं, मत्पुण्यैः प्राप्तं"। ततः पुण्यं कृत्वा सुखिनौ जातौ। परलोके देवत्वं प्राप्तौ। अतो भो भविकाः शृण्वन्तु—यथैकया काकिण्या रत्नसहस्रं हारितं तथा स्रक्चन्दनवनितापुत्रधनादिसुखैः काकिणीरूपैः किं सहस्ररत्नसमं मोक्षसुखं हार्यते जीवैः। तस्माद्भविकैर्धर्मे यत्नो विधेयः। प्रमादः सर्वथैव त्याज्यः। यतः—

प्रमादः परमद्वेषी प्रमादः परमो रिपुः। प्रमादो मुक्तिदस्युश्च प्रमादो नरकायनम् ॥ १ ॥

अत एव धर्मः कार्यः। स च द्वेधा यतिगृहस्थभेदेन। तत्र यतिधर्मो दुष्करः, श्राद्धधर्मो द्वादशव्रतरूपः। तत्राणुव्रतानि पञ्च—अहिंसा प्राणातिपातविरमणं, मृषावादविरमणं, अदत्तादानविरमणं, मैथुनविरमणं, परिग्रहविरमणमिति पञ्चाणुव्रतानि। तत्र प्रथमप्राणातिपातविरमणव्रतस्य फलं शास्त्रे उक्तं—

आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं, वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरम्।
आरोग्यं विगतान्तरं त्रिजगतः श्लाघ्यत्वमल्पेतरं, संसारांबुनिधिं करोति सुतरं चेतःकृपार्द्रान्तरम् ॥१॥

हेमधेनुधरादीनां दातारः सुलभा भुवि। दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥ २ ॥

कृमिकीटपतंगेषु तृणवृक्षादिकेष्वपि। दयां सर्वत्र कुर्वीत यथात्मनि तथाऽपरे ॥ ३ ॥

तस्मिन् व्रते पञ्चातिचारास्त्याज्याः । ते चेमे —

वधो बन्धश्छविच्छेदोऽधिकभाराधिरोपणम् । प्रहारोऽन्नादिरोधश्च हिंसायां परिकीर्तिताः ॥ १ ॥

व्याख्या– वधश्चतुष्पदादीनां निर्दयं ताडनं १ । बन्धो रज्ज्वादिभिर्निर्दयं नियंत्रणा २ । छविच्छेदः कर्णनासागलकंबलपुच्छादिकर्तनं ३ । अतिभारः शक्त्यनपेक्षया गुरुभारारोपणं निर्दयत्वेन दण्डादिप्रहारः ४ । भक्तपाननिषेधः ५ । एते पञ्चातिचारास्त्याज्याः । यः स्वयं जीवान् रक्षति, अपरैरपि रक्षयति स भीमकुमारवदद्भूतां समृद्धिं प्राप्नोति तथाहि—

अत्रैव भरतक्षेत्रे कमलपुरं नाम्ना नगरं वरीवर्ति । तत्र प्रजापालको न्यायनिष्ठो हरिवाहनो राजा राज्यं करोति । तस्य मदनसुन्दरी नाम शीलालंकारभूपिता पट्टराज्ञी वल्लभाऽसित । साऽन्यदा सुखसुप्ता सिंहमंकस्थं स्वप्ने दृष्ट्वा राज्ञे न्यवेदयत् । राजापि तं निशम्याभिननन्द । ततः प्रभातकृत्यानि कृत्वाऽऽस्थानस्थितो नृपः स्वप्नशास्त्रविशारदं द्विजमाकार्य तत्र दत्तासनसमासीनं पप्रच्छ–' हे निमित्तज्ञ ! पूर्वं स्वप्नानां फलानि वद '। द्विजः प्राह–" नरेन्द्राकर्णय, यथैवोक्तं—

आरोहो गोवृषे वृक्षे शैलप्रासादहस्तिषु । रोदनागम्यगमने स्वप्ने मृत्युः प्रशस्यते ॥ १ ॥
वस्त्रान्नफलतांबूलपुष्पदीपदधिध्वजाः । सद्रत्नचामरे छत्रं मंत्रलब्धा धनप्रदाः ॥ २ ॥
देवस्य दर्शनं धन्यमर्चनं च विशेषतः । राज्यलाभः पयःपानं श्रिये चार्केन्दुदर्शनम् ॥ ६ ॥
तैलकुंकुमलिप्तं स्वं गीतनृत्यपरं तथा । हसन्तं वीक्ष्य दुःखाय पंडितोक्तं तु नान्यथा ॥ ४ ॥

शस्तं शुक्लं शुभं सर्वं निन्द्यं कृष्णं त्वशोभनम् । इत्यादि बहुधा देव स्वप्नशास्त्रे निगद्यते ॥५॥

एतच्छ्रुत्वा भूपालः पुनः पप्रच्छ—" अद्य रात्रौ राज्या स्वप्ने स्वोत्संगे सिंहो वीक्षितः । भोः पंडित ! तस्य किं फलं ? " । सोऽवदत्—' हे नृप तव पुत्रलाभो भविष्यति ' । ततो भूपोऽतिसंतुष्टो द्विजं संमान्य बहुद्रव्यं दत्त्वा व्यसृजत् । अथ राज्ञी सुसमये भाज्यतेजसं पुत्रमजीजनत् । ततः कुलक्रमायातोत्सवपुरस्सरं तस्य पुत्रस्य भीम इति नाम निर्ममे । स भीमः पञ्चभिर्धात्रीभिर्लाल्यमानः क्रमेण पित्रोर्मनोरथैः सह वृद्धिमवाप । तस्य बुद्धिसागरमंत्र्यंगजेन मतिसागरेण सह मैत्री जाता । स परमेष्टः परमवल्लभः क्षणमात्रमपि तस्य वियोगं न सोढा । भीमः शास्त्रशस्त्रादिकलासु प्रवीणः संजातः । अन्येद्युर्नृपतिरास्थाने उचितासनासीनः सपुत्रः स्थितोऽस्ति । तावदारामिकेणैत्य विज्ञप्तं—' स्वामिन् दिव्यवाक् देवचन्द्रमुनीन्द्रश्चंपकोद्याने समवसृतः ' तच्छ्रुत्वा हर्षरोमाञ्चैर्विभूषितगात्रो मुकुटवर्जस्वालंकरणानि नृपस्तस्मै ददौ । ततः कुमारमंत्रिसामन्तादिसहितो नृपो मुनीन्द्रं वन्दितुं ययौ । तत्र कृतोत्तरासंगो नृपतिरञ्जलिपूर्वकं गुरुमभिवन्द्य यथास्थानमुपाविशत् । गुरुर्दुरितापहारिणी धर्मलाभाशिषं ददौ । गुरुणा धर्मदेशना प्रारब्धा । तथाहि—

" अहो कोऽपि यथा कूर्मो वसत्यगाधपल्वले । वातोत्सारितसेवालावकाशेन्दुमवैक्षत ॥ १ ॥
वातेनैव पुनस्तत्रावकाशे नीलपूरिते । कूर्मस्येन्दुर्दुरापोऽभून्मनुष्यत्वं तथाङ्गिनः ॥ २ ॥
प्राप्यते हि प्रयत्नाद्यदनुत्तरसुरैरपि । तथेदं प्राप्य मानुष्यं यतितव्यं शिवाध्वनि ॥ ३ ॥

इत्यादि बहुधा गुरुप्रणीतां धर्मदेशनां सम्यग् निशम्य भालतलन्यस्तकरकमलकुड्मलो नृपो नत्वा मुदा विज्ञपयामास— 'प्रभोऽहं यतिधर्मेऽशक्तस्तस्मात्त्वमद्य मम गृहिधर्मो दीयतां'। गुरुणा नृपतेः सम्यक्त्वमूलो द्वादशव्रतरूपो धर्मो दत्तः। नृपस्तं धर्मं सम्यक् प्रतिपन्नवान् भीमकुमारोऽपि तां देशनां श्रुत्वा जातश्रद्धोऽभूत्। तं भीमं योग्यं ज्ञात्वा पुनर्मुनीन्द्रोऽपि प्रोवाच— भीम शृणु—

**धर्मस्य दया जननी जनकः किल कुशलकर्मविनियोगः। श्रद्धाऽतिवल्लभेयं सुखानि निखिलान्यपत्यानि॥१**

अतः कारणाद् भीम त्वया दया कार्या। निरपराधानां जीवानां हिंसा न कार्या। मृगयादौ सर्वथाऽभ्यासो न कार्यः'। ततो भीमो निरपराधजीवानां वधप्रत्याख्यानं करोति। सम्यक्त्वमपि प्रतिपन्नवान्। पुनर्मुनिरुवाच—कुमार त्वं धन्यः। तव नवे वयसि पुराणवयसां मतिरस्ति'। भीमस्य स्थिरीकरणार्थं पुनर्मुनिरवक्। "गतापराधजीवानां हिंसा न कार्या इत्यत्रोदाहरणं शृणु, तथाहि—

केऽपि षट् पुरुषा ग्रामवियाताय चलिताः। तेष्वेकोऽब्रवीत्—द्विपदं चतुष्पदं सर्वमेव हन्तव्यं। द्वितीयः प्राह—' पशुवधेन किं प्रयोजनं ? मनुष्या वध्याः'। तृतीयः प्राह—'नरा हन्तव्याः, न तु नार्यः'। तुर्येणाभाणि—'सायुधा नरा हन्तव्याः न निरायुधाः'। पञ्चमोऽप्याह—' ये आत्मनो घ्नन्ति ते हन्तव्याः '। षष्ठः प्राह—'कोऽपि न हन्तव्यः, सारवस्त्वेव ग्राह्यं' इत्येतेषां मनसो भिन्नतया कृष्णनीलकापोततेजःपद्मशुक्ललेश्याभिधा लेश्या जाताः। इति ज्ञात्वा शुक्ललेश्या धार्या। यतः—

**उत्तमा लघुकर्माणः स्तोकादप्युपदेशतः। कुप्रवृत्तेर्निवर्तन्ते यथा भीमकुमारकः॥ १ ॥**

तदा भीमकुमारो मुनीश्वरं पप्रच्छ—प्रभो युष्माकं नवं वयः । अस्मिन् वयसि किं विरागकारणं ?' इति पृष्टे मुनीश्वरोऽप्युवाच—" भीम शृणु—

कुंकणदेशे सिद्धपुरं नाम नगरं । तत्र भुवनसार इति नाम्ना पार्थिवोऽस्ति । सोऽन्यदास्थानस्थितोऽस्ति । तावद्दाक्षिणात्या नृत्यकारका आययुः । तैः समतालमृदंगादिकं तालच्छन्दानुरागनर्तनं ताताद्रेंगद्रेंगतिधपमपधेंधोंताथंगनिथंगनिधिधिकटिधिधिकटिपूर्वकमित्याद्यालापसुन्दरं कृत्वा प्रेक्षणीयं समारब्धं । आस्थानस्थो नृपस्तद् द्रष्टुं लयलीनः प्रवृत्तवान् । अथ द्वारपालेन विज्ञप्तं—"प्रभो? अष्टांगनिमित्तवित् कोऽपि नैमित्तिकः समागतोऽस्ति । भवतां दर्शनं कांक्षति" । नृपतिः प्राह—' कोऽयमवसरः ? इदमीदृशं नाटकं सुराणामपि दुर्लभं विलोक्यते ' । तदाऽमात्येनोक्तं—' स्वामिन्मैवं वद । नाटकं सुलभं । अष्टांगनिमितज्ञः पुरुषो दुर्लभः ' । ततो नृपस्यादेशाद्वेत्रिणा निमित्तज्ञो मध्ये मुक्तः । स पुस्तिकाकरः सदाकृतिः श्वेतवस्त्रो नृपाग्रे समागतः । नरेन्द्राय मंत्रोच्चारपूर्वकमाशीर्वादं दत्त्वा यथास्थानं समुपविष्टः । स राज्ञा भाषितः —' भो निमित्तज्ञ कुशलमस्ति ते ? ' । तदा निमित्तज्ञो दीनवाचाऽब्रवीत्— 'स्वामिन् तादृशं कुशलं यादृशं वक्तुं न शक्यते ' । सशंकितो नृपोऽवादीत्—' किमभ्रं पतिष्यति ? ' । स प्राह —'हे प्रभो? त्वया यद् गदितं तत्सत्यमेव' । पुनरादराद्राज्ञा साशंकेन भणितं—' हे सुन्दर यत्त्वया ज्ञानेन ज्ञातं तन्निःशंकं ब्रूहि' । नैमित्तिकः प्राह— "स्वामिन् किं बहुना कथनेन ? तथापि सत्यमुच्यते, मुहूर्तानन्तरं मुशलप्रमाणधाराभिर्धाराधरो धरणीतले तथा वर्षिष्यति यथा प्रासादमन्दिरादि सर्वं जलमयमेकार्णवाकारं भविष्यति " । तदा सर्वेऽप्यास्थानस्था नराः ससंभ्रमाः संजाताः । तदोत्तरोऽनिलः सहसा प्रादुर्बभूव । ईशान्यां कचोलमुखमात्रमभ्रपटलं प्रकटीजातं । निमित्तज्ञ ऊचे—' भो जनाः पश्यत पश्यत , इदमभ्रकं सर्वं व्योम

प्रच्छादयिष्यति ' । एवं वदतस्तस्य तदभ्रखंडमंबरे सर्वत्र व्याप्तं । आस्थानलोकः सर्वोऽपि स्वस्थानं गतः । नाटकं विसर्जितं । तदा महर्गमरांबरे तथा गर्जारवो जातो यथा मही प्रतिशब्देन पुंबारवं कुरुते भीतेव । पुनस्तडिद्दंडा उद्दंडाः स्फुरन्ति तां महीं ग्रसितुमिव । मुशलधाराभिर्घनो वर्षितुं नृपप्रमुखनराणां पश्यतामारेभे । क्षणेन पयसा व्याप्तं । पुरे हाहारवो जातः । जना आक्रन्दिरे । महान् प्रक्षोभोऽजनि । नीरं कुत्रापि न माति । नृपोऽमात्यो निमित्तज्ञ एते त्रयोऽप्येकस्मिन् सप्तभूमिकावासे चटिताः । नृपः पौरजनक्रन्दं दुःखी भराति । नीरं क्रमेण सप्तमभूमिकायां प्राप्तं । तद्वीक्ष्य भूपतिः प्राह—"अस्माकमकृतधर्माणां कष्टसंकटमागतं । सुकृतं न कृतं मया । ममायुः क्षीणं । अहो मया विषयासक्तचेतसा श्रीजिनेन्द्रभाषितधर्मो नो चक्रे । हा मया मुधा जन्म । यतः—

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं, तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
[1]योगदुःखकलितं चायुः परिक्षीयते, जीवं वारितरंगचञ्चलमहो सौख्यं कुतः प्राणिनाम् ॥

मया कल्पद्रुर्हारितः । काचखंडकृते मया चिन्तामणिर्हारितः । मयामूढेनासारसंसारकृते धर्मो हारितः । अथाहं क्व गच्छामि ? । इति विचिन्त्योवाच—"अरिहंता सरणं मज्झ सिद्धा सरणं मज्झ, साहवो सरणं मज्झ, केवलिपन्नत्तो सरणं मज्झ " । इत्थं नृपस्य विलपतो नीरं निकटमागतं। ततो नृपो हृदि नमस्कारं चिन्तयति । तावत्प्रवहणमेकं संमुखमागतं।

[1] तरंगबुद्बुदसमे इत्यपि पाठः । २ स्नुहीवृक्षो भाषायां 'थोर' इति प्रसिद्धः ।

तद् दृष्ट्वा सचिवोऽवादीत्–'नौरारुह्यतां कोऽपि सुरस्तत्राग्रेऽदः प्रवहणं ढौकते'। नृपस्तत्रारोढुं क्रमं यावदुत्क्षिपति तावन्नो मेघो नापि गर्जितं। तथैव स्वस्थावस्थं स्वं पश्यति। गीतनृत्योत्सवादिभिः सर्वलोकं मुदितं वीक्षते। दैवज्ञ वद, किमिदमाश्चर्यं?' इति भूभुजा पृष्टे निमित्तज्ञः प्राह—"राजेन्द्र मया तव विद्याबलेनेदमिन्द्रजाल दर्शितं"। नृपेण तस्य तोषाद्बहुद्रव्य दत्वा स विसर्जितः। राजा तदिन्द्रजालं दृष्ट्वा राज्यविरक्तो जातो मनसीति चिन्तयामास—"अहो यादृशमिन्द्रजालं दर्शित तादृशं सर्वं स्वरूपं संसारस्य तारुण्यस्नेहायुर्विभवादिक। अपवित्रोऽयं कायः। यतः—

रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रान्त्रवर्चसाम्। अशौचानां पदं कायः शुचित्वं तस्य तत्कुतः॥ १॥

यत्र जातस्तत्र रता ये पीतास्ते च मर्दिताः। अहो लोकस्य मूढस्य वैराग्यं किं न जायते॥ २॥

कोऽहं कस्मिन् कुत आयातः का मे जननी को मे तातः।
अतिपरिभावितसकलविचारः लोकोऽयं स्वप्नव्यवहारः॥ ३॥

आयुः सच्छिद्रकुंभस्थजलवद्गलनात्मकम्। लक्ष्मीर्वातस्फुरद्दीपकलिकेव चलाचला॥ ४॥

अनित्येऽस्मिन् जगद्वृत्ते आत्मा मेऽधुना नो रज्यते। पूर्वजाचीर्णं यतिव्रतमहमाचरिष्यामि"। इति मनसि निश्चित्य हरिविक्रमकुमाराङ्गजं स्वपदे न्यस्य तिलकाचार्यगुरुसमीपे श्रमणो जातः। सोऽहमेव। इदं मम वैराग्यकारणं"। पुनरपि मुनिराख्यत्—

गच्छादयिष्यति [1]। एवं वदतस्तस्य तदभ्रखंडमंबरे सर्वत्र व्याप्तं। आस्थानलोकः सर्वोऽपि स्वस्थानं गतः। नाटकं विसर्जितं। तदा महर्सैन्नान्तरे तथा गर्जारवो जातो यथा मही प्रतिशब्देन बुंबारव कुरुते भीतेव। पुनस्तडिद्दंडा उद्दंडाः स्फुरन्ति तां महीं ग्रसितुमिव। मुशलधाराभिर्घनो वर्षितुं नृपप्रमुखनराणां पश्यतामारेभे। क्षणेन पयसा व्याप्तं। पुरे हाहारवो जातः। जना आक्रन्दिरे। महान् पुरक्षोभोऽजनि। नीरं कुत्रापि न माति। नृपोऽमात्यो निमित्तज्ञ एते त्रयोऽप्येकस्मिन् सप्तभूमिकावासे चटिताः। नृपः पौरजनक्रन्दं शृण्वन् दुःखी भवति। नीरं क्रमेण सप्तमभूमिकायां प्राप्तं। तद्वीक्ष्य भूपतिः प्राह—"अस्माकमकृतधर्माणां कष्टसंकटमागतं। सुकृतं किञ्चिन्न कृतं मया। ममायुः क्षीणं। अहो मया विषयासक्तचेतसा श्रीजिनेन्द्रभाषितधर्मो नो चक्रे। हा मया मुधा जन्म हारितं। यतः—

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं, तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखकलितं चायुः परिक्षीयते, जीवं वारितरंगचञ्चलमहो सौख्यं कुतः प्राणिनाम्॥

स्नुहीवृक्षार्थं [2] मया कल्पद्रुर्हारितः। काचखंडकृते मया चिन्तामणिर्हारितः। मयामूढेनासारसंसारकृते धर्मो हारितः। अथाहं किं करोमि ?। क्व गच्छामि ?। इति विचिन्त्योवाच—"अरिहंता सरणं मज्झ सिद्धा सरणं मज्झ, साहवो सरणं मज्झ, केवलिपन्नत्तो धम्मो सरणं मज्झ"। इत्थं नृपस्य जिलपतो नीरं निकटमागतं। ततो नृपो हृदि नमस्कारं चिन्तयति। तावत्प्रवहणमेकं संमुखमागतं।

[1] जीवे वारितरगबुद्बुदसमे इत्यपि पाठः। [2] स्नुहीवृक्षो भाषायां 'थोर' इति प्रसिद्धः।

तद् दृष्ट्वा सचिवोऽवादीत्–'नौरारुह्यतां कोऽपि सुरस्तवाग्रेऽदः प्रवहणं ढौकते'। नृपस्तत्रारोढुं क्रमं यावदुत्क्षिपति तावन्नो मेघो नापि गर्जितं। तथैव स्वस्थावस्थं स्वं पश्यति। गीतनृत्योत्सवादिभिः सर्वलोकं मुदितं वीक्षते। दैवज्ञ वद, किमिदमाश्चर्यं?' इति भूभुजा पृष्टे निमित्तज्ञः प्राह—"राजेन्द्र मया तव विद्याबलेनेदमिन्द्रजाल दर्शितं"। नृपेण तस्य तोपाद्बहुद्रव्य दत्त्वा स विसर्जितः। राजा तदिन्द्रजालं दृष्ट्वा राज्यविरक्तो जातो मनसीति चिन्तयामास—"अहो यादृशमिन्द्रजालं दर्शित तादृशं सर्वं स्वरूपं संसारस्य तारुण्यस्नेहायुर्विभवादिक। अपवित्रोऽयं कायः। यतः—

रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रान्त्रवर्चसाम्। अशौचानां पदं कायः शुचित्वं तस्य तत्कुतः॥ १॥

यत्र जातस्तत्र रता ये पीतास्ते च मर्दिताः। अहो लोकस्य मूढस्य वैराग्यं किं न जायते॥ २॥

कोऽहं कस्मिन् कुत आयातः का मे जननी को मे तातः।
अतिपरिभावितसकलविचारः लोकोऽयं स्वप्नव्यवहारः॥ ३॥

आयुः सच्छिद्रकुंभस्थजलवद्गलनात्मकम्। लक्ष्मीर्वातस्फुरद्दीपकलिकेव चलाचला॥ ४॥

अनित्येऽस्मिन् जगद्वृत्ते आत्मा मेऽधुना नो रज्यते। पूर्वआचीर्णं यतिव्रतमहमाचरिष्यामि"। इति मनसि निश्चित्य हरिविक्रमनाराङ्गजं स्वपदे न्यस्य तिलकाचार्यगुरुसमीपे श्रमणो जातः। सोऽहमेव। इदं मम वैराग्यकारणं"। पुनरपि मुनिराख्यत्—

'भो भीम त्वया प्रतिपन्ने व्रते निश्चलेन भाव्यं'। भीमोऽप्याह—'तवादेशः प्रमाणं मे'। अथ मुनिं नत्वा पर्षन्निजस्थानं गता। भीमोऽपि देवपूजादयादानादिकमगण्यपुण्यं कुर्वन् युवराजपदवीं भुनक्ति।

एकदा निजधाम्नि कुमारो मित्रसंयुतः क्रीडति। तदा तत्रैकः कापालिकोऽभ्यागात्। आशीर्वादवचःपूर्वमुपविश्य नृपाङ्गजं भीममेकान्तं याचित्वेदमाह—"भो भीम पराक्रमपरोपकारक शृणु, मम भुवनक्षोभिणी नाम वरविद्याऽस्ति। तस्या द्वादश वर्षाणि जातानि। मया पूर्वसेवा कृता। अधुना चोत्तरसेवां प्रेतवने गत्वा एष्यत्कृष्णचतुर्दशीदिने कर्तुकामोऽस्मि। अतः करणात् भो महासत्त्व त्वमुत्तरसाधकोऽपि चेद्भवसि, तदा मे विद्या सिध्यति"। राजसूस्तच्छ्रुत्वा मनसीदं चिन्तयति—'अनेन विनाशिनाऽसारेण शरीरेण कस्यापि गुणो भवेत् तदा मया किं नार्जितं?' इति संचिन्त्य तद्वचः प्रतिपन्नं। पुनः पाखंडी प्राह—"भोः कुमार दशभिर्दिनैः कृष्णचतुर्दशी एष्यति, तावन्त्यहानि तव पार्श्वे स्थातव्यं मया"। ततः कुमारेणानुज्ञातस्तत्र स्थितः। कुमारेण सह भोजनं कुरुते, गोष्ठिं च कुरुते। तत एकान्ते मंत्रिसुतोऽवादीत्—"स्वामिन् पाखंडिना सह तव का गोष्ठी तवेदं न युक्तं। दुर्जनसंगः कालकूटमिव मारयति"। कुमारः प्राह—"भो मित्र सत्यमेतत्त्वयोदितं। किंतु मया दाक्षिण्येन प्रतिपन्नं वचः। तेन निर्वाह एव श्रेयान्"। पुनः पुनर्मित्रेण निवारितोऽपि भीमः कदाग्रहं नामुचत्। क्रमेण सैव कृष्णचतुर्दशी समायाता। तदा रजनीप्रहरैकानन्तरं कपालिना सार्धं वीरवेषधरः कुमारो निर्भयः श्मशानं प्रति चलितः। तत्र कपालिर्मंडलमालिख्य कामपि देवतां स्मृत्वा कुमारस्य शिखाबन्धं कर्तुमुद्यतः। तावद्भीमो जगौ—'अहो मम कः शिखाबन्धः, सत्त्वमेव शिखाबन्धः'। इत्युक्त्वा भीमः सज्जखड्गः पञ्चानन इव तदन्तिके साहसैकरसिकः संस्थितः। तदा पाखंडिना चिन्तितं—'अस्य शिखाबन्धच्छलं व्यर्थं जातं, पराक्रमेणैवास्य

विसयविसं हालाहलं विसयविसं उक्कडं पीयंताणं । विसअविसा अन्नं पि व विसयविस विसूइया होई ॥१॥
सल्लं कामा विसं कामा कामा आसीविसोपमा । तम्हा कामं परिच्चज्जा सग्गं गच्छति तीरओ ॥२॥

मातस्त्वयेदृशं न वाच्यं । त्वं मम मातैव " इत्युक्त्वा तस्या देव्याश्चरणयोः पतितः । अथ यक्षिणी तुष्टा प्राह–' वत्स त्वं साहसिकाग्रणीः । वरं वृणीष्व ' । तदा भीमोऽवक्–' मातस्त्वत्प्रसादेन सर्वमेव ममास्ति ' । ततो देवी जगौ–' वत्साजेयो भव त्वं ' । कुमारेणोक्तं–' मम जिन एव शरणम् '। देव्याप्युक्तं—' ममापि जिन एव शरणं' । तयोरित्येवं मिथः संलपतोः कुतोऽपि मधुरध्वनिं [illegible] । तस्याः पृष्टं–' कस्यायं ध्वनिः श्रूयते ? ' । साऽब्रवीत्–" अस्मिन् विन्ध्याचले मुनय उपोषिताश्चतुर्मासीं सस्थिताः [illegible]न्या अधुना स्वाध्यायध्यानकृत्यतत्पराः सन्ति । तेषामयं ध्वनिः " । ततो भीमोऽवदत्–' तत्राहं गत्वा तान् वन्दित्वा सफलीकरोमि ' । इत्युक्त्वा भीमस्ततो निर्गतः । यक्षिण्याऽध्वा दर्शितः । कृतनानासनाभ्यासास्तपोधना यत्र वसन्ति तत्र । भीमः साधून् वन्दते स्म । सापि यक्षिणी सपरिवारा मुनीन् वन्दितुं समागता । तत्र द्वावपि सुरीकुमारौ धर्मध्यानसमाहितान् साधून् वन्दित्वा स्वाध्यायं शृण्वाते । अनुमोदनां चक्राते ।

इतश्चैकां कांचिद् गगनादायान्तीं महाभुजां भीमो ददर्श । कालदंड इवाकस्मात् कुमारस्य सन्निधावपतत् । भीमेन चिन्तितं— [illegible]मे ? इति चिन्तयन् प्रेक्षते, तावत्सा भुजा भीमस्य खड्गमादायाचलत् । ' दीर्घा कृष्णा कस्येयं भुजा, क्व यास्य[illegible]ः कुमारो द्रागुत्प्लुत्य तामारुरोह । तस्यां व्रजन्त्यामारूढो भीमोऽनेकनदीपर्वतकाननानि पश्यन् क्रमेण [illegible]दृशं कालिकाभवनं ?—

विसयविसं हालाहलं विसयविसं उक्कडं प्रीयंताणं । विसअविसा अन्नं पि व विसयविस विसूइया होई ॥१॥
सल्लं कामा विसं कामा कामा आसीविसोपमा । तम्हा कामं परिच्चज्जा सग्गं गच्छति तीरओ ॥२॥

मातस्त्वयेदृशं न वाच्यं । त्वं मम मातैव " इत्युक्त्वा तस्या देव्याश्चरणयोः पतितः । अथ यक्षिणी तुष्टा प्राह–' वत्स त्वं साहसिकाग्रणीः । वरं वृणीष्व ' । तदा भीमोऽवक्–' मातस्त्वत्प्रसादेन सर्वमेव ममास्ति ' । ततो देवी जगौ–' वत्साजेयो भव त्वं ' । कुमारेणोक्तं–' मम जिन एव शरणम् '। देव्याप्युक्तं—' ममापि जिन एव शरणं' । तयोरित्येवं मिथः संलपतोः कुतोऽपि मधुरध्वनिं भीमः शुश्राव । तस्याः पृष्टं–' कस्यायं ध्वनिः श्रूयते ? ' । साऽब्रवीत्–" अस्मिन् विन्ध्याचले मुनय उपोषिताश्चतुर्मासीं मस्थिताः सन्ति । ते धन्या अधुना स्वाध्यायध्यानकृत्यतत्पराः सन्ति । तेषामयं ध्वनिः " । ततो भीमोऽवदत्–' तत्राहं गत्वा तान् वन्दित्वा निजं जन्म सफलीकरोमि ' । इत्युक्त्वा भीमस्ततो निर्गतः । यक्षिण्याऽध्वा दर्शितः । कृतनानासनाभ्यासास्तपोधना यत्र वसन्ति तत्र गत्वा भीमः साधून् वन्दते स्म । सापि यक्षिणी सपरिवारा मुनीन् वन्दितुं समागता । तत्र द्वावपि सुरीकुमारौ धर्मध्यानसमाहितान् साधून् वन्दित्वा स्वाध्यायं शृण्वाते । अनुमोदनां चक्राते ।

इतश्चैकां कांचिद् गगनादायान्तीं महाभुजां भीमो ददर्श । कालदंड इवाकस्मात् कुमारस्य सन्निधावपतत् । भीमेन चिन्तितं—'किं करिष्यत्यसौ' ? इति चिन्तयन् प्रेक्षते, तावत्सा भुजा भीमस्य खड्गमादायाचलत् । ' दीर्घा कृष्णा कस्येयं भुजा, क्व यास्यतीति ' विचिन्त्य सकौतुकः कुमारो द्रागुत्प्लुत्य तामारुरोह । तस्यां व्रजन्त्यामारूढो भीमोऽनेकनदीपर्वतकाननानि पश्यन् क्रमेण कालिकाभवनभुवि प्राप ।कीदृशं कालिकाभवनं ?—

नानास्थिमयभित्तिस्थनृमुंडकपिशीर्षकम् । कंकालकल्पितद्वारं दन्तिदन्तोरुतोरणम् ॥ १ ॥
केशपाशपताकाढ्यं लंबितासितचामरम् । व्याघ्राजिनकृतोल्लोचं रुधिरारुणभूतलम् ॥ २ ॥

तत्र भवने भीमेन मुंडमालास्रग्धारिणी क्रूराक्षी महिषारूढा कालिकामूर्तिर्दृष्टा । तस्याः पुरः स एव शठः पापिष्ठो रुष्टो धृष्टः पाखंडी कापालिको वामहस्तेन सुन्दरं नरं बिभ्राणो दृष्टः । यस्यां भुजायामारूढो भीमः समागतः सा कापालिकस्य वामेतरा भुजा । 'करे गृहीतस्य किं करिष्यत्यसौ तत्प्रच्छन्नीभूय वीक्षेऽहं पश्चाद्यथोचितं करिष्ये' इति निश्चित्य भुजायाः सहसोत्तीर्य तस्यैव भवनस्य पृष्ठे निलीय रहः स्थितः । ततः कापालिको भुजायाः खड्गमादाय वामकरात्तं नरमब्रवीत्—'रे वराकाभीष्टां देवतां स्मर, अनेनासिना तव शिरश्छित्वा देवतां पूजयिष्यामि' । तच्छ्रुत्वा स नरः प्राह—" त्रिजगज्जीववत्सलवीतराग एव शरणमस्तु मे । तथा कुलक्रमादागतः परोपकारी पुण्यवान् मम प्राणाधिकतरो दयावान् जिनधर्मरसिको मम मित्रं हरिवाहननन्दनो भीमकुमारः शरणं । यो मया वारितोऽपि कापालिकेन सार्धं क्वापि गतः, स एव भीमकुमारो मम शरणमेवास्तु । यथेप्सितं कुरु शीघ्रं " । तदा पाखंडी प्राह—"रे मूर्ख स मया लक्षणवान् ज्ञात्वा तस्य शिरश्छेदेन देवीपूजा प्रारब्धा । स मम करान्नंष्ट्वा क्वापि गतः । त्वमपि [१]तल्लक्षणोऽसि । तत्स्थाने त्वमिहानीतोऽसि । तेन निःसत्त्वेन स्मृतेन किं ?। किं च देव्या मम कथितं । तव स्वामी विन्ध्याचलगुहासन्नचैत्ये तद्भिक्षुसमीपे स्थितोऽस्ति । तस्य खड्गः सल्लक्षणत्वेनेहानीतः । रे मूर्ख स इहागत्य कथं तव रक्षिता भविष्यति ? " । भीमस्तदा-

---

१ सल्लक्षणोऽसि इति वा पाठः ।

लापं श्रुत्वाऽमर्षाभिपूरितो दध्यौ—'अयं पापो मदीयं मंत्रिणं विडंबयति'। ततो हक्कित्वा प्रकटीभूयोवाच—'सोऽहं भीमः सर्वेषु जन्तुषु सौम्यः तव संहारकरणे भीमोऽस्मि'। ततोऽसौ कापालिको मंत्रिणं मुक्त्वा भीमसंमुखं चलितः। भीमेनापि साहसमवलंब्य लुलित्वाशु पद्भ्यां धृत्वा भूमौ स पातितः। केशेषु धृत्वा हृदि चरणौ यावत्ताडयति भापयति, तावद्देव्याकुलाऽवदत्—"भो भो भीम मा मारयैनं। एष कापालिको मम महावत्सलः शिरःकमलैर्मदीप्सितं करोति। अस्याष्टोत्तरशतैः पूर्णैः सेत्स्यामि। प्रत्यक्षीभूयास्येप्सितं दास्यामि। अधुना वत्स त्वमागतः। तव पौरुषेण तुष्टाहं। अभीष्टं प्रार्थय"। ततो भीमोऽवदत्—"मातर्यदि मम तुष्टासि प्रियं च दत्से तदा मनोवाक्कायैर्जीवहिंसां परित्यज। मातः शृणु, धर्मस्य बीजं जीवदयैव। तया च सर्वसमीहितं स्यादेव। तत्रापि केवलं दयैव विलोक्यते। हिंसया संसारे भ्रमणं भवति। मातस्तस्माद्धिंसा त्याज्या। उपशमं भज"। ततस्तद्वाक्यामृतसंसिक्ता देवी लज्जिता मनसि दध्यौ—'अहोऽस्य कीदृशं पौरुषं? कीदृशं सत्त्वं? मनुष्यत्वे कीदृग् महाबला मतिः?' इति ध्यात्वा सा कालिकाऽवदत्—वत्स शृणु, मयाद्यप्रभृति सर्वोऽपि जीवराशिः स्वजीवितवद्रक्षणीयः'। इत्युक्त्वा कालिकाऽदृश्याऽभूत्। अथ मतिसागरो मंत्री लब्धक्षणो भीमं ननाम। भीमोऽप्यश्रुजलपूर्णाक्षो मित्रमालिंग्य पृष्टवान्—'अनेन पापिना कापालिकेन त्वमपि दारुणावस्थां कथं प्रापितः?'। मंत्री प्राह—"प्रभो शृणु, रात्रिप्रथमप्रहरे तवौकसि प्रिया समायाता। तावत्त्वां नैक्षत। ततस्तया संभ्रांतया यामिकाः पृष्टाः। ते सर्वेऽपि त्वां विलोकयन्तस्त्वामपश्यन्तश्च गत्वा राज्ञे न्यवेदयन्। ततो भूपस्त्वां सर्वत्राशोधयत्। कुत्रापि शुद्धिर्न प्राप्ता। तावच्चिर्चिन्तितं 'वत्सः केनाप्यपहृतः' इति ब्रुवन् नृपः सिंहासनात् पपात। सहसा मूर्छां प्राप। मातृवर्गोऽपि मुमूर्छ। ततश्चन्दनरससंसिक्ताः कथमपि चेतनामापुः। राजा राज्यो मंत्रिणश्च सर्वेऽपि विलपितुं लग्नाः। ताव-

देका नायिका महमाऽऽययौ । तया समादिष्टं—" भूपाल चिन्तां मा कुरु । तवाहं कुलदेवता । तवाङ्गजः पाखंडिनोत्तरसाधकच्छलेन श्मशाने नीतः । तत्र स शिरो ग्रहीतुं समुद्यतः " इत्यादि सर्वमपि कथयित्वोक्तं—' तव सुतः कतिपयैर्दिवसैर्महर्द्ध्या समेष्यति । इत्याख्याय सा तिरोदधे । तस्या इदं वचः श्रुत्वाऽहं श्मशाने त्वां शोधयितुं गृहान्निर्गतः । तावदनेन पापिनोत्क्षिप्यात्रानीतः । अनेनाहं विगोपितः । मया पुण्ययोगेनाधुना प्रभो त्वं दृष्टः " । ततः कापालिकोऽब्रवीत् —" अहो सात्त्विकोत्तम त्वया कालिकाया दयामयो धर्मः कथितः, स मयाऽप्यङ्गीकृतः । त्वं मम धर्मदानेन धर्मगुरुरेव । तत्राहं सेवकः । तत्राहं किं ब्रुवे ? । त्वं घृणाधिकः । किमहं स्तुवे " । यावदेवं प्रजल्पति तावत्सूर्योदये तत्र सप्ताङ्गप्रतिष्ठितः पर्वतकायप्रायो महानेकः करी समागतः । स करी समंत्रिणं कुमारं शुंडया निजपृष्ठे समारोप्य कालिकाचैत्यान्नभस्तल उत्पपात । तदा कुमारो विस्मितोऽवादीत्—'मंत्रीश पश्य, भूतले हस्तिरत्नं कीदृग्दृश्यते ? आवां गृहीत्वा क्व यास्यति ? ' । तदा मंत्री सर्वज्ञवचनभावितात्माऽब्रवीत्—' भोः कुमारेन्द्र नायं करी । किं तु भवत्पुण्यप्रेरितः कोऽपि सुरः । आवां गृहीत्वा यत्र याति तत्र यातु । सर्वत्रापि पुण्यप्रभावात् सुन्दरं भविष्यति " । स करी क्षणेन व्योम्नोऽवतीर्यैकत्रोद्वसपत्तनगोपुरद्वारे तौ विमुच्य कुत्रापि गतः । ततः कुमारो मंत्रिणं बहिर्मुक्त्वा कौतुकान्निर्भयो निशंक एकाकी नगरस्यान्तः प्रविवेश । तत्र शून्यानृद्धिपूर्णान्मनोहरान् हट्टगृहान् पश्यन् नगरमध्ये याति । तत्रैकं सिंहमुखगृहीतं नरपुंगवमर्धाधीनं । कुमारस्तं दृष्ट्वा चिन्तयति—' कोऽपि दिव्यानुभावः ' इति ध्यात्वा सविनयं सिंहं प्राह—' भोः सिंह इमं नरं मुञ्च ' । तदा सिंहोऽपि तं नरं निजपादान्तरे क्षिप्त्वा जातशंक इव भीममित्यब्रवीत्—' अहो सत्पुरुष मया क्षुधार्तेन चिराद्भक्ष्यं प्राप्तम् । कथमहं मुञ्चामि ? ' । कुमारः प्राह—"त्वं कोऽपि सुरोऽसि । केनापि हेतुना त्वयेदं सिंहरूपं विकुर्वितमस्ति । परंतु देवाः कवलाहा-

रिणो न भवन्ति । देवस्यापि हिंसा न युक्ता । अथवा यदि तव मानुषामिषभक्षणे स्वेच्छास्ति, तदाहं स्वांगतो मांसान्यर्पये । तानि त्वं भक्षय " । तन्निशम्य सिंहोऽप्यवदत्—" सत्यमिदं । किं तु प्राच्यभवेऽनेन मम तादृग्दुःखं कृतं यथा वक्तुं न पार्यते । अस्य पापिष्ठस्य भवशतमपि हन्मि, तथापि कोपो न याति " । कुमारः प्राह—" भो भद्र दीनोऽयं दृश्यते । दीनेषु कः कोपः ? । दीनमिमं मुञ्च । कषायभवं पापं निर्धूय मोक्षमन्यभवे गम्यते " । इत्यादियुक्तिभिर्बाढं बोधितोऽपि हरिस्तं नरं न मुञ्चति । तदा राजसूश्चिन्तयामास—' कोपाविष्टस्य दुष्टस्य केवलं ताडनोचिता ' । ततः कुमारः सज्जीभूय शस्त्रीं करे कृत्वा सिंहसंमुखं धावितः । सिंहोऽपि तं नरं स्वीयपृष्ठे निक्षिप्य मुखं व्यादाय धावितः । भीमेन स करे धृत्वा मस्तकोपरि भ्रमयितुं प्रारेभे । तदा तत्करात् यक्षमीभूयादृश्यो जातः । सिंहगृहीतनरस्तत्रैव स्थितः । भीमोऽपि तस्य करे लग्नो राजकुलेऽविशत् । तत्र शून्यानि राजभवनानि पश्यन् एकस्मिन् सौधस्य सप्तमभूमितल आरुरोह । तत्र काष्ठशालभञ्जिकाः सुवर्णमयमासनं सगौरवं ददुः । भीमस्तत्र विस्मितो निविष्टः । क्षणेन स्नानसामग्र्यामागतायां दारुपुत्रीभिरुक्तं—' विभो मज्जनं क्रियताम् ' । भीमोऽप्याह—' मम मतिसागरो वयस्यो बहिः स्थितोऽस्ति तमाकारयत ' । ताभिः सोऽप्यानीतः । भीमः समित्रः स्नानं दिव्यभोजनं च कारितः । वरपल्यंके स्थापितः । सविस्मयो यावदस्ति तावत्कुतोऽप्येत्य चलत्कुंडलाभरणः स्फुरत्कान्तिः सुरः प्रोचे—' तव साहसात्तुष्टोऽस्मि, वरं ब्रूहि ' । भीमः प्रोवाच—' तुष्टश्चेत्तदाशु कथयतु भवान्, कोऽसि ? इदं नगरं कथं शून्यं ? ' । ततो देवोऽब्रवीत्—" आकर्णय । इदं हेमपुरं नाम नगरं । हेमरथो नृपो राज्यं करोति । तस्य चंडाख्यः पुरोहितोऽस्ति । स पुरोहितः सर्वजनेषु द्वेषी । राजापि क्रूरः प्रकृत्या कर्णदुर्बलः । स्तोकेऽप्यपराधे दंडमुल्वणं करोति । अथ केनापि पापिना चंडपुरोहितस्यालीकोऽपराधः कथितः । राजापि रुष्टः । भूभुजा

ऽविचार्य चंडपुरोहितस्तप्ततैलसेकतः कदर्थ्य मारितः । सोऽकामनिर्जराभावान्मृत्वा सर्वगिलाभिधो राक्षसो जातः । सोऽहम् । पूर्वभववैरादहमिहागतः । सर्वपुरलोको मया तिरोहितः । मया सिंहरूपं विकुर्व्य हेमरथोऽयं नृपो गृहीतः । त्वया महात्मना एनं नृपं मोचयित्वा मम चमत्कारश्चक्रे। तवानुभावान्मयाऽयं मुक्तः । मयाऽदृश्येन तत्र स्नानभोजनोपचारः कृतः। तवानुवृत्त्या मया लोकोऽपि प्रकटितः " । तच्छ्रुत्वा कुमारेण यावत्पुरे आलोकितं तावदखिलो जनो दृष्टः । राजवर्गोऽपि प्रकटितो दृष्टः । अत्रान्तरे सुरासुरैः स्तूयमानशरणश्रमणमुनिर्व्योम्ना गच्छन् कुमारेण ददृशे । पुराद्बहिः समवसृतः । तदा भीमेनोक्तं—" राक्षसेन्द्र ममायं गुरुः । अस्य पादांभोरुहमभिवंद्य निजं भवं सफलीकुरु । यत उच्यते—

जिनेन्द्रप्रणिधानेन गुरूणां वन्दनेन च । न तिष्ठति चिरं पापं छिद्रहस्ते यथोदकम् ॥ १ ॥ "

ततः कुमारो मंत्री रक्षो हेमरथनृपः सर्वेऽपि मुनिसन्निधौ जग्मुः । तैर्भूतलन्यस्तमस्तकैर्मुनिः प्रणतः । पौरैरप्यागत्य प्रणतः । मुनिनाथेन देशना प्रारब्धा । यथा—

" कषाया भवकारायां चत्वारो यामिका इव । यावज्जाग्रति पार्श्वस्थास्तावन्मोक्षो नृणां कुतः ॥ १ ॥

व्याख्या—अहो भव्याः कषायाश्चत्वारः सन्ति । तत् श्रूयताम्—

स्युः कषायाः क्रोधमानमायालोभाः शरीरिणाम् । चतुर्विधास्ते प्रत्येकं भेदैः संज्वलनादिभिः ॥ १ ॥

पक्षः संज्वलनः प्रत्याख्यानो मासचतुष्टयम् । अप्रत्याख्यानको वर्षं जन्मानन्तानुबन्धकः ॥ २ ॥

एवं क्रोधादयश्चत्वार एव कषाया ज्ञेयाः । ज्ञात्वा त्याज्याः । तेषां मध्ये क्रोधो दारुण एव । तथाहि—

तत्रोपतापकः क्रोधः क्रोधो वैरस्य कारणम् । दुर्गतेर्वर्तिनी क्रोधः क्रोधः शमसुखार्गला ॥ १ ॥

तथा च—

मिष्टान्नं भुंक्ष्व हृद्यं पिब जलमपि तांस्तान् रसान्मा च रुंधि ।
कायक्लेशं त्यजाङ्गं विमलय सुकरः कूरकुंभर्षिणोक्तः ।
मोक्षोपायोऽस्ति कोपं जय भज शिवजं शर्म साधो निबोध ।
द्राक्षेक्षुक्षीरखंडप्रभृतिरसवलान् संनिपातेऽपि दुष्टान् ॥ १ ॥

सिद्धान्तेऽप्युक्तम्—

फरिसवयणेण दिणतव अहिक्खवंतो हणइ मासतवं। वरिसतवं सवमाणो हणइ हणंतो अ सामन्नं ॥१॥

स एव सात्त्विको विद्वान् स तपस्वी जितेन्द्रियः । येनाशु क्षान्तिखड्गेन क्रोधशत्रुर्निपातितः ॥२॥"

इत्यादिसाधुवचनेन मर्वंगिलराक्षसो बुद्धः सन्नवदत्—'भगवन् कुमारानुभावेन मया ग्रामलोकोपरि तथा नृपोपरि कोपो मुक्तः'। अत्रान्तरे तत्र गजो गर्जन्नेवैकः समायातः । तदा परिषत् सर्वापि क्षुब्धा । सोऽपि शान्तमना मुनिं ववन्दे । ततो हस्तिरूपं

संहृत्य मत्यक्षं गलत्कुंडलभूषाङ्गो यक्षो जातः । ततो मुनिनाऽभाणि—' अहो यक्षराज त्वया गजरूपं विधाय स्वपुत्र हेमरथं रक्षितु भीमकुमार इहानीतः ' । यक्षेणोक्तं—" भगवन् सत्यमेव । प्राग्जन्मनि हेमरथो ममाङ्गजः । प्राग्भवस्नेहान्मया हेमरथरक्षणाय भीमोऽत्रानीतः । मया पूर्वजन्मनि सम्यक्त्वमङ्गीकृत्य कुसंसर्गेण दूषितं । तेनाहं व्यन्तरो जातः । पुनर्मम सम्यक्त्वमारोपय" । तदा मुनिपुंगवो यक्षरक्षोनृपादीनां सम्यक्त्वं विधिनाऽदात् । भीमेन कुपाखंडिसंसर्गाच्छुद्धिरर्थिता । मुनिनाऽऽलोचना दत्ता । अथ सर्वेऽपि कुमारादयो मुनीश्वरं नत्वा हेमरथनृपस्य भवनं जग्मुः। तत्र हेमरथो नृपः कुमारं प्रणिपत्य व्यजिज्ञपत्—"अथ मया यज्जीव्यते राज्यसंपच्च भुज्यते तत्सर्वं कुमार जगतां सार तवैव माहात्म्यं । अहं भवदादेशकारी । अहं किञ्चिद्विज्ञपयामि, तत्कुरु । मम मदालसा नाम सुताऽस्ति तस्याः पाणिग्रहणं कुरु" । कुमारेण तस्याग्रहात्सा कन्या परिणीता । अत्रान्तरे कालिका कापालिका-न्विता विंशतिभुजा विमानमधिरुह्य तत्र प्राप्ता । कुमारमभिवन्द्योपविष्टा । ततस्तयोक्तं—" अहो भीम मदीयं हारं गृहाण । अ-स्मिन् हारे नव रत्नानि सन्ति । तेषां प्रभावात्तव त्रिखंडाधिपत्यं खेगमनं च भविष्यति । नृपाः सर्वेऽपि तवाज्ञाकारिणो भविष्यन्ति । अथ च तव मातापितरौ पुरलोकाश्च तव विरहादतीव दुःखिताः सन्ति । तव दर्शनमभिकांक्षन्ति । अहं विमानमारुह्य तव नगरो-परि गता तदा तव पितरौ पौरजनाश्च तव गुणान् मुहुर्मुहुः स्मारं स्मारं विलपन्तो दृष्टाः । तदा तान् प्रति मयोक्तं—भो भोश्चिन्तां मा कुरुत, मया दिनद्वयस्यान्ते भीमोऽत्रानेतव्य इति । तस्मात्त्वया तत्र गन्तव्यं " । इति श्रुत्वा भीमस्तत्र गन्तुमुत्सुको जातः । तदा यक्षो विमानं विकुर्व्याब्रवीत्—कुमारास्मिन् विमाने समारुह्य पितुः पुरे गन्तव्यं । नृपेण गजतुरंगमादिकं बहुवस्त्राणि द्रव्याभरणर-त्नादीनि दत्तानि । अथ भीमकुमारो नृपं हेमरथं संबोध्य तद्विमानमारुह्य कन्यामंत्रिसंयुतः स्वपुरं प्रति चचाल । गजतुरंगमपायिकाः

सर्वेऽपि भूमौ चलन्ति । देवास्तस्य पुरो गीतनृत्यं कुर्वन्ति । कुञ्जरा गर्जन्ति । हया हेषारवं कुर्वन्तो वल्गन्तश्च प्रतस्थिरे । महता तूर्यनादेन महोत्सवेन च युक्तः कुमारः कमलपुरासन्नकानने आप । तत्र जिनचैत्ये रक्षोयक्षादिभिः सह विधिना देवान् स्तोतुं प्रचक्रमे तथा हि—

मुनीन्द्रहृदयनन्दकन्दकन्दलतांबुदः । विकल्पकल्पनापेत वीतराग नमोऽस्तु ते ॥ १ ॥
ध्यातो येन जिनेश त्वं विकासिकमलानन । तस्य विश्वोत्तमानन्तसौख्यलक्ष्मीनिधिर्भवेत् ॥ २ ॥
निर्वापयसि संसारे मरुस्थलं पथि स्थितम् । दृष्टोऽप्याकस्मिकाम्भोदसोदरः परमेश्वरः ॥ ३ ॥
ध्येयस्त्वमेव भगवन् ज्योतीरूपो हि योगिनाम् । अष्टकर्मविघातायाष्टांगयोगः कृतस्त्वया ॥ ४ ॥
जले वा ज्वलने वापि कान्तारे शत्रुसंकटे । सिंहाहिरोगाविपदि त्वमेव शरणं मम ॥ ५ ॥

इति स्तोत्रेण जगन्नाथं स्तुत्वा पादचारेण पितृपादं नमस्कर्तुं चचाल । तावद् गमने भेरीढक्कामृदंगपटहादिभिरातोद्यैर्वाद्यमानैर्निर्घोष उच्छलितः । हरिवाहनो नृपस्तमाकर्ण्य मंत्रिणः पप्रच्छ—'कोऽयं महाध्वनिः ?' । तावद्वनपालोऽभ्येत्य नृपं वर्धापयति—'स्वामिंश्चिरं जय । भीमकुमारः समागतः' । नृपः स्वांगलग्नमाभरणं तस्य दत्त्वा प्रतिहारमादिश्य पुरशोभामकारयत् । प्रधानादयः सर्वेऽपि संमुखं समाययुः । तावद् भीमः सपरिच्छदः समागत्य मातुः पितुश्च चरणौ प्राणमत् । महाप्रमोदो जातः । सर्वेऽपि यथास्थानं

जग्मुः । भोजनानन्तरं नृपेण भीमस्याभीष्टमतिसागरः पृष्टः । ततो मतिसागरो भूभुजः पुरो यथावृत्तं सर्वमाचख्यौ । नृपः संतुष्टः । पित्रा बह्वी राजसुताः परिणायिताः । क्रमेण स्वराज्येऽभिषिक्तः । स्वयं गुरोः पार्श्वे दीक्षामुपाददे । भीमनरेन्द्रो जिनधर्मप्रभावको जातः । क्रमेण त्रिखंडभोक्ता जातः । तस्य दोगुंदकामरवत्सौख्यं भुञ्जतः पञ्चत्रिंशद्वर्षसहस्राणि जातानि । अन्येद्युः क्षमासागरा आचार्या गुरवश्चतुर्ज्ञानधरा बहुसाधुपरिवारवृताः सहस्राम्रवणे समवासार्षुः । वनपालेन वर्धापनिका दत्ता । अंगसंलग्नान्याभरणानि तस्य दत्वा नृपः सपरिकरो गुरून् वन्दितुं समागतः । गुरून् समस्तसाधूंश्चाभिवंद्य यथास्थानं निविष्टः । गुरुभिर्भवतारिणी भव्यजीवमनोहारिणी कर्णसौख्यकारिणी धर्मदेशना प्रारब्धा । यतः—

" अवाप्य धर्मावसरं विवेकी कुर्याद्विलंबं न हि विस्तराय ।
यतो जिनस्तक्षशिलाधिपेन रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥ १ ॥
अपार संसारे कथमपि समासाद्य नृभवं, न धर्मं यः कुर्याद्विषयसुखतृष्णातरलितः ।
ब्रुडन् पारावारे प्रवरमपहाय प्रवहणं, स मुख्यो मूर्खाणामुपलमुपलब्धुं प्रयतते ॥ २ ॥"

इत्यादि बहुधा धर्मदेशनां श्रुत्वा जातसंवेगो नृपतिरवादीत्—' भगवन् मया पूर्वभवे किं पुण्यं विहितं ? येनेप्सितं सौख्यं लब्धं ' । तदा गुरुराह—" राजन् शृणु । प्रतिष्ठानपुरे देवदत्तसोमदत्तनामानो द्वौ भ्रातरौ निवसतः । तौ परस्परं मत्सरिणौ स्तः । पूर्वभवाभ्यासात्तावमर्षिणौ । वृद्धबन्धुः पुत्राभावाद्बहुस्त्रीणां पाणिग्रहणं कृतवान् । तथापि पुत्राभावः । अन्यदैकस्मिन् ग्रामेऽवग्रहणी-

करणार्थं देवदत्तो गतः। तदा पथि दावानलो दृष्टः। तत्रैकः सर्पो ज्वलन्नाकुलो दृष्टः। देवदत्तेन कृपार्द्रमनसा सर्पः कर्षितः। कष्टाद्रक्षितः। एकदा भोजनार्थमुपविष्टस्तदा मासक्षपणकसाधुस्तत्रागात्। स मुनिस्तेन प्रतिलाभितः। स देवदत्त आयुःक्षये मृत्वा राजंस्त्वं जातः। पूर्वभवे त्वया मुनिः प्रतिलाभितस्तेन पुण्येन त्वं राज्यं प्राप्तः। तथा पूर्वभवे त्वया सर्पः कष्टाद्रक्षितस्तस्मात् कष्टमपि विलयं गतं। तत्र पूर्वभवभ्राता सोमदत्तः कापालिको जातः। पूर्वभवाभ्यासात्त्वयि विषये द्वेषवान् जातः। सर्पस्य रक्षणात्तव कष्टं नष्टं। इति ज्ञात्वा भीमराज त्वया सर्वजन्तुषु हिंसा त्याज्या दया च पालनीया"। इति श्रुत्वा नृपस्य जातिस्मरणं समुत्पन्नं वैराग्यमवाप। नृपेण गुरूणां विज्ञप्तं—'भगवन्नत्र चतुर्मासीमवतिष्ठतु, यथा मम महान् लाभो भविष्यति'। ततो गुरवः शुद्धोपाश्रये चतुर्मासिकं स्थिताः। राज्ञा समस्तदेशेष्वमारिपटहोद्घोषणा कारिता। जिनभवनानि कारितानि नित्यं व्याख्यानश्रवणं करोति। चतुर्मासिकान्ते गुरुसमीपे चारित्रं प्रतिपन्नं। गुरुभिः सह विहारं कुर्वन्निरतिचारं चारु चारित्रं प्रतिपाल्य पर्यन्ते केवलं प्राप्य परमपदं प्राप।

॥ इति दयाविषये श्रीभीमनृपकथा ॥

अतो हेतोर्धर्मार्थिना पुंसा दया पालनीया। निपुणनरेण कठोरवाक्यमपि नो जल्पनीयं। अत्र मातृपुत्रयोश्चन्द्रासर्गाह्वानयोर्निदर्शनं श्रृणुत। तथाहि—अत्रैव भरताभिधे क्षेत्रे वर्धमानपुरं नगरं सुन्दरमस्ति। तत्र सिद्धडो नाम कुलपुत्रो वसति। तस्य चन्द्राभिधा भार्याऽस्ति। तयोः सर्गो नाम पुत्रोऽस्ति। अथ त्रयोऽप्यमी कर्मवशतोऽतीव दुःखिताः। यतः—

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके, वाञ्छन् देशमनातपं विधिवशाद् बिल्वस्य मूलं गतः।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः, प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥१॥

ते त्रयोऽपि कष्टेनोदरपूरणां कुर्वन्ति । यतः—

मानं मुञ्चति सेवतेऽन्त्यजजनं दीनं वचो भाषते, कृत्याकृत्यविवेकमाश्रयति नो नोऽपेक्षते सत्कृतिम् ।
भंडत्वं विदधाति नर्तनकलाभ्यासं समभ्यस्यते, दुष्पूरोदरपूरणव्यतिकरे किं किं न कुर्याज्जनः ॥ १ ॥

यत्र न स्वजनसंगतिरुच्चैर्यत्र नो लघुलघूनि शिशूनि ।
यत्र नापि गुणगौरवचिन्ता हन्त तान्यपि गृहाण्यगृहाणि ॥ २ ॥

दुःखेन ते त्रयोऽपि कालं गमयन्तः । अथ क्रमेण सिद्धडो निपन्नः । तदनन्तरं चन्द्रा परवेश्मसु पानीयानयनादिकर्माण्युदर-भरणार्थं करोति । सर्गोऽप्युद्यानादिन्धनान्यानीय विक्रीणाति । अन्येद्युः पूर्णश्रेष्ठिजामातरि समागते चन्द्रा जलमानेतुमाहूता । तदा सर्गो वने गतोऽस्ति । सापि पुत्रार्थं शीतलान्नं घृताश्रीतक्रादिकं शिक्यके आरोप्य कटिकया द्वारं विधायेभ्यगृहे ययौ । मध्याह्ने सर्ग इन्धनानि गृहीत्वा गृहे समागतः । जननीमप्रेक्ष्य क्षुत्तृट्पीडया भृशं पीडितः । चन्द्रापि जलमानीय श्रान्ता । व्यग्रत्वादिभ्यमानुषैः किमपि नो दत्तं । अकृतसारा स्वगृहमागता। यतः—

सोच्छ्वासं मरणं निरग्निदहनं निःशृंखलं वन्धनं, निष्पंकं मलिनं विनैव नरकं तीव्रा महावेदना ।
सेवासंजनितं नरस्य सुधियो यत्पारवश्यं नृणां, पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम् ॥ १ ॥

तां जननीं दृष्ट्वा सर्गेणोक्तं—'रे पापे त्वं तत्रेभ्यगृहे शूलायामारोपिताऽभूत्, यदियतीं वेलां तत्र स्थिता' । तच्छ्रुत्वा सापि

श्रमार्ता क्षुत्तृषाक्रान्ताऽवक्—'तव करौ किं छिन्नावभूतां शिक्यकादवतार्य शीताशनं कथं न भुक्तं ?' इत्युभाभ्यां निष्ठुरवाक्यकथनाद्दारुणं कर्म निबद्धं । ततः कियता कालेन सुगुरोर्योगाच्छ्रावकत्वं प्राप्तौ । पर्यन्ते विधिनाऽनशनेन समाधिमरणं प्राप्योभावपि सुरलोकं गतौ । ततश्च्युत्वा सर्गजीवस्तामलिप्त्यां नगर्यां कुमारदेवाभिधेभ्यस्याऽरुणदेवाभिधः सुतः समजनि । चन्द्राजीवस्तु पाटलीपुरे जसादित्यव्यवहारिणो देविणी नाम पुत्रिका समभूत् । साऽरुणदेवस्य दत्ता । विवाहो मिलितः । अनिष्पन्ने विवाहे कटाहद्वीपं प्रति जलवर्त्मना प्रवहणे चटितः । क्रमेण तस्य गच्छतो दैववशात्प्रचंडपवनाघातात्पात्रं भग्नं । अरुणदेवो महेश्वराख्यमित्रेण सह फलकयोगाद्बहिर्निर्गतः । ततस्तौ गच्छन्तौ क्रमेण पाटलीपुरे प्राप्तौ । तदा मित्रेणोदितं—' अत्र तव श्वशुरस्थानमस्ति, तत्र गम्यते' । सोऽप्याह—'अनयाऽवस्थया तत्र गमनं न युक्तं ।' ततो मित्रेणोदितं—'यद्येवं तर्हि त्वं बहिस्तिष्ठ, अहं भोज्यमानेतुं पुरान्तर्यामि' । इत्युक्त्वा स पुरे गतः । अरुणदेवः पुरान्तर्वाटिकाया मध्ये जीर्णचैत्ये सुप्तः श्रमवशान्निद्रामगात् । इतश्च देविणी तस्य पूर्वभवमाता सा क्रीडार्थं तत्राजगाम । तदा तयोः पूर्वभवार्जितकर्मोदयः प्रकटो जातः । देविण्याः क्रीडोद्यानं गताया दस्युना करौ छिन्नौ हेमकटकद्वयं जगृहे । वनपालकेन बुबारवश्चक्रे । ततो दंडपाशकाः सायुधाश्चौरानुसारतो धाविताः । चौरः पलायितः । क्षीणशक्तिर्जीर्णचैत्ये यत्रारुणदेवः सुप्तोऽस्ति तत्र प्रविष्टः । तत्पार्श्वे कटकद्वयं शस्त्रीं च मुक्त्वा चैत्यशिखरे निलीय स्थितः । तदाऽरुणदेवो जागरितः । कटकद्वयं शस्त्रीं च निरीक्ष्य किमेतदिति यावता चिन्तयति तावता दंडपाशकाः समागताः । अरुणदेवः संक्षुब्धः । तैरुक्तं—' रे ! अधुना कुत्र यास्यसि ? ' ततः शस्त्रीं कटकद्वयं च गृहीत्वाऽरुणदेवं बद्ध्वा राज्ञेऽर्पितः, वृत्तान्तो निवेदितः । नृपेणोक्तं—' अमुं महापापिष्ठं शूलायामारोपयत' । नृपादेशाद्बहिर्नीत्वा शूलायामारोपितः । अत्रान्तरे पुरमध्यादन्नं गृहीत्वाऽरुणदेवस्य मित्रं तत्र समागात् । अरुणदे-

वमप्रेक्ष्यारामपालकान् पप्रच्छ—'अहो अत्र वने कोऽपि पुमान् युष्माभिर्दृष्टः' ?। तैरुक्तं—"वयं न जानीमः। परंतु कोऽपि चौरो दंडपाशकैर्धृत्वा बद्ध्वा राज्ञेऽर्पितः। राज्ञाऽधुना व्यापादनाय शूलिकायामारोपितः"। ततो व्याकुलितः स शूलिकासमीपे गतः। तत्र शूलायां दारुणावस्थमरुणदेवं दृष्ट्वा विलपति—'हा मित्र हा श्रेष्ठिपुत्र हा प्राणेभ्योऽप्यधिकवल्लभ ईदृशं तवासमञ्जसं किं जातं'? इति भीषणारावं कृत्वा क्षितौ मूर्छितोऽपतत्। क्षणेन शीतलवातेन सावधानो जातः। विलापं कुर्वन् जनैः पृष्टः। तेनोक्तं—"असौ कुमारस्तामलिप्त्यां नगर्यां कुमारदेवव्यवहारिणः सुत एतन्नगरवास्तव्यजसादित्यमहेभ्यसुतापतिः प्रवहणभंगवशाद्दैवात्र समागतः। इत्याद्यशेषवृत्तान्तं ब्रुवन् राजपुरुषैःप्रस्तरैर्हन्तुमारब्धः। तदा जसादित्यस्तं व्यतिकरं श्रुत्वा निजाङ्गजां देविणीमादाय तत्रागात्। तत्र तं दृष्ट्वा नृपाज्ञया शूलिकायाः कर्षितः। देविणी काष्ठभक्षणमयाचत। तदा नृपेण वारिता विलापं करोति। तदा नृपेणोक्तं—"कर्मणो गतिरीदृशी विषमाऽस्ति। इभ्यसुतः कथमसमञ्जसमीदृशं करोति ?। ज्ञानिनं विना सम्यक् को वेत्ति ?" अत्रान्तरे चतुर्ज्ञानधरश्चन्द्रधवलो मुनीश्वरश्चारणश्रमणो व्योममार्गेण समागतः। तदागमनं श्रुत्वा नृपस्तत्राययौ। देवैस्तत्र कमलरचना कृता। तत्रोपविश्य सद्धर्ममाख्यातुमुद्यतः। यतः—

"धर्मोऽयं जगतः सारः सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजाः सारं तेनैव मानुष्यम्॥ १॥

भो जना मोहनिद्रां मुञ्चत। ज्ञानजागरैः जागृत। प्राणघातादि त्यजत। निष्ठुरं वाक्यं मा जल्पत। कठोरवाक्यं जल्पन् देविण्यरुणदेवयोरिव दुःखं प्राप्नोति"। नृपमुख्यैः पृष्टं—'देविण्यरुणदेवाभ्यां किं कठोरवाक्यं जल्पितं?'। तदा मुनिना पूर्वभवचरितं निवेदितं। तच्छ्रुत्वा सर्वेऽपि संवेगमापन्नाः। देविण्यरुणदेवयोर्जातिस्मरणं समुत्पन्नं। ताभ्यामन्योऽन्यं क्षामितं। मिथ्यादुष्कृतं

दत्त्वाऽनशनं गृहीत्वा धर्मध्यानैकमानसौ विपद्य स्वर्गतौ । भूभुजा विज्ञप्तं—'स्तोकजल्पनेनैवंविधा व्यवस्था स्यात्तदा मादृशानां का-गतिः ? धिक् संसारं'। ततो जसादित्यसंयुतो नृपश्चारित्रमग्रहीत् । चौरोऽपि चारित्रमग्रहीत् । तपस्तप्त्वा त्रयोऽपि स्वर्गं ययुः । कठोरवचनस्यैवंविधं फलं ज्ञात्वाऽऽक्रोशदानाद्यं प्रयत्नतो वर्जनीयमेवेति । आस्तां वचनकायाभ्यां, मनसापि हिंसा चिन्तिता स्वजीवविघातकरी नरकदुःखदायिनी भवति । तथाहि—कोऽपि रंकः पुरा वैभारगिरिपर्वतोद्यानपाटिकायां गतः । तत्र भिक्षामलभमानेन तेन निजकर्मदोषतो हृदि चिन्तितं—'अहो भक्ष्यभोज्येषु सत्स्वपि भिक्षां मे न ददाति, तर्ह्यहं सर्वान् हनिष्यामि'। इति रौद्रध्यानं संचिन्त्य पर्वतमारुह्यैकं महोपलं निर्दयं मूलादुच्चालयामास । तेन महोपलेनाधः पतता जनः सर्वोऽपि प्रणष्टः । स एव च चूर्णितो मृत्वा नरकं गतः । अतः कारणान्मनसा वचनेन कायेन च जीवहिंसा त्याज्या ।

॥ इति जीवहिंसायां व्याख्यानं व्याख्यातं ॥

द्वितीयमणुव्रतं मृषावादव्रतं । तत्र व्रते पञ्चातिचारास्त्याज्याः ।

मिथ्योपदेशः सहसाऽभ्याख्यानं गुह्यभाषणम् । विश्वस्तमंत्रभेदश्च कूटलेखश्च सूनृते ॥१॥

सत्यवचसा देवा अपि सान्निध्यं कुर्वन्ति । यतः—

न वहति नदी नीरापूर्णा प्रशाम्यति पावको, हरिकरिमहासर्पा रेखां न लंघयितुं क्षमाः ।
प्रभवति विषं भूतं नो वा न चापि महायुधं, किमिह बहुना सत्यासक्तात् सुरोऽपि पलायते ॥१॥

तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किंकराः, कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।
पातालं बिलमस्त्रमुत्पलदलं व्यालः शृगालो विषं, पीयूषं विषमं समं च वचनं सत्याञ्चितं वक्ति यः ॥ २ ॥
मन्मनत्वं काहलत्वं मूकत्वं मुखरोगताम् । वीक्ष्यासत्यफलं कन्यालीकाद्यासत्यमुत्सृजेत् ॥ ३ ॥
कन्यागोभूम्यलीकानि न्यासापहरणं तथा । कूटसाक्ष्यं च पञ्चेति स्थूलासत्यानि कीर्तयेत् ॥ ४ ॥

तथा च

घोरां दुर्गतिमेत्यलीकलवमप्यभ्यर्थितोऽपि ब्रुवन्, वादे नारदपर्वताख्यसुहृदोर्यद्वद्वसुर्भूपतिः ।
चक्रेऽर्चाविधुरो विरञ्चिरनृतात् केचित्प्रनष्टाः सुराः, साक्षात् किं न हरिर्भवेच्च महितः सत्यात्परीक्षाक्षणे ।५।

अत्र व्रते वसुराजाख्यानं कथ्यमानं निशम्यताम्—अत्र भरतक्षेत्रे शुक्तिमती नाम नगरी वर्तते । या सर्वनगरीषु स्वशोभया रराज । तस्यां सकलभूपतिशिरश्चूडामणिसमः स्वतेजसा ध्वस्तवैरितमोभरः श्रीमानभिचन्द्रो नरेश्वरो राज्यं करोति । तस्य कमलावतीनाम्नी पट्टराज्ञी । तयोर्वैषयिकं सुखमनुभवतोर्वसुनामा सुतः समजनि । स महामतिर्बाल्यादपि सत्यव्रतासक्तोऽस्ति । क्रीडन्नपि सत्यं वदति । स विनयी नयी गुणोदधिः सकलकलाकुशलः । विशेषतोऽपि सत्यं तस्याभीष्टमस्ति । स्वप्नेऽपि तस्यासत्यं न रोचते । तत्र क्षीरकदंबक उपाध्यायो ब्रह्मविद्यानिपुणः सकलशास्त्रविशारदो निवसति । तस्य पर्वतकाभिधः सुतोऽस्ति । वसुपर्वतकौ तथाऽन्यो देशान्तरादायातो नारद एते त्रयोपि क्षीरकदंबकोपाध्यायसमीपे शास्त्राण्यहर्निशं पठन्ति । ते त्रयोऽपि गुरुभक्तिं वितन्वन्ति । यतः—

एकाक्षरप्रदातारं यो गुरुं नैव मन्यते । शुनो योनिशतं भुक्त्वा चांडालेष्वपि जायते ॥ १ ॥

एकमप्यक्षरं यस्तु गुरुः शिष्यं निवेदयेत् । पृथिव्यां नास्ति तद् द्रव्यं यद्दत्वा त्वनृणीभवेत् ॥ २ ॥

ते त्रयोऽपि नानाविधानि पांडित्यशास्त्राणि पठन्ति । पुरुषाः शास्त्राभ्यासात्सर्वं समीहितं प्राप्नुवन्ति । यतः—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता, विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः॥१॥

उपाध्यायस्तेषामादरेण पाठयति । अन्यदा रजन्यां सौधमूर्ध्नि तेषां पठतां गुरौ जाग्रति सति श्रमवशात् क्षणं निद्रा समागता । तदा गगने यान्तौ चारणश्रमणावुभौ तान्निशम्य परस्परमवोचतां—' एतेषां छात्राणां मध्ये एको मोक्षभाग्भविष्यति, अपरौ नरकं यास्यतः ' । क्षीरकदम्बकोपाध्यायस्तच्चाश्रौषीत् । तच्छ्रुत्वा सहसा म्लानमानसः संजातः । उपाध्यायोऽचिन्तयत्—" इदं वचो दुःश्रवं, धिक्, मय्यध्यापके शिष्यौ नरकं यास्यतः । केनापि ज्ञानिनोदितमिदं वचो नालीकं भवति " । ततो मोक्षं को यास्यति नरकं कौ यास्यत इति ज्ञातुं प्रभाते त्रीनपि शिष्यानाकारयत् । एकैकं पिष्टकुर्कुटं तेषां समर्प्य क्षीरकदंबक उवाच—' यत्र कोऽपि न पश्यति तत्रामी वध्याः ' । इदं गुरुवचः श्रुत्वा वसुपर्वतकौ कुर्कुटौ गृहीत्वा शून्यदेशे गतौ । तत्र कुर्कुटौ हतौ । नारदस्तु कुर्कुटं गृहीत्वा पुराद्बहिर्निर्जित्वा निर्व्यंजनप्रदेशे गत्वा स्थित्वा च चेतसीति चिन्तयति— " गुरुपादैरिदमादिष्टं यत्र न कोऽपि पश्यति तत्रायं वध्य इति । पर पक्षिणः पश्यन्ति, वृक्षाः पश्यन्ति " । ततः पर्वते गुहायां गतः । तत्र च चिन्तयति—" अत्र लोकपालाः सिद्धाश्च पश्य-

न्ति, कथं हन्मि ? गुरुपादा दयावन्तः सर्वथा हिंसापराङ्मुखाः कथं हिंसां कारयन्ति ? नूनमस्माकं प्रज्ञां परिज्ञातुमेवमादिष्टं " । इति विमृश्य कुर्कुटं गृहीत्वा पश्चात् समाययौ । कुर्कुटाहननहेतुं गुरोर्व्यजिज्ञपत् । गुरुणा चिन्तितं—'निश्चितं मोक्षं यास्यत्यसौ ' । इति विचिन्त्य स्नेहात् साधु साध्विति भाषितं । ' त्वं ममाभीष्टः त्वं सुकृती धन्यः ' इति प्रशस्य गुरुस्तस्यैव गौरवं करोति स्म । वसुपर्वतकौ पश्चादायातौ एवं शशंसतुः—' यत्र कोऽपि न पश्यति तत्रावाभ्यां निहतौ ' । गुरव ऊचुः—' युवामपश्यतं खेचराद्योऽपश्यन् । भोः पापिष्ठौ कथं कुर्कुटौ निहतौ ? युवां धिक् ' । पुनर्गुरुर्विचारयति—" मुनिभ्यां यदुक्तं तत्सत्यं, एतौ नरकगामिनौ । एतयोः पाठने किं ? अन्धस्यादर्शदर्शनं, बधिराग्रे शंखवादनं, अरण्ये रोदनं, प्रस्तरेऽम्बुजरोपणं, ऊषरक्षेत्रे वर्षणं । किं च—

तत्कृतं यातु पातालं तच्चातुर्यं विलीयताम् । ते विशन्तु गुणा वह्नौ येषु सत्स्वप्यधो गतिः ॥ १ ॥

तज्जलं यत्तृषां छिन्द्यात्तदन्नं यत्क्षुधापहम् । बन्धुर्यो धारयत्यार्तं स पुत्रो यत्र निर्वृतिः ॥ २ ॥

तदधीतं श्रुतं येन नैवात्मा नरके पतेत् । क्लेशाय सकलं शेषं सर्वमेव विडंबना ॥ ३ ॥

मदीयः पुत्रः पर्वतकः पाठितः, वसुरपि पाठितः । एतौ द्वौ नरकं यास्यतः तदा मम गृहवासेन किं ? " । इति निर्वेदादुपाध्याय प्रव्रज्यामग्रहीत् । तत्पदं च पर्वतक आश्रयत् । व्याख्याक्षणविचक्षणो जातः । नारदो गुरुप्रसादतः सर्वशास्त्रविशारदो भूत्वा शुद्धधीः स्वां भुवं ययौ । अभिचन्द्रो नृपो गुरुयोगाद्व्रतमग्रहीत् । वसुः श्रिया वासुदेवसमो राजाऽभूत् । स वसुः पृथिवीतले सत्यगादीति प्रसिद्धिं प्राप । वसुराजाऽपि सत्यवाचं वदति ।

अथान्येद्युः कोऽपि व्याधः मृगार्थं मृगयां गतो वने बाणांश्चिक्षेप । ते बाणा अन्तराऽस्खलन् । स बाणास्खलनहेतुं ज्ञातुं तत्राययौ । ततः स्फटिकशिलां पाणिना स्पृशन्नज्ञासीत् । स मनसीति दध्यौ–"मृगो मयाऽस्याः परतश्चरन् भूमिच्छायेव दृष्टः । नूनं पाणिस्पर्शनं विना शिलैषा सर्वथा नोपलक्ष्यते । तदियं शिला वसुमतीपतेर्वसुराजस्य योग्या " । इति विमृश्य रहस्तां शिलां वसुराजाय प्राभृतीकरोति स । राजा हृष्टस्तां शिलां जग्राह । तस्मै पारितोषिकं दानं ददौ । ततो नृपस्तस्याः शिलायाश्छन्नं स्वासनवेदिकां घटयामास । तदनु तं शिल्पिनमघातयत् । नृपाः कदाप्यात्मीया न भवन्ति । तत्र सिंहासनं निवेश्य नृप उपविशति । तदा सर्वेऽप्येवं वदन्ति—' वसुभूपतिः सत्यप्रभावाच्छिराधारसिंहासन उपविशति ' । अथ सत्यप्रभावाद्देवाः सान्निध्यं कुर्वन्ति । एवं यशस्विनी प्रसिद्धिर्दिशो दिशं सर्वत्र व्याप्ता । तया प्रसिद्ध्या राजानो भीताः सर्वेऽपि वश्यमाययुः । तस्य सर्वत्रैव जयोऽभूत् ।

इतश्चैकदा नारदो भ्रमन्निष्टपर्वतकस्य गुरुभ्रातुर्मिलनाय तत्रागात् । तदा तत्र पर्वतको विद्यार्थिनामजैर्यष्टव्यमिति वेदपदस्य व्याख्यानं कारयति । अजैर्मेषैर्यष्टव्यं तन्निशम्य नारदो बभाषे—"भ्रातः किं मुधा भ्रान्त्याऽलीकं जल्पसि ? गुरुभिरजैस्त्रिवार्षिकव्रीहिभिर्यष्टव्यमिति व्याख्यातमस्ति । न जायन्त इत्यजा इति व्याख्याताः । तत् केन हेतुना व्यस्मार्षीः?" । ततः पर्वतकोऽवादीत्–'तातेनेदं नोक्तं, किं त्वजा मेषा उक्ताः' । पुनर्नारदोऽपि जगाद—" शब्दानामर्थकल्पना नैकधाऽस्ति । किं तु गुरुपादा दयावन्तः । तैर्मेषा नोक्ताः । मित्र मा पापमर्जय " । पुनः साक्षेपं पर्वतकोऽजल्पत्—' त्वं मुधा जल्पसि ' । तावेवं वादं कुर्वन्तौ स्वस्वपक्षस्थापने जिह्वाच्छेदपणं चक्रतुः । ताभ्यां प्रतिज्ञा कृता—आवयोः सहाध्यायी वसुनृपः सत्यभाषी, स यज्जल्पति तत्सत्यमिति । ततोऽम्बा रहः पर्वतकमूचे—" वत्स तव पित्राऽजास्त्रिवार्षिकव्रीहयो व्याख्याताः । त्वया जिह्वाच्छेदपणः कथं कृतः ? वत्स शृणु, अविमृश्य विधा-

तारः पुमांस आपदां पदं प्राप्नुवन्ति । आः त्वया मुधा हारितं" । पर्वतकोऽवादीद्—'मातः अथ किं करोमि ? यद् भवति तद् भवतु,जीवः कंटकमारूढः कृत्याकृत्यं नो वेत्ति । सा पर्वतकस्याम्बा दुःखपीडिता रहो वसुराजं प्रति समागात् । तदा वसुराजोऽप्यभ्युत्थितः । सन्मुखमागत्य पादयोर्निपत्योवाच—' मातः समादिशतु कार्यं । किं करोमि ? किं प्रयच्छामि ? ' साऽवादीत्—'महीपते पुत्रभिक्षा दीयतां मह्यं । पुत्रेण विना धनधान्यैः किं प्रयोजनं ? ' । वसुभूपतिराह—' मातर्मम भ्राता पर्वतकस्तव पुत्रोऽस्ति । मम भ्रातरं को जिघांसुः ? कः पराभवति ? ' । तदा तया वृत्तान्तः कथितः । जिह्वाच्छेदपणादिकं सर्वमचीकथत् । पुनः साऽवदत्—त्वं प्रमाणीकृतोऽस्मि तस्मात्त्वं भ्रातू रक्षार्थमजान्मेषानुदीरय । सन्तः प्राणैरुपकुर्वन्ति, किं पुनर्गिरा ? " नृपोऽप्यूचे—" मातः सर्वथाहं मिथ्या न वच्मि । सत्यभाषिणः प्राणान्तेऽपि असत्यं न शंसन्ति । अन्यदपि शृणु, गुरुवागन्यथा पापभीरुणा कथं क्रियते ? कूटसाक्षी नरकं व्रजति इति स्मृतावुक्तं ' । इति श्रुत्वा तया सरोषया प्रोक्तं—'भूप त्वत्पार्श्वे मया कदापि किंचिन्नो याचितं । अद्यैवाहमागता । देहि मद्याचितं ' । तदा पार्थिवोऽमंस्त । क्षीरकदंबकगृहिणी प्रमुदिता गृहं ययौ । ततो नारदपर्वतकौ द्वाभ्याजग्मतुः । वसुराज्ञा तयोः सन्मानं दत्तं । आसने निविष्टौ । ततो नारदपर्वतकौ निजनिजपदव्याख्यानं कृत्वोचतुः—" त्वं सहाध्यायी । सत्यं ब्रूहि । त्वं सत्यवादी । अजाशब्दस्य यद्व्याख्यानं गुरुणा कारितं तद्वद । त्वं साक्षी सत्यव्याख्यानं कुरु । सत्यात्सर्वं समीहितं संजाघटीति । राज्याधिष्ठायिका देव्यो लोकपाला दश दिक्पालाः शृण्वन्ति । नरेश्वर सत्यं वद । रविः प्राचीं त्यक्त्वा परामुदेति कदाचित्, मेरुरपि प्रकंपते, परं सत्यधना नराः कथमप्यसत्यं न भाषन्ते " । इति तयोर्वचः श्रुत्वा स्वसत्यप्रसिद्धिमवगणय्य वसुरवादीत्—' गुरुरजान्मेषान् व्याख्यत् ' । इति कूटसाक्ष्यं नृपश्चकार । असत्यवचसा तस्य नृपस्य देवा रुष्टाः । देवैः सिंहासनात् पातितः । सा शुद्धा

स्फटिकशिलाऽपहृता । ततो वसुमतीपतिर्वसुनृपः सद्यः सिंहासनाद्रुधिरं वमन् पतितः । 'कूटसाक्ष्यप्रदातुः श्वपचस्येव को मुखं पश्यति ? इति वसुनृपतिं निन्दन् नारदः स्वास्पदं ययौ । वसुनृपः कालधर्मं प्राप्तः । मृत्वा नरकं गतः । तस्यापराधिनः क्रमेणाष्टौ पुत्रा निपातिताः । इत्यसत्यवचसः फलं ज्ञात्वा स्वप्नेऽप्यसत्यं सुधीर्नो वदति । यथा गलनवस्त्रेण जलं शुध्यति । यथा विवेकेन गुणव्रजः शुध्यति । यथा दानेन गृही शुध्यति । तथा वचः सत्येन शुध्यति । सत्यानुभावतो देवा अपि प्रसीदन्ति । द्रौपद्याः सत्यपञ्चकेनाम्रेण शीघ्रं फलानि दत्तानि । हेमरत्नाम्बराणि बाह्याडंबरभूषणानि सन्ति । सत्यवचनालंकरणमन्तरंगभूषणमस्ति ।

कूटसाक्षी पराघाती परापवादजल्पकः । मृषावादी फल्गुवाची (क्यः) सर्वथा नरकं व्रजेत् ॥ १ ॥

परस्यापकारकं वचः तत्सत्यमपि नो सत्यं । यत्परस्योपकारकं वचस्तदसत्यमपि सत्यं । यत् हास्येनापरस्यालीकमुच्यते तदपि दुःखदायकं । विषं हर्षेण भक्षितं किं न मारयति ? 'हसंतो हेलया कम्मं रोअंता वि न छुट्टइ' इति सिद्धान्तोक्तं वाक्यं ज्ञात्वा चतुरो मृषावादपंकेन नो लिप्यते । एवं वसुभूपाख्यानं निशम्य विशेपेण विशेषज्ञैरसत्यं वर्जनीयमेवेति ।

॥ इति मृषावादहृष्टान्तः ॥

विज्जाए कासवसंता आए दगसूअरो सिरिं पत्तो । पडिओ मुसं वयंतो सोनन्नवणाइअ अपच्छा ॥ १ ॥

यथा सुदर्शनपुरे कोऽपि दिवाकीर्तिर्निवसति । तेन सेवां कृत्वा योगिनः सन्निधौ विद्या गृहीता । स च वस्त्राणि प्रक्षाल्य गगने निराधाराण्युद्गमयति । एको मस्करी तं नापितं याचितवान्— 'त्वमिमां सद्विद्यां मह्यं देहि' । तच्छ्रुत्वा तेन नापितेन

सत्पात्रं विज्ञाय विद्या प्रदत्ता। स सन्न्यासी तां विद्यां गृहीत्वा देशान्तरे बभ्राम। स सर्वत्र स्वकीयधौतकानि प्रक्षाल्योच्चैराकाशे निराधाराण्युद्भ्रमयति। साश्चर्यं जनास्तं पृच्छन्ति—'स्वामिन्नियं महाविद्या भवद्भिः क्व प्राप्ता?' तदा स वदति—"भो जनाः पश्यत पश्यत। ममायं तपसः प्रभावः। नात्र गुरुप्रभावो नापि कश्चिद्विद्याप्रभावः केवलं तपसः प्रभावः"। इत्युक्ते धौतकानि अधः पतितानि। मंत्रोऽपि गतः। अतः कारणाद् भो भव्या विलोकयन्तु मृषावादानुभावात्सद्विद्याप्यविद्या भवति तस्मान्मृषावादो वर्जनीय एव।

॥ इति मृषावादृष्टान्तः ॥

अथ तृतीयमणुव्रतमदत्तादानं। तस्यापि पञ्चातिचाराः। यथा—

स्तेनानुज्ञा तदानीतादानं राजविलंघनम्। प्रतिरूपक्रियामानादित्वं चास्तेयसंश्रिताः ॥ १ ॥
पतितं विस्मृतं नष्टं स्थितं स्थापितमाहितम्। अदत्तं नाददीत स्वं परकीयं क्वचित्सुधीः ॥ २ ॥

तमभिलपति सिद्धिस्तं वृणीते समृद्धिस्तमभिसरति कीर्तिर्मुञ्चते तं भवार्तिः।
स्पृहयाति सुगतिस्तं नेक्षते दुर्गतिस्तं, परिहरति विपत्तं यो न गृह्णात्यदत्तम् ॥ ३ ॥
वैराग्यशस्त्रहतमोहतमोमलान्तर्दृष्ट्यापविष्टपरदृष्टहिताहितार्थः।
चौरोऽपि शुध्यति शमेन दृढप्रहारी, वापैति वा दवजवो जलदेन किं न ॥ ४ ॥

परस्य नादत्ते सुधीस्तृणमेकमपि क्वचित् । स्पृष्टोऽङ्गुल्या हि मातंगः किं न मालिन्यकारकः ॥ ५॥
वैरवैश्वानरव्याधिवादव्यसनलक्षणाः । महानर्थाय जायन्ते वकाराः पञ्च वर्धिताः ॥ ६ ॥
तपस्यपि कृते प्रायः पापं चौर्यं कृतं नृणाम् । अभुक्तं क्षीयते नैव दृष्टान्तोऽत्र महाबलः ॥ ७ ॥

। अथ महाबलकथानकम् ।

अत्र भरते श्रीपुराभिधे नगरे मानमर्दनो राजा यथार्थनामाऽस्ति । तत्र नगरे बली महाबलाभिधः कुलपुत्रकोऽस्ति । तस्य पितरौ बाल्ये विपन्नौ । निरंकुशतया सर्वत्र भ्रमन् प्राग्दुष्कर्मदोषतो द्यूतव्यसनी जातः । क्रमेण सप्तव्यसनासक्तो जातः । यतः–

द्यूतं च मांसं सुरा च वेश्या पापर्द्धिचौर्ये परदारसेवा ।
एतानि सप्त व्यसनानि लोके घोरातिघोरं नरकं नयन्ति ॥ १ ॥

स महाबलो महान् चौरव्यसनी जातः । क्रमेण स एकदा निशि चौर्यार्थं दत्ताख्यश्रेष्ठिनो गृहे प्रविष्टः । जालान्तरेणासौ गृहमध्यमवलोकते, तावद्विंशोपकार्थं लेख्यके कलिं कुर्वन् पुत्रेण साधं दृष्टः श्रेष्ठी । तदा चौरोऽचिन्तयत्—" यः स्तोकव्यतिकरेणास्मिन्निशाभरे निद्राविमुखः पुत्रेण सह कलिं कुरुते, तस्य प्रभूतं वित्तं चेद्धरिष्ये तदा विशीर्णहृदयः सद्यो विपत्स्यते । तस्मान्निर्गत्यान्यत्र यास्यामि" । इति विचार्य कामसेनायाः पण्यांगनाया भवने गतः । तत्रापि स दस्युर्ददर्श । निर्जितानंगरूपां कुष्ठिनो नानोपचा-

रहावभावादिकं कुर्वन्तीं दृष्ट्वाऽचिन्तयत्–'धनाकांक्षया कुष्ठिना साकं विलसति। एतस्या अपि धनं मे न कल्पते' इति विमृशतस्तस्य बुद्धिरुत्पन्ना—'अन्यैः पामरैर्जनैर्मुषितैः किं ? सकलार्थसाधके राजसौधे यामि' । इति विचार्यैकमानसः स राजमन्दिरे खात्रं प्रपात्यासौ प्रविष्टः । तत्र पल्यंकस्थं राज्ञ्या सह सुखनिद्रया सुप्तं राजानं दृष्ट्वाऽत्यन्तं मुदितः सन्निदं चिन्तयामास—'अहो मदीयं भाग्यं जागर्ति यश्चिन्तामणिरिव सर्वकामप्रदो भूपतिः करे चटितः' । तत्र रत्नदीपोद्योतैश्चारुहारावल्याद्यलंकारान् बहुद्रव्यपेटिका जिघृक्षुर्यावदीक्षते तावत् कपाटच्छिद्रे प्रविशन्तं सर्पमेकमैक्षत। 'अरे अत्र पन्नगः किमयं कर्ता ?' इति विस्मयात्तत्रैकान्ते निलीय स साहसिकाग्रणीस्तस्थौ। सर्पोऽपि वासवेश्मनि प्रविश्य शिरःकुन्तलगोफणके चटित्वा प्रसुप्ताया राज्ञ्याः करं च भाले च दंष्ट्वा व्याघुट्य निर्ययौ । तद् दृष्ट्वा कौतुकाद्विस्मयमनास्तस्करो निःशब्दं द्वारमुद्घाट्य सहसैव तमन्वगात् । ततः सौधात्समुत्तीर्य स फणी महापुष्टकायवृषभस्य रूपं बिभरांचक्रे.। स वृषभः प्रतोल्या द्वारपालिकं दंडमुत्पाट्य धावन्तं निपात्य शृंगाग्रैर्व्यापादयामास । चौरोऽपि तद्व्यतिकरं विलोक्य साहसमवलंब्य तं वृषभं निबिडं द्वाभ्यां पुच्छे गृहीत्वा पृच्छति—'कस्त्वं भोः ? केन हेतुनैतौ व्यापादितौ ? किमधुना करिष्यसि ?' सोऽनड्वान् मर्त्यवाचाऽवोचत्—“ भो मदुक्तं शृणु । अहं नागकुमारः सुरः । इमौ मम पूर्वभववैरिणौ । तस्मादहं राज्ञीप्राहरिकौ हन्तुमिहागतः ” । चौरोऽप्याह—' यद्येवं तर्हि कथयाशु भोः सुन्दर मम कथं कुतो वा मृत्युर्भविष्यति ? ' । सुर ऊचे—' भो भद्रेदं पश्चात्तापकरं वचो मा प्राक्षीः ' । पुनर्निर्बन्धेन पृष्टे वृषोऽवोचत्—“ भोः शृणु, अस्मिन्नेव पुरे राजमार्गे महान् वटवृक्षोऽस्ति, तस्य शाखायामुद्बद्धस्य तव मृत्युर्भविष्यति ” । पुनश्चौरोऽवादीत्—' सत्यं तवोदितं, तथापि किंचित्साभिज्ञानं वद ' । ततो वृषोऽवदत्—“ श्वस्तने दिने मध्याह्नसमये राजप्रासादशृंगतः सूत्रधारः पतित्वा मृत्युमासादयिष्यति । तत्साभिज्ञानेन त्वमपि वटशाखाया-

मुद्गरो मरिष्यमि "। तन्निशम्यात्यन्तभीतेन तेन स्तेनेन वृषो मुक्तः, स तिरोदधे। तथाविधं द्वितीयदिने मध्याह्ने सूत्रधारस्य मरणं दृष्ट्वा स्वभाविपश्चत्वभयव्याकुलः सन् अत्यन्तभीतः। तस्याहारोऽपि न रोचते। मृत्युभयं जन्तूनां महादुःखकारणमस्ति। यतः—

पंथसमा नत्थि जरा दारिद्दसमो पराभवो नत्थि। मरणसमं नत्थि भयं खुहासमा वेयणा नत्थि ॥१॥

मृत्योर्बिभ्यति ते बाला ये स्युः सुकृतवर्जिताः। पुण्यवन्तो नराः सर्वे मृत्युं प्रियतमातिथिम् ॥२॥

तेन भीतेन स्तेनेन चिन्तितं—" मुधा किमत्र स्थीयते ? दूरं यास्यामि, यथा नाहं शखां पश्यामि। संन्यासं गृहीत्वा तटिनीतीरे सर्वानर्थनिवारणार्थं तीव्रं तपः करोमि "। इति विमृश्य त पुरासन्नग्रामे तदासन्नवने तटिनीतीरे तापसान्तिके तापसीं दीक्षां गृहीत्वा तपस्तप्यति। तस्य गुरौ विपन्ने सति तस्मिन्नेव मठे स्थितः तीव्रमज्ञानतपः कुरुते, बहूनि वर्षाणि जातानि।

इतश्चान्यः कोऽपि चोरो राजभवनान्निशायां राज्ञो रत्नपेटिकां गृहीत्वा प्रणष्टवान्। स चौरो राजपुरुषैर्धावमानैः प्रेर्यमाणो भयाकुलो नश्यन् यत्र स चौरतापसोऽस्ति तत्रोपवने प्रविवेश। तस्यासन्नं पेटिकां मुक्त्वा चौरो दूरं पलायितः। ततः स तापसः पेटिकां वीक्ष्य मुदिताननो जजल्प—' अहो रत्नपेटिका तपसः प्रभावान्मम दैवेन प्रदत्ता। नृणां तपःप्रभावात् किं किं न संपद्यते ? ' इति वदन् यावत्करेण तां निपकन्यामिव समस्पृशत्, तावदुग्रै राजपुरुषैः स तापसो वेष्टितः। ' अरे पापिष्ठ दुष्ट तापसवेषेण श्रीपुरं मुषितं। अरे मूर्खेदानीं राजस्तु मुषितं '। इत्युक्त्वा यष्टिमुष्ट्यादिभिर्बाढं हत्वा ते तं भृशं बद्ध्वा पुरः कृत्वा श्रीपुरं पुरं प्रत्यचलन्। ततश्चौरतापसो हृदि दध्यौ—' सुरेण मम मृत्युः पुरा समादिष्ट तदेतदुपतस्थे ' इति चेतसि विचिन्त्य व्यक्तमेत श्लोकं पपाठ—

"रक्ष्यते नैव भूपालैर्न देवैर्न च दानवैः । नीयते वटशाखायां कर्मणाऽसौ महाबलः ॥ १ ॥"

तच्छ्रुत्वा ते क्रूरा राजपुरुषा ऊचुः—'गलात्तचर्कर इव किं पुनः पुनर्जल्पसि ?'। इत्युक्तोऽपि स पुनः पुनस्तदेव पापठीति । ततस्तैः स राज्ञे समर्पितः । पेटिकापि दत्ता । राजा संशयापन्नमानसस्तमभाषत—'अहो त्वं सौम्यवपुर्वेषः । इदं क्रूरं चौर्यकर्म तवायटं'। ततो महाबलोऽप्योचत्—"राजन् सर्वमेव हि घटते । परं तु विचित्रस्य दैवस्य न किञ्चिदेव दुर्घटं । यतः—

रक्ष्यते तपसा नैव न देवैर्न च मानवैः । नीयते वटशाखायां कर्मणाऽसौ महाबलः ॥ १ ॥"

नृपो जजल्प—'अहो कोऽसौ वटः ? का शाखा ? को महाबलः ?' इति राज्ञा भूयो भूय उक्तोऽपि स तदेव पपाठ । साश्चर्यगर्भं तद्वचो ज्ञात्वा नरेश्वरस्तं बन्धनादुन्मोच्याभयं दत्त्वा पुनः पुनः पप्रच्छ । ततः स भूपाय यथातथं खात्रपाताहिदंशाद्यं सर्वं वृत्तान्तमाख्यत् । तचौरादिष्टं वृत्तान्तं श्रुत्वा सर्पदष्टात्मदयितास्मृतिजातकरुणारुणदृशा नृपोऽवदत्—"अरेरे दैव नृशंस अरे बालस्त्रीवृद्धघातक चारच्छिद्रवीक्षक तदा मम प्राणप्रिया ममाजानतस्त्वयाऽपजह्रे । अनया शौनवृत्त्या मा गर्वमुद्वह । मयि रक्षके सति एतस्य महाबलस्याधुना ग्रहीष्यसि तदा त्वां परं सुभटं ज्ञास्ये"। इत्युदित्वा महीपालो गृहग्रासादिभिः सन्मानितं स्वपुत्रमिव तं महाबलं पुष्टं चक्रे । दैवं च तर्जयामास । उवाच च—"भो महाबल यमस्य शिरसि पादं दत्त्वा क्रीडय'। ततो महाबलस्तत्र स्थितः सुखं भुनक्ति । परं तु तया शाखया दृष्टया हृदि शल्यायामन्यत । अन्यदा राज्ञे स व्यजिज्ञपद्—"नरेन्द्र यदि तुष्टोऽसि तदा मां दूरदेशांतरे प्रेषय । यथाहमिमां दृष्टिविपोरगीं शाखां नो पश्यामि"। नृपतिनादिष्टं—"वत्स मा भैषीः । दैवकिंकरो मद्भुजाप-

ज्ञरस्थस्य तव किं करिष्यति ? अतः कारणान्निशंकमानसः सन् भोगान् भुंक्ष्व ”। इति श्रुत्वा स राज्ञा निर्जितं विधिं धारयामास। ततः कियानपि कालो गतः।

सोऽन्यदा कृतशृंगारः कंठे स्वर्णशृंखलादिहारैर्युतोऽश्वारूढो राज्ञा समं राजपाटिकया व्रजन् भार्यया किञ्चित्कार्यमुद्दिश्य व्याघुट्य गृहमाकारितः। स गृहे क्षणं स्थित्वा पुनर्जवाद्राजानमनुचचाल। तस्य वटस्याधो गतः। तत्र हयं मृत्युशंकया कशया निर्दयं ताडयामास। सहसाश्वे समुच्छलिते महाबलगलस्थितं सुवर्णशृंखलकं पश्चाद्भागे समुच्छल्य तस्यैव वटस्य शाखायास्तीक्ष्णभागे विलग्य स्थितं। अधस्तादश्वो वेगादग्रतो गतस्तदा महाबलो गतबल आदिमं श्लोकं स्मृत्वा यावत्पठति तावता कंठग्रहार्दितः सन्मृतः। तदा लोकैरधस्तादवतारितः। तस्य प्रतीकारः कृतः, परंतु वृथा जज्ञे। तत्तादृशं कर्णशूलकृद्वचो निशम्य नृपो भृशं विललाप—“हा वत्स किमिदं तव जातं ? किं मया वटो मूलान्नैवोन्मूलितः ? मया पापिना शाखापि नोच्छेदिता। मयाऽन्यपुरे त्वं न स्थापितः। सर्वथा दैवेन मम मतिभ्रंशः कृतः। मयि सबलवाहने नाथे रक्षके सति अनाथस्येव तव कीदृशी दुर्दशा समजनि ? किमिदं मम नाथत्वं ? का वा मया रक्षा भवेत् ? केयं मया मिथ्याभिमानिता कृता ? केनापि जरा नो जर्जरीकृता। मृत्युरपि केनापि न जितः। अतः कारणाद्रे जीव गर्वं कुर्वन्न लज्जसे ? अहं कर्ता, अहं हर्ता, अहं धनी, अहं गुणी, सर्वं वृथैव। केवलं कलत्रं न हृतं, पुत्रोऽप्ययं त्वया हृतः। मम मानमेव त्वयाऽपहृतं। अथवा को विधिः ? किं दैवं ? कः कृतान्तः ? जीवेन निजं कर्म शुभमशुभं वा भुज्यते। तस्मादरे जीव शुभं कर्म समाचर ”। इत्थं संबोधाभिमुखं नृपं ज्ञात्वा मंत्रिणः श्रीखंडाद्यैर्महाबलस्य संस्कारमकारयन्। तद्दिनाच्च नृपश्चिन्तयार्दितो जातः व्रीडितः मुक्तक्रीडः स्वसौधान्तस्तस्थौ।

अन्यदा नन्दनोद्यानवने चारणश्रमणमुनीश्वरयुग्मं समागतं। मंत्रीशास्तदागमनं ज्ञात्वा तदन्तिके नृपं निन्युः । मुनीन्द्रोऽपि महीपतेर्भावं विज्ञायोवाच–" संसारे जीवः कर्मणा समं मिलितः सुखं दुखं च भुनक्ति । अतः सौख्यार्थिना शुभकर्मणः संचयः कार्यः। स चात्मा चेतनरूपः सुज्ञानेन योज्यः। अज्ञानाद्रक्षणीयः। बुद्धिगुणविद्याभिः श्रीबलैः पराक्रमैर्भक्त्या युक्त्या च मृत्युतो रक्षितुं जननों शक्यते। उक्तं च—

मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा। दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम्॥ १॥

अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति॥ २॥

स न प्रकारः कोऽप्यस्ति येन सा भवितव्यता। छायेव निजदेहस्य लंघ्यते हन्त जन्तुभिः॥ ३॥

अशरणोऽयं जीवः । जीवानां पुनर्जन्म पुनर्मृत्युः केनापि नो निवार्यते । प्राणाः पञ्चदिनप्राघूर्णका इति विज्ञाय को रागः को द्वेषः को निजः कः परः ? दैवोपालंभैररण्यरुदितप्रायैरंभोध्यवगाहनसंनिभैर्विकल्पकल्पनैः किं ? आत्मपरात्मस्वरूपं निरीक्षणीयं "। इति गुरुणा संबोधितो राजा वैराग्येण व्रतं गृहीत्वा पदमव्ययं प्राप्तः । अतः कारणात् परद्रव्यपरिहारपरायणैर्नरैस्तृतीयं व्रतं पालनीयं।

। इति चौर्यव्रते महाबलसंबन्धः।

अथ तुर्यकेणुव्रतं ब्रह्मव्रतं पालनीयं । तस्यापि पञ्चातिचाराः । तद्यथा—

इत्वरात्तागमोऽनात्तागतिरन्यविवाहनम् । मदनात्ताग्रहोऽनंगक्रीडा च ब्रह्मणि स्मृताः ॥ १ ॥

व्याघ्रव्यालजलानिलादिविपदस्तेषां व्रजन्ति क्षयं, कल्याणानि समुल्लसन्ति विबुधाः सांनिध्यमध्यासते ।
कीर्तिः स्फूर्तिमियर्ति यात्युपचयं धर्मः प्रणश्यत्यघं, स्वर्निर्वाणसुखानि संनिदधते य शीलमाबिभ्रते ॥ २ ॥

हरति कुलकलंकं लुंपते पापपंकं, सुकृतमुपचिनोति श्लाघ्यतामातनोति ।
नमयति सुरवर्गं हन्ति दुर्गोपसर्गं, रचयति शुचि शीलं स्वर्गमोक्षौ सलीलम् ॥ ३ ॥

किंच—

ब्रह्मव्रतरता ये च विरताश्चान्ययोषितः । महातेजस्विनस्ते स्युर्वन्द्या दिविषदामपि ॥ ४ ॥

परित्यक्तान्यकान्तानां नराणामपि (मिव) योषिताम् । विधिरप्यनुकूलाय दृष्टान्तोऽत्र निशम्यताम् ॥ ५ ॥

अंगदेशे सर्वत्र प्रसिद्धं धारापुरनगरमस्ति । तत्र प्रकृतिसुन्दरः सुन्दरनामा नृपो राज्यं करोति । तस्य भाग्यसौभाग्यनिकेतनं सतीजनशिरोरत्नं मदनवल्लभा नाम नृपस्यात्यन्तवल्लभैकैव दयिताऽस्ति । तयोः कीर्तिपालमहिपालाभिधौ सुतावुभौ स्तः । तस्य नृपस्य न्यायधर्मैकनिष्ठस्य हृदि विशेषतः परनारीषु सहोदरत्वरूपदृढव्रतमस्ति । एतद्व्रतपालनात्तस्यसत्त्वैकनिधे राज्ञः सर्वत्र कीर्तिर्विस्तृता ।

बहुकालो गतः । अन्येद्युर्मध्यनिशायां तं नृपं प्रति विषण्णवदना कुलदेवता समेत्यैवं जगाद—" अहो राजंस्तवावस्थाऽशक्यप्रतीकारा ऽऽगन्तुकामिनी वर्तते । अधुना तव नवं वयोऽस्ति । अग्रे वृद्धं वयो भविष्यति । त्वदीयवचनादहं स्वप्रभावेण कालविलंबं कुर्वे । यदि कथयसि तदा नवे वयसि तथावस्था प्रादुर्भवति । यदि च कथयसि तदा वृद्धवयसि तथावस्था प्रकटीभवति । मया कालविलंबो विधीयते, पर मूलत उच्छेत्तुं न शक्यते " इति निशम्य राजा हृदि भृशं व्याकुलितस्तां नत्वा धैर्यमवलंब्येदं वचनमब्रवीत्—

" मातर्जीवेन यच्छुभाशुभं कर्मार्जितं तदेव भोक्तव्यं । उक्तं च—

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ।। १ ।।

कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।। २ ।।

अतः कारणाद्यद्भवति तद्भवतु । किं च हे देवि वृद्धभावे दुर्दशावस्थामहं भोक्तुं न क्षमः । अतोऽधुनैवास्तु " । ततः सा कुलदेवता निज स्थानमुन्मना गता । नृपेण धैर्यमवलंब्योरीकृतावस्था । यतः—

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ।। १ ।।

नृपेण चिन्तितं—" सुभटैरापत्तिमृत्युशत्रूणां सम्मुखमेव गन्तव्यं । अतः कारणाद्भार्या प्रेमवती सती मुग्धमुखौ बालौ सुतौ चैतदेव मम कुटुंबं । अनेन कुटुंबेन समं राज्यं त्यक्त्वाऽन्यतो यामि " । इति निश्चित्यामात्याय निशान्तर्वृत्तं वृत्तान्तमचीकथत् । " इदं

राज्यं यथाविधि पालनीयं, ममानिर्वृतिर्न कार्या, यतो देशान्तरं यास्ये ' इत्युक्त्वा नृपतिर्भाग्यवस्थोचितं वेषं कृत्वा तृणवद्राज्यादिकं सर्वं विहाय कुटुंबेन सहैकचित्त एकदिशं विनिर्ययौ । शंबलार्थमेकामंगुलीयकं सार्धं नीतं तदपि पथि चौरेण हृतं । स गच्छन् मार्गेऽबलां राज्ञीं प्रतिपालयन् क्षुधातृषाश्रमक्रान्तौ पदे पदे रुदन्तौ पुत्रौ वारयन् भक्तनीरवनफलादिढौकनात् प्रतिपालयन् गुर्वीमुर्वीमुल्लंघ्य क्रमात् कतिपयदिनैः पृथ्वीपुराभिधं पुरं प्राप । तत्र वप्रबहिर्भागे श्रीसारश्रेष्ठिपाटके श्रेष्ठिना कृपया दत्तगृहे भूपोऽवसत् । स स्वयं श्रेष्ठिनो गृहकार्यं कर्तुमशक्तः । सुतौ तु लघुकौ । राज्ञी तु स्त्रीस्वभावेन गृहकर्मणि कुशला प्रातिवेश्मिकगेहेषु गोमयोत्सारणादिकं कर्म निर्माय सर्वेषां भोजनं निर्वाहयति । तयोः सुशीलत्वेन सुसाधुत्वेन सुवचनेन च स्वल्पेऽपि कार्ये विहिते जनाः सुबहु मन्यन्ते । यतः—

स्थानभ्रंशान्नीचसंगात् खंडनाद् घर्षणादपि । अपरित्यक्तसौरभ्यं वन्द्यते चन्दनं जनैः ॥ १ ॥

तयोर्जीर्णमुत्तीर्णचीवरं शीतलं भोजनं च जनादाप्तं प्रीतये बभूव । एवं तयोः कियानपि कालो गतः ।

अन्येद्युः कोऽपि सार्थवाहो बहुसार्थसंयुक्तो दूरदेशान्तराद्वाणिज्यार्थं समागत्य श्रीसारश्रेष्ठिपाटकासन्नवने समुत्तरितः । तस्मिन् हट्टे धान्यघृतलवणादिकं गृह्णता सार्थवाहेन पृष्टं–अत्र कापि कर्मकर्यस्ति ? ' । तदा श्रेष्ठिना राज्ञी प्रेरिता । सा सार्थवाहस्य गृहकर्माणि करोति । तस्या रूपेण लावण्येनात्यन्तं सार्थेशो मोहितः विकारं प्राप्तः । ततस्तेन सार्थेशेन निजमानुषैः कथापितं ' त्वं मम गृहस्वामिनी भव ' इति श्रुत्वा सा भृशं कुपिता । सा राज्ञी सरागे गतरागाऽभूत् । अथ सार्थनायकस्तस्याः स्वभावं तं विज्ञायान्तर्दुष्टोऽपि बहिर्वृत्त्या क्षमयामास । सार्थेशकथनाद्राज्ञी विश्वसिता । ततो राज्ञी तस्य कार्यं कर्तुं सदापि तत्र याति । अन्येद्युः

प्रयाणदिवसे विशेषकार्यमुद्दिश्य मुग्धत्वेन विप्रतार्य सा स्थापिता। शेषदिनमतिक्रम्य सार्थेशः स्वपुरं प्रति प्रस्थितः। सा राज्ञी सार्थे धृता। मार्गे गच्छता विविधोपायैः सा क्षोभ्यमाणापि न क्षुब्धा। स्वपतिं ध्यायन्ती मौनमेव समाश्रयत्। स पापस्तस्याः शीलभंगं कर्तुं न शशाक। तस्या अपि महादुःखेन वासरा यान्ति।

इतस्तस्या भर्तुर्महीपतेर्गृहिणीं विनाऽत्यन्तं दुःखं समजनि। पुटपाकसमं दुःखमनुभवंश्चित्तेऽचिन्तयत्—"अहं कठोरहृदयोऽस्मि। मद्वियोगार्ता सा किं करिष्यति ?। एतदप्यस्तु। रे दैव ते मनोरथाः पूर्यन्तां"। इति विचिन्तयन् किंकर्तव्यतामूढो यावत्स्थितोऽस्ति तावत्तत्र श्रीसारश्रेष्ठी समागतः। स्वपादकमनुष्याणां सारां कुर्वंस्तमैक्षत। स ऊचे—'भो भद्र त्वं कथं सचिन्त इव दृश्यसे ?'। स लज्जाशोकभराक्रान्तो यावन्नोत्तरं ददौ तावद् पार्श्वजनैः श्रेष्ठिनः पुरः सर्वं यथाजातमाख्यायि। ततः श्रेष्ठ्युवाच—"महाभाग किं विधीयते। कर्मणां गतिर्विषमाऽस्ति। यतः—

नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वं
दृग्नाशो ब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे।
निर्वाणं नारदेऽपि प्रशमपरिणतिः सा चिलातीसुतेऽपि
इत्थं कर्मात्मवीर्ये स्फुटमिह जयतां स्पर्धया तुल्यरूपे ॥ १ ॥

अतः कारणाद्भवताऽधृतिर्न कार्या । अतः परं तव भोजनाच्छादनादिकं सर्वमहं करिष्ये । पुनरपि शृणु—मयाऽत्र कारिते चैत्ये त्वं त्रिकालं देवानर्चय । तव पुत्रौ च कुसुमान्यानयतां " । नृपः ससुतस्तत्प्रतिपद्य तथा कर्तुमारेभे। दैवं यादृशं पटहं वादयेत्ता दृशं कृती नृत्येत् । नृपः श्रेष्ठिनो मानसं बाढं रञ्जयामास । एवं कियानपि कालो गतः । अपरेद्युः श्रेष्ठी वाटिकां निरीक्षितुं गतः । तावदुभावपि कुमारौ पक्षिषु बद्धलक्ष्यौ धनुष्कशरव्यग्रकरावाखेटकचापलं कुर्वन्तौ सहसाऽद्राक्षीत् । तदा श्रेष्ठी तत्पापकर्मेक्षणाज्जातकोपाटोपारुणेक्षणस्तौ ताडयामास । धनुः शरांश्च बभञ्ज । तौ वाटिकाया बहिराकृष्य तत्पितुः पुरो गत्वा बभाषे—' भोः शृणु तव सुतौ पापौ, त्वया क्षणमप्यत्र न स्थेयं ' इति साक्षेपमुक्त्वा निजधाम गतः । तदा नृपेण सुतौ साश्रुमुखावागच्छन्तौ निरीक्ष्य न्यवारयत्–" वत्सौ मा रुदतां । किं करोम्यहं ? । नान्यस्य कस्यापि दोषः । स्वकर्मैवापराध्यति। कस्याग्रे कथ्यते ? श्रेष्ठ्यपि तादृश इत्थमेकापराधेन मे पुत्रौ निरवामयत् । प्रतिकूले विधौ किं न स्यात् ? । यतः—

प्रतिकूले विधौ किं वा सुधापि हि विषायते। रज्जुः सर्पीभवेदाशु बिलं पातालतां भजेत् ॥ १ ॥
तमायते प्रकाशोऽपि गोष्पदं सागरायते । सत्यं कूटायते मित्रं शत्रुत्वेन प्रवर्तते ॥ २ ॥

ततो नृपो ' यद्भावि तद्भवत्येव ' इति विचिन्त्य सुतौ पुरस्कृत्य शून्यमुखोऽन्यनगरं प्रत्यचलत् । कुत्रापि कन्दफलाहारैः क्वापि भिक्षाभोजनैः कुत्रापि भिक्षामलभमानः क्वापि जनैर्निन्द्यमानः गुर्वीमुर्वीमुल्लंघ्यैकां महाभयंकराटवीं प्राप । तामतिक्रम्य यावदग्रे

याति तावद्दुस्तरा तटिनी समाजगाम। नृपोऽप्यचिन्तयत्—'अथ किं करोमि ? एतस्या उत्तारः कथं स्यात् ?' इति स्वयं वितर्कयन्नुपायं लब्धवान्। पुत्रमेकं तत्र मुक्त्वा एकं सुतं च स्कन्धे कृत्वा समुत्तरितः। तत्र तीरे पुत्रं मुक्त्वा भूयो नदीमाविशत्। यावदन्तराले गतस्तावन्नदीपूरेण प्लावितः। इतस्ततो बाहुं कुर्वन् काष्ठखंडमेकं करे प्राप्य पश्चरात्रेण तत्तीरमाससाद। तत उत्तरितः। तत्र विषादभाग्ध्यौ—'हा हताशस्य मे विधिविपाकः ? क्व तन्मे मुदितराज्यं ? क्वासावनर्थपरंपरा ? राज्यभ्रंशेऽपि कर्मणा कान्तावियोजनं कृतं। सुतयोरपि वियोगः कृतः। अथ मे जीवितेन किं ?। आत्महत्ययापि दुर्गतिः स्यात्। परत्रापि पुनरपि भोक्तव्यं। इहाप्येवं भुज्यते। यतः—

कस्य वक्तव्यता नास्ति सोपायं को न जीवति। व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम्॥ १॥

किं च—

अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथा मन्ये दैन्यं नात्रातिरिच्यते॥ २॥

[illegible]पि संपदो दीनो हीनत्वं नैव मुञ्चति। शिरश्छेदेऽपि वीरस्तु धीरत्वं नैव मुञ्चति॥ ३॥

[illegible]ग्रामे कस्यापि कौटुंबिकस्य वेश्मनि जलपानार्थं प्रविष्टः। तेन संभाषितः—'कस्त्वं भोः ?'। तेनोक्तं—'क्षत्रि[illegible]'। [illegible]नोक्तं—'मद्गृहे तिष्ठ, गृहकर्माणि कुरु'। आमिति कथयन् स तत्रैव स्थितः गृहकर्माणि करोति। तत्र भक्त[illegible]। [illegible]न तस्य घृतभक्तादिलाभतो देहे बहुरूपकान्तिदीप्तितेजांसि समजनिषत। अन्येद्युः कौटुंबिकप्रिया तं

गीस्य मदनातुरा जाता । असतीजनयोग्यानि वचांसि बहुधा व्यधात् । तन्निशम्य नृपश्चकितश्चित्ते चिन्तयति—"अरे दैव त्वदायत्तं राज्यवित्तादिकं यातु, परं शीलं मदायत्तं, तन्मा यातु । अत्रावस्थानं नूनं शीलभंगाय मम भवति । अतोऽहमन्यत्र यामि । रिक्ता भूः परित्याज्या"। इति विचिन्त्य तस्या महाग्रहं ज्ञात्वा यत् किञ्चिदुत्तरं दत्वा तद्गृहान्निर्ययौ । देशान्तरे भ्रमन् श्रीआदिदेवप्रासादं ददर्श । तत्र श्रीऋषभदेवं स्तुत्वा गवाक्षे समुपविष्टोऽस्ति । इतश्च काचिद्यक्षिणी सुरी त ागात् । जिनेश्वरं प्रणम्य पश्चाद्वलमानया तया स नृपो दृष्टः । तमनंगसमरूपं दृष्ट्वा मोहं प्राप्ता सा मदनातुरा तं नृपं कथयति—"भोः सुन्दरपुरुष मया सह त्वं पञ्चविधानि विषयसुखानि भुंक्ष्व । तव मनोवाञ्छितं ददामि । मदीयविमाने त्वरितमागच्छ । नो चेत्तव विप्रियं करिष्ये । तव मृत्युर्भविष्यति । अतः कारणान्मया सह भोगान् भुंक्ष्व"। नृपस्तच्छ्रुत्वाऽचिन्तयत्—'यतोऽहं नष्टस्तदग्रेतनं संजातं' इति विचिन्त्योवाच—"अहो देवि मम परनारीनियमोऽस्ति । अन्यच्चाब्रह्मफलं शृणु—

पंढत्वमिन्द्रियच्छेदं वीक्ष्याब्रह्मफलं सुधीः । भवेत्स्वदारसंतुष्टोऽन्यदारान् वा विवर्जयेत् ॥ १ ॥

अतः कारणान्मम नियमोऽस्ति । त्वयाऽसमञ्जसं न वक्तव्यं । यूयं देवाः । अहं मानवः । संयोगोऽयं न संजाघटीति"। ततो देवी तस्य निश्चयं ज्ञात्वा कुपितोरगीरूपेण नृपमदशत् । तदनन्तरं समुद्रान्तरालद्वीपे कूपमध्ये मुक्तः । देवी तिरोदधे । स शीलप्रभावात्प्रतिकूपे पपात । कूपपाताच्छीलानुभावाच्च निर्विषो बभूव । क्षणेन सावधानीभूत आत्मानं कूपान्तराले पश्यति । चेतसि चिन्तयति—"चेन्मम शीलमखंडितमस्ति तदा मे किमपि नो गतं । सर्वोऽयं मम पूर्वकृतकर्मप्रभाव एव"। तत्र कूपमध्ये

द्वारं दृष्टं । तद्द्वारस्य मध्ये प्रविष्टः । अग्रे महानावासो दृष्टः । तन्मध्ये नाटकं दृष्टं । तत्र सिंहासने चलत्कुंडलाभरणः सुरो दृष्टः । तस्य पादयो राजा पतितः । सुरेण पृष्टं—'कथमत्रागतः ?' । तेन स्ववृत्तान्तो निवेदितः । तच्छ्रुत्वा सुरस्तुष्टोऽवक्—"धन्यस्त्वं यस्येदृशो नियमोऽस्ति । संकटेऽपि यस्यैवं प्रतिज्ञा । तत्र सत्त्वेन तुष्टः । वत्स वरं वृणीष्व"। नृपेणोक्तं—'स्वामिन् मम भार्या सुतौ च क सन्ति ?' । सुरेणोक्तं—"तव कुटुंबं मिलिष्यति । तव शीलप्रभावाद्राज्यमपि भविष्यति । चिन्तामणिरत्नं गृहाण । मनसः ईप्सितं भविष्यति" । इति चिन्तामणिरत्नं दत्त्वा सुरेण तस्मिन्नेवादिदेवचैत्ये मुक्तः स नृपो मुदित इतस्ततो भ्रमन् श्रीपुरनगरासमीपवने आम्रतरोरधो विशश्राम । तस्याम्रस्य फलैः क्षुन्निवृत्तिं करोति । स श्रमायातया निद्रया सुष्वाप ।

इतश्च तदा तत्र पुरे पुत्रवर्जिते राज्ञि विपन्ने हस्त्यश्वचामरच्छत्रकुंभाख्यं दिव्यपञ्चकं राजलोकेन पुरस्कृतं पञ्चशब्दनिनादेनाभिमन्त्रितं यत्राम्रतरोरधो नृपः सुप्तोऽस्ति तत्र भ्रमयत्। तत्र हयेन हेषितं । हस्तिना गृहीतं । शिरसि कुंभांबु पतितं । उपरिष्टाच्छत्रं स्थितं । चामरद्वयं चलितं । अथ स करीन्द्रमारूढ़ो दिव्यवेषधरो महोत्सवैः पुरं प्रविष्टः । मंत्र्यादिभिर्नतः । भाग्यप्रभावात्तत्र नगरे राज्यं करोति । क्रमात्तस्य सीमन्ता अनम्रा अपि नम्रतां ययुः । एकदा प्रधानैस्तस्य पादयोर्निपत्य बहु भणितोऽपि स नृपतिः स्त्रीसुतवियोगदुःखाद्दारसंग्रहं न मेने ।

इतश्च तौ कुमारौ भ्रमन्तौ तत्र श्रीपुरे नगरे समागत्यारक्षकान्तिके स्थितौ । अन्यदा भवितव्यतावशात्स सोमदेवसार्थवाहस्तस्मिन्नेव नगरे समागत्य बहिरावासितः । सार्थवाहः श्रेष्ठं किञ्चिदुपायनं गृहीत्वा नृपसन्निधौ गतः । नृपेण च सत्कृतः समादिष्टः । तलारक्षकोऽपि तावुभौ कुमारौ तत्र रक्षितुं प्रैषीत् । तयोस्तत्राव-

स्थितयो रात्रौ मिथः संलापं कुर्वतोर्विनोदाय कनीयसा भ्रात्रा ज्येष्ठः पृष्टः—'आवयोः पिता क्व गतो भविष्यति ? माता च क्व गता भविष्यति ?'। ज्येष्ठबन्धुरवक्—'न ज्ञायते जननीजनकयोः संयोगः कदा भविष्यति'। इत्यन्योऽन्यं स्वराज्यादिवृत्तान्तं तावाख्यतुः। तदा तत्र कर्मकरी मध्यस्थिता सार्थवाहेन सहागता राज्ञी मदनवल्लभा प्रायेण दुःखजाग्रती समूलपर्यन्तं वृत्तान्तं श्रुत्वा स्नेहशोकाभ्यां विह्वलीभूतमानसा तत्रागत्य तयोः कंठे विलग्य वाढं रोदिति। 'मम मन्दभाग्याया हा वत्सौ युवां चिरान्मिलितौ'। सार्थपतिस्तत् ज्ञात्वा कुपितो हठेन तां दूरमुत्सार्य तौ धृत्वा भूपतेः प्रातरार्पयत्। सोपालंभं चावादीत्—'स्वामिन्नारक्षकेण सुन्दरावस्मन्मनुष्यधूर्तत्वकारिणौ यामिकौ प्रेषितौ'। राज्ञोक्तं तलारक्षकस्य—'काविमौ ?' सोऽप्यचीकथत्—'स्वामिन्नोपलक्षयामि। कियान् कालो जातः। मद्गृहस्थौ सेवां कुरुतः'। नृपस्तौ सम्यगुपलक्ष्य रोमाञ्चकञ्चुकं दधौ। तथापि गुरुगांभीर्यादाकारगोपनं विधाय तयोः साक्षेपमवोचत्—'रे युवाभ्यां किं कृतं ?'। इत्युक्त्वा तौ समालिंगितौ। तावपि नृपचरणे पेततुः। तयोर्मध्ये ज्येष्ठोऽवदत्—"देव रात्रौ अद्य सोदरस्य पुरः स्वचरित्रमहं कथयामास। तदा कापि स्त्री सार्थमध्याद् द्रुतमागत्यास्मत्सन्निधावेवमुक्तवती 'मम युवां पुत्रौ' इत्युक्त्वा साऽस्मत्कंठे विलग्य बाढं रोदिति स्म। नाधिकमतः परं जानामि"। तदा नृपः सार्थेशमुवाच—'सार्थेश वद सत्यं, का सा स्त्री ?'। तदा सार्थेशोऽवदत्—'मया पृथ्वीपुरादानीता मद्गृहकार्याणि करोति। परं तु सा सती। सतीत्वेन तस्या विमलं कुलमनुमीयते"। ततो नृपः प्रधानं प्रैषीत्—'बलात्कारो न कार्यः, संबोध्य सा आनीयतां' इत्युक्त्वा भूपतिरमात्यं प्रैषीत्। सोऽपि गत्वा तामाकारयति। सा सन्मुखमपि नावलोकयति। प्रधानः पश्चादागत्य नृपस्य शशंस—'सा नैति न च ब्रूते'। अथ गयो राजा राजपाटीमिषात् स्वयं बहिर्गत्वा व्याघुट्य सार्थमध्ये सार्थेशावासं समागतः। तत्र भद्रासनोपविष्टस्य नृपस्य

सा सती स्वीनगरमागता । सा कीदृशी ? एकवेणीबन्धा मलिना दीनाऽतीवदुर्बला मलिनांबराऽसंस्कृतदेहा तद्दिने तु विशेषतः पुत्रवियोगार्ता । भूपस्तामेवंविधां मदनरेखां निरीक्ष्य लज्जयाधोमुखीमित्युवाच—'भो मदने देवि किं त्वं मां नोपलक्षयसि ?' । तदा सा स्वभर्तुः पादाभिलिखिता महामानसा नम्री । ततः सार्थेशो भीतस्तस्याः पादयोर्निपत्य क्षमयामास । ततः सा राज्ञी राज्ञः कुपितादभयं दापयामास । अथ नृपस्तां चारुनेपथ्यभूषितां कृत्वा तूर्यनिर्घोषपूर्वं करिस्कन्धाधिरूढां राजचिह्नाङ्कितां कृत्वा पुरस्त्रीभिः वीक्ष्यमाणो नव्यपरिणीतवत् स्वमन्दिरमचलत् । कीर्तिपालमहीपालाभिधौ सुतौ राजा राज्ञी चैवंविधं स्वकुटुंबं मिलितं । तेषां मिलितानामन्योन्यमात्मीयवृत्तान्तप्रश्नाख्यानविधायिनामनुभूतमहादुःखात् यत्सुखं जातं तत्सर्वज्ञो वेत्ति । शीलसत्त्वप्रभावेण राज्यं प्राप्तं । कुटुंबं समग्रं मिलितं । अन्यदेशीया नृपा अपि शीलप्रभावेण वश्या जाताः ।

इतश्च धारापुरे मंत्री स्वामिपादुके सिंहासने न्यस्य तथैव राज्यं निरवाहयत् । ततः स्वस्वामिवृत्तान्तं ज्ञात्वा श्रीपुराभिधे पुरेऽमात्यो विज्ञप्तिपत्रिकां लिखित्वा निजं जनं प्राहिणोत् । तत्रासौ निर्विलंबं गत्वा द्वारपालेन निवेदितो नृपमानम्य पादयोः पुरो विज्ञप्तिपत्रं मुमोच । नृपादेशादमात्यस्तां विज्ञप्तिकामुद्घाट्य वाचयामास । तद्यथा—"स्वस्ति श्रीश्रीपुराभिधे पुरे प्रतापाक्रान्तविक्रान्तसर्वपार्थिवभुजो महाराजाधिराजस्य श्रीसुन्दरमहाप्रभोश्चरणांभोरुहाणां धारापुरपुरादादेशकारकः सुबुद्धिः सोत्कंठं नत्वा विज्ञपयति—स्वामिपादद्वयरेणुकणानुभावतोऽत्र सातं वरीवर्ति । अपरं च स्वामिन् सकलोऽपि देशजनः स्वामिपादानां दर्शनमभिकांक्षति, तस्मात्प्रसादं कृत्वा शीघ्रं पादा अवधार्यन्तां । नात्र विलंबः " । इत्याकर्ण्य जनस्य रतिं मंत्रिणश्च भक्तिं विज्ञाय स्वकीयं प्राग्भुक्तं राज्यं स्मृत्वा प्रीतोऽवदत्—" अहो ये उत्तमास्ते स्वकीयां प्रकृतिं न त्यजन्ति । यतः—

तप्तं तप्तं पुनरपि पुनः काञ्चनं कान्तवर्णं, घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धम् ।
छिन्नश्छिन्नः पुनरपि पुनः स्वादवानिक्षुदंडः, प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥ १ ॥

अथ ज्येष्ठसुतं तत्र निजपदे स्थापयित्वा समस्तराजवर्गं समादिश्य पौरानापृच्छ्य लघुसुतकलत्रयुक्तो भूरिपरिवारसमन्वितो धारापुरपुरं प्रति नृपोऽविच्छिन्नप्रयाणो ययौ । तत्र मंत्रिसामन्तप्रभृतयो नागराः प्रवेशमहोत्सवं चक्रिरे । तत्र स राज्यं चकार । सर्वेऽपि मुदितास्तं नृपं सिषेविरे ।

एकदा बहिरुद्याने ज्ञानिनं मुनिमागतं श्रुत्वा मुनिं नत्वा धर्मदेशनां श्रुत्वा प्राच्यकर्म पृष्टवान् । मुनिर्ज्ञानाद्विदित्वोवाच—"राजंस्त्वं प्राग्भवे चंपायां शंखनामा व्यवहार्यभूत् । श्रीमती तव प्रियाऽभूत् । सद्गुरुयोगात्तारुण्ये चैत्येषु जिनार्चनं दीनादिषु दानादिकं पुण्यमगण्यं करोति । ततो वृद्धभावे सर्वमपि पुण्यकार्यं मुक्तं । तयोर्जीवौ विपद्य युवां क्रमाज्जातौ । तेनादौ राज्यश्रीः प्राप्ता । पश्चाद्दुःखिनौ जातौ । निजबुध्ध्या यच्छीलं पालितं तत्प्रभावादिहैव जन्मनि राज्यसौख्यं भूयोऽप्यासादितं" । ततो नृपः संवेगरंगेण तरंगितमना धर्मकृत्यं श्रुत्वाऽणुव्रतानि गृहीत्वा सर्वज्ञभवनानि कारयित्वा जिनेश्वराणां प्रतिमाः स्थापयित्वा त्रिधिनाऽर्चयामास । स नृपो दयार्द्रचित्तः सत्यासक्तः परद्रव्यपराङ्मुखः सशीलः सुसंतोषः परोपकृतिकर्मठ एवंविधो राज्ञ्या समं गृहिव्रतमखंडितं पालयित्वाऽवसाने शुभध्यानं कृत्वा दिवं ययौ । अतः कारणाद्भव्यैर्ब्रह्मव्रतं पालनीयं ।

। इति ब्रह्मव्रते सुन्दरनृपकथानकं ।

अथ पञ्चममणुव्रतं परिग्रहपरिमाणं ज्ञेयं । तस्यापि पञ्चातिचारा हेयाः । तद्यथा—

धनधान्यस्य कुप्यस्य गवादेः क्षेत्रवास्तुनः । हिरण्यहेम्नश्च संख्यातिक्रमोऽत्र परिग्रहे ॥ १ ॥

परिग्रहप्रमाणनियमः कार्यः । लोभस्त्याज्यः । यतः—

धनहीनः शतमेकं सहस्रं शतवानपि । सहस्राधिपतिर्लक्षं कोटिं लक्षेश्वरोऽपि च ॥ १ ॥
कोटीश्वरो नरेन्द्रत्वं नरेन्द्रश्चक्रवर्तिताम् । चक्रवर्ती च देवत्वं देवोऽपीन्द्रत्वमिच्छति ॥ २ ॥

अतः कारणाल्लोभो निवारणीय एव । लोभिपुरुषाः कथमपि सुखं सन्तोषं च न प्राप्नुवन्ति । यतः—

वह्निस्तृप्यति नेन्धनैरिह यथा नांभोभिरंभोनिधिस्तद्वल्लोभघनो धनैरतिघनैर्जन्तुर्न संतुष्यति ।
न त्वेवं मनुते विमुच्य विभवं निःशेषमन्यं भवं यात्यात्मा तदहं मुधैव विदधाम्येनांसि भूयांसि किम् ॥१॥
कालुष्यं जनयन् जडस्य रचयन् धर्मद्रुमोन्मूलनम् क्लिश्यन्नीतिकृपाक्षमाकमलिनीं लोभांबुधिं वर्धयन् ।
मर्यादातटमुद्रुजन् शुभमनोहंसप्रवासं दिशन् किं न क्लेशकरः परिग्रहनदीपूरः प्रवृद्धिं गतः ॥ २ ॥

। अत्र व्रते धनसारदृष्टान्तः ।

अत्रैव भरताभिधे क्षेत्रे निधविख्याता मथुरा नाम महामनोहरा पुरी वर्तते । तत्र धनसारनामा व्यवहारी वसति । तस्य पद्-

पष्टिद्रव्यकोटयः सन्ति । निखाते व्यवहारे देशान्तरव्यापारे च प्रत्येकं प्रत्येकं द्वाविंशतिकोटिधनाधिपत्यं प्रतिपालयन् व्यापारं करोति । तथाप्यतृप्तः क्वापि न रतिं प्राप । कस्यापि न विश्वासं करोति । वित्तलेशोऽपि न भुज्यते । कथमपि दीनादौ वित्तं न ददाति । क्षारांबुधेर्बिन्दुरिव तस्य वित्तमभोग्यमासीत् । याचके गृहे समागते तस्य शिरोऽर्तिर्जायते । याचमाने च तस्य हृदयदाहो जायते । गृहमानुषं भिक्षुकादेर्भिक्षां ददतं वीक्ष्य मूर्छति निवारयति च । सरसमन्नं घृतादिकं च न भुंक्ते । दानस्य वार्ता दूरादेव पलायते । स प्रातिवेश्मिकादिकं दानं ददतं न वीक्षते । देवादिधर्मकार्येषु केनापि भणितो दन्तशकटं बध्वा निश्चेष्टीभूय तिष्ठति । किं बहुना ? गृहमनुष्या अपि तस्मिन् बहिर्गते एव भुञ्जते । यतः—

दानशब्दादुदारेण गृहीते प्रथमाक्षरे । कृपणैः स्पर्धयेवास्य न इत्येवाक्षरः कृतः ॥ १ ॥

कृपणत्वेन तस्य महाकृपण इत्याख्या जनैर्निर्ममे । कदाचिचपलातैलतुवरिकवल्लैर्भोजनं करोति । कदाचिच्छीतं कदाचिदुष्णं कदाचित्कुत्सितान्नं च भुंक्ते । एवं तस्य कियानपि कालो गतः । एकस्मिन् दिने भुवं खनित्वा रहः स्थित्वा यावन्निधिं संभालयति तावत्तत्राङ्गारानपश्यत् । ततः स शंकितोऽपरानपि सर्वान्निधीनवलोकयति । तत्रापि मत्कोटकाहिवृश्चिकादीनि वीक्ष्य हृदयं ताडयित्वा पतितः । नित्यं स दुःखितो बाढं विलपति । तावदन्यदाऽम्बुधौ यानभंगादिकं केनापि कथितं । तस्य धनं जलस्थलगतं सर्वमपि विनष्टं । वणिक्पुत्रैश्च भक्षितं । मुहुर्मुहुर्धनं स्मृत्वा सर्वत्र शून्यो भ्रमति । यतः—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ १ ॥

तथा च—

कीटिकासंचितं धान्यं मक्षिकासंचितं मधु । कृपणैः संचिता लक्ष्मीरन्यैरेवोपभुज्यते ॥ २ ॥

तेनेदं चिन्तितं—" अथाहं किं करोमि ? मया महाकृपण इत्याख्या पुरे प्राप्ता । अधुना निर्धनत्वेन पुरे हास्यास्पदं प्राप्स्यामि । ततोऽद्यापि जलधिमार्गेण चेद्यामि तदा मम लाभः सुन्दरो भावी " । ततो मेयपरिच्छेद्यगण्यधार्यक्रयाणकं दशलक्षाणां संगृह्य पोतमारुह्य कणकाज्यभोज्यनीरेन्धनैर्युक्तः सांयात्रिकलोकैः सहाम्बुधिमध्ये प्रतस्थे। तत्राप्यभाग्यवशादकस्मात् कियद् दूरं गते घनेन नभो रुरुधे । उद्दंडो महावातः प्रकटीबभूव। विद्युद्दंडोऽप्युल्बणः समजनि । तदांभोधिस्तं पोतमुदलालयत् । निर्यामकैर्धैर्यं मुक्तं । शरण्यरहितो लोकः किंकर्तव्यतामूढो जातः । कोऽपि जले झंपामदात् । कोऽपि देवतां सस्मार । कोऽपि गृहमानुषान् सस्मार। कोऽपि अधो निपत्य स्थितः । कोऽपि मां रक्ष रक्षेत्यवक् । कोऽपि मुखं व्यादाय तस्थिवान् । ततः सहसा पोतः शतखंडो जातः । तस्मिन् पोते भग्ने धनसारस्तु लब्धफलको वार्धिवीचिभिर्बहिः क्षिप्तः । ततोऽटव्यां भ्रमन् दीन इति व्यचिन्तयत्—" अहो मम क्व तद्धनं ? क्व तद्धनं ? क्व परिच्छदः ? पवनेनार्कतूलवत् विधिना क्वाहमानीतः ? धिग्मां, येन मया प्रभूतं धनं संचितं, न भुक्तं, न धर्मे व्ययितं, न परस्योपकृतं " इत्यादि भावयन् इतस्ततो भ्रमन् तत्कालोत्पन्नकेवलज्ञानभासुरं मुनीश्वरमेकं ददर्श । तन्महिम्नागतैर्देवैः स्वर्णपंकजे निर्मिते समासीनं तं मुदा नत्वा धनसारस्तत्रोपविष्टः । तदुक्तं धर्मं श्रुत्वा लब्धावसरस्तं केवलिनं पप्रच्छ—' हे भगवन्नहं कथं कृपणः कथं च नष्टविभवः संजातः ? ' । केवली प्राह—"भो भव्य शृणु । धातकीखंडभारते धनाढ्येभ्यगृहे द्वौ भ्रातरावभूतां । पितरि मृते ज्येष्ठो गृहनेताऽभवत् । स च गंभीरः सरलः सदाशयो दाता सद्भावुकः । कनिष्ठः कृपणो लोभवान् । ज्येष्ठो यदा दीनादिभ्यो दानं

प्रयच्छति तदा लघुर्ज्येष्ठोपरि प्रद्वेषं वहति । दानाद् भृशं वारयति। ज्येष्ठस्तु न विरमति तदा कनिष्ठो विभिन्नो जातः । ज्येष्ठभ्रातुः श्रियं ददतः पुण्यसेवनाल्लक्ष्मीर्वृद्धिं प्राप्ता । लघुस्तु दानमददत् जातो दरिद्री । यत उक्तं—

दीयमानं हि नापैति भूय एवाभिवर्धते । कूपारामगवादीनां ददतामेव संपदः ॥ १ ॥

सुस्थानन्यासकृष्टेव दातारं श्रीः पुनः श्रयेत् । निर्गता गुप्तिभीतेव कृपणं नैति सा पुनः ॥ २ ॥

लघुर्मत्सरेण नृपतेः पुरो ज्येष्ठबान्धवस्यालीकं किंचित् प्रकाश्य सर्वस्वं ग्राहयामास । ज्येष्ठबन्धुस्तेन वैराग्येण सुसाधुचरणान्तिके परिव्रज्यां गृहीत्वा चिरं चारित्रं प्रतिपाल्य सौधर्मे प्रवरः सुरो जातः । लघुभ्राताऽपि लोकेन निन्द्यमानो बालतपः कृत्वा काले मृत्वाऽसुरेषूदपद्यत । असुरयोनिभ्य उद्वृत्य त्वं जातः । ज्येष्ठस्तु सौधर्माच्च्युत्वा ताम्रलिप्त्यां महेभ्यस्य सुतः समजनि । स काले प्रतिपन्नयतिव्रतः समुत्पन्नकेवलज्ञानो विहरति । सोऽहमेव । यद्दानप्रद्वेषतोऽन्तरायः कृतस्तत्कर्मविपाकेन तव कृपणत्वमभवत् । ज्येष्ठबन्धोर्ऋद्धिः पैशुन्यात्त्वया ग्राहिता तद्विपाकादिदानीं तव धनं नष्टं । तद्दुष्कृतं गर्हित्वाऽद्यापि यथार्जितं धनं मूर्छां विमुच्य पात्रे नियोज्यं । उक्तं च—

यद्ददाति यदश्नाति तदेव धनिनो धनम् । शेषं को वेत्ति कुत्रापि कस्याप्युपकरिष्यति ॥ १ ॥

मृत्युः शरीरगोप्तारं धरा च धनरक्षकम् । दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलं ॥ २ ॥

इह लोको भवेद् भुक्ते दत्ते परभवः शुभः । अभुक्तदत्ते वित्ते तु वद कोऽत्र गुणो नृणाम् ॥३॥

अनित्यास्थिरासारा लक्ष्मीर्यदीयते भुज्यते च तदेव वरं । यतः चपला नारीव कस्यापि वेश्मनि लक्ष्मीः स्थितिं न कुरुते । तद्दानं पञ्चविधं । यतः—

अभयं सुपत्तदाणं अणुकंपा उचिय कित्तिदाणं च । दोह्न वि मुक्खो भणिओ तिन्नि वि भोगाइया दिंति ॥ १ ॥
लक्ष्मीः कामयते मतिर्मृगयते कीर्तिस्तमालोकते प्रीतिश्चुम्बति सेवते सुभगता नीरोगतालिंगति ।
श्रेयःसंहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थितिर्मुक्तिर्वाञ्छति यः प्रयच्छति जनः पुण्यार्थमर्थं निजम् ॥२॥
यत्र तत्रापि देयं चेत्पात्रे च दीयते तदा । शालिभद्रवदाप्नोति मनोऽभिलषितं सदा ॥ ३ ॥

पात्राभावेऽपि यत्र तत्र ददतः कुबेरवद्गतलक्ष्मीरपि पश्चादायाति "। तच्छ्रुत्वा धनसारेण पृष्टं—' कः कुबेरः ? तेन कथं लक्ष्मीः प्राप्ता ? '। इति पृष्टे मुनिः प्राह—" श्रूयताम् । श्रीविशाले विशालपुरे नगरे गुणाढ्यो भूपती राज्यं करोति । तत्र कुबेर इव धनाधिपः कुबेराख्यो व्यवहारी वसति । ऋद्धिपूर्णः स स्रक्चन्दनवनिताविलासगीतगानादिवस्त्राभरणादिसुखं भुनक्ति । अन्यदा श्रीर्देवता दिव्यरूपा सर्वेशभूषिता च तस्यौकसि समागत्य तं निशि सुप्तमभाषत—'अहो जागर्षि निद्रालुर्वा ? इति श्रुत्वोत्थाय संभ्रमात्स जगाद—' मातर्जागर्मि । त्वं कासि ? '। इत्युक्ते साऽवदत्—" अहं लक्ष्मीरस्मि । भाग्यादेव ममायस्थानं भवति । अधुना तव भाग्यं क्षयं गतं । अतः कारणात्तव गृहाद्यामि "। ततः सहसोत्पन्नबुद्धिः स वक्ति स्म—'एवं चेत्तर्हि दिनसप्तकं तिष्ठ'। ततः ओमिति प्रतिपद्य सा तिरोदधे । तदनन्तरं प्रत्यूषे स कुबेरो निखातगतं सर्वं धनं प्रकटीकृत्य गृहमानुषाणामखिलान्याभरणा-

दीनि कांसद्रव्यादीनि चाकृष्य महोत्करानचीकरत् । पश्चात् पुरमध्ये उद्घोषणामकारयत्—' अनाथा दुःस्थिता दुःखिताः स्वजनाश्च सर्वे समागच्छन्तु । तेषामिच्छितदानं ददामीति । तथा च सर्वज्ञभवनादौ पूजास्नात्रमहोत्सवादिकं साधुषु वस्त्रान्नदानं ज्ञानोपकरणादिकं कृत्वा साधर्म्यवात्सल्यादिकैर्धर्मकृत्यैः सप्तभिर्दिनैर्द्रव्यं व्ययितं । भक्तशेषोऽभवद् । सप्तमदिनरात्रौ जीर्णमञ्चके निशि निश्चिन्तः सुप्तः । तावच्छ्रीदेवी तत्रागत्य विलक्षा तमभाषत—' अहो कुबेर जागर्षि न वा ' । श्रेष्ठिना न जल्पितं । तदा श्रियोक्तं—' ममोत्तरं न दत्तं ' । तावत् हस्तसंज्ञयोपलब्धः स संभ्रान्त इवोत्थितः—" मातर्मया न ज्ञातासि । क्षम्यतां । धनाभावान्निश्चिन्तत्वेन सुखनिद्राऽद्य ममाभवत् " । ततः श्रीरूचे—' अहं गंतुं न शक्नोमि । त्वयाहं वाढं संप्रति दानपाशेन बद्धा ' । कुबेरोऽप्यब्रवीत्—' कः कस्य बन्धनं करोति ? यथेप्सितं स्थानं व्रज ' । देवता प्राह—"भो भद्र स्वेच्छया कुतो गमनं भवति ? यतः—

> भो लोका मम दूषणं कथमिदं सञ्चारितं भूतले।
> सोत्सेका क्षणिका च निघृणतरा लक्ष्मीरिति स्वैरिणी ।
> नैवाहं चपला न चापि कुलटा नो वा गुणद्वेषिणी ।
> पुण्येनैव भवाम्यहं स्थिरतरा युक्तं च तस्यार्जनम् ॥ १ ॥

अतोऽहं पुण्यवशा । त्वया तु पुण्यकृत्यानि कृतानि । तेनाहं स्थिता " । स हृष्टोऽब्रवीत्—' मातः कथमेष्यसि ' । श्रीरवोचत्—"भो भद्र निशम्यतां । नगराद् बहिः पूर्वप्रतोल्यां सरस्तटे श्रीदेव्या भवनेऽवधूतवेषेण यो भवेत् तं निमंत्र्य भोजयित्वा मध्यापवरके

लकुटेन ताडनीयः । स च स्वर्णपुरुषो भविष्यति "। ततः प्रभाते देव्यादेशेन तथैव विधिना कृते सुवर्णपुरुषो जातः । खंडितोऽपि सोऽक्षय एव । पुण्यप्रभावात्तत्रैव सुखी जातः । प्रातिवेश्मिकेन नापितेन स व्यतिकरो ज्ञातः । तेन चिन्तितं—'अरे अमीषां व्यवहारिणां गृहे लक्ष्मीरित्थं प्रजायते । अहमपि करिष्ये '। इति विचार्य सोऽन्यदा तादृशं नरं वीक्ष्य देवकुलस्थितं निमंत्र्य भोजयित्वा लकुटेन शिरसि जघान । स तेन प्रहारेणोच्चैराक्रन्दत् तदा तलारक्षः सायुध आक्रन्दं श्रुत्वा समाजगाम । तद् दृष्ट्वा नापितो बद्ध्वा राज्ञोऽग्रे निवेदितः । राज्ञा वृत्तान्तः पृष्टः—' भोः सत्यं वद '। स सर्वं वृत्तान्तं समाख्यातवान्—" स्वामिन् कुबेरव्यवहारिणो गृहे यथा स्वर्णपुरुषोऽजनि तादृशं मयापि चक्रे । परं तु फलं तादृशं नाभूत् "। भूपेन कौतुकात्तमाकार्य पृष्टं । कुबेरोऽपि सर्वं मूलादारभ्य वृत्तान्तमाचचक्षे । ततो राजा तुष्टोऽवदत्—' धन्योऽहं, यस्य मे पुरे ईदृशा दातारः पुण्याढ्याः सत्यभाषिणः सन्ति '। इत्युक्त्वा राज्ञा सत्कृतः कुबेरः स्वगृहे गतः । नापितोऽपि मुक्तः स्वगृहे गतः । तदनन्तरं कुबेरोऽपि विशेषतः सद्धर्मकृत्यपरोऽभवत् । पुण्यादवसाने स्वर्गं गतः ।

इति केवलिवचः श्रुत्वा धनसारः संविग्नः प्राह—" प्रभो यद्येवं तत् परिग्रहनियंत्रणं ममास्तु । अथाहं यदर्जयिष्ये तदर्धं धर्मकर्मणि प्रदास्ये । अद्यप्रभृति मया कस्यापि दोषो न ग्राह्यः "। ततो धनसारेणान्योऽपि जिनोदितगृहिधर्मः प्रतिपन्नः । जन्मान्तरापराधितः केवली भृशं क्षामितः । ततः केवली भव्यान् प्रतिबोधयन्नन्यत्र व्यहार्षीत् । सोऽपि श्रेष्ठी परिभ्रमन् ताम्रलिप्त्यां पुर्यां गतः । तत्र व्यन्तरप्रासादे प्रतिमया तस्थिवान् । व्यन्तरः कुपितस्तस्यातिभीषणैरुपसर्गैरुपसर्गं व्यधात् । सूर्योदयवेलां यावत्तस्योपसर्गं चकार । सोऽपि मेरुवद्धीरो निष्प्रकंपो मनागपि न चलितः । तं तथाविधं दृष्ट्वा हृष्टः सुरोऽवदत्—"धन्योऽसि महाभाग । तव पितरौ धन्यौ ।

यस्य गृहिणोऽपि तवेदृशी मतिः । तव माहसेन तुष्टोऽस्मि । किञ्चिद्याचस्व " । इति श्रुत्वा स ध्यानस्थो यावन्नोत्तरं ददौ तावत् तुष्टः सुरोऽपि जगौ—" भो भद्र यद्यपि त्वं निरीहोऽसि तथापि त्वं मम वचसा मथुरायां तत्र वासगृहे गच्छ । अग्रतस्त्वं महर्द्धिको भावी " । इत्युक्त्वा तं क्षमयित्वा सुरोऽदृष्टो जातः । ततः श्रेष्ठी कायोत्सर्गं पारयित्वा मनसि चिन्तितवान्—'मम धनेन किं ? परं तु पुरातनं स्वस्य कार्पण्यमलं क्षालयामि ' । इति विचिन्त्य मथुरायां स्वकीये गृहे गतः । एकदा निखातद्रव्यस्थानानि विलोकयति तावत्तत्र निधानेषु तत्सर्वं द्रव्यमीक्षितं । देशान्तरगतमपि द्रव्यं दिने दिने आयाति यत्तु भक्षितं जनैस्तदप्यासादितं । एवं च तस्य पुनरपि षट्षष्टिकोट्यो मिलिताः । सद्यः शुभभावकृतानि पुण्यानि फलन्ति । तत्र श्रेष्ठिना धनसारेणोत्तुंगशिखरो जिनप्रासादः कारितः । तत्र कलशपताका विभ्राजन्ते । तथा जीर्णोद्धाराः समुद्धृताः । साधर्मिकवात्सल्यानि कृतानि । स्वजनाः सन्मानिताः । साधूनां वस्त्रान्नदानानि दत्तानि । सप्तक्षेत्रेषु निजं द्रव्यं व्ययितम् । इति वित्तव्ययात् कीर्तिधर्मौ समुपार्ज्य पर्यन्तेऽनशनं व्यधात् । आयुःक्षये विपद्य सौधर्मारुणप्रभे विमाने चतुःपल्योपमायुष्कः सुरो बभूव । अतः कारणादतिलौल्यताध्यानाज्जन्तुर्दुःखमनर्थपरंपरां चाप्नोति । मनसि संकल्पोऽपि न चिन्तनीयः । यथा—कोऽपि कार्पटिकः भिक्षया प्राप्तं सक्तुभृतं घटं निजपादान्ते विमुच्य शून्यदेवकुलेऽस्वपीत् । तत्र निशायां जाग्रदिदं दध्यौ—" इमान् सक्तुकान् विक्रीय तन्मूल्येनाजां गृहीष्ये । तया सापत्यया धेनुं । तया सापत्यया महिषीं । महिष्या सापत्यया वरवाजिनीं । तस्याः किशोरैर्दिव्यैर्बहुद्रव्यं भविष्यति । तेन द्रव्येणोच्चं सुन्दरं मनोहरं गवाक्षजालिकायुक्तं सौधं कारयिष्यामि । तत्रावासे वासं विधास्ये । तत्रोपस्करं मेलयित्वा परिवारं स्वजनं निमंत्र्योत्तमविप्रस्य सुतां परिणेष्यामि । तस्याः सर्वलक्षणसंपूर्णः सुतो भविता । तस्य बालस्य बहुद्रव्यव्ययैर्वर्धापनोत्सवे कृते मम मनोरथशतैः सार्धं वृद्धिं

यास्यति। अन्यदाऽहं बहिरायातो गृहांगणे सुतं रुदन्तं दृष्ट्वा कुपितः सन् भार्यां चरणेनाहं हनिष्ये"। इति विचिन्त्य पादप्रहारो मुक्तः। तेन घटो भग्नः। सक्तवो गताः। कार्पटिकः शुशोच। इति ज्ञात्वा विवेकिभिः संकल्पविकल्पावपि न चिन्तनीयावेवेति। ·

एवमुक्तानि पञ्चाणुव्रतानि। स्थूलत्वेन पालितैरेभिर्गृही शनैः शनैः शिवं याति। एतानि व्रतानि सूक्ष्मविभेदेन पालितानि पञ्च महाव्रतानि भवन्ति। अमीभिर्महाव्रतैः शीघ्रमासन्नमार्गतुल्यैः साधुः स्वर्गापवर्गं प्राप्नोति। अतो बुधैर्यथाशक्ति यतितव्यं"। इत्येवं मुनेर्वाचा बहवो जना नियमाभिग्रहं देशविरतिं च प्रपेदिरे। राजा किरणवेगस्तु क्रोधलोभमोहमदरहितः संवेगं प्राप्तो गुरुं प्रणम्यैवमुवाच—'भगवन्नहं संसारभयोद्विग्नः प्रव्रज्यां गृहीष्ये। तस्मादत्र मासकल्पो विधेयः'। इत्युक्त्वा स गृहं गत्वा मंत्रिणमाख्याय नन्दनस्य राज्यभारं समारोप्य महस्रवाहिन्यां शिबिकायामुपविश्य स्वयं सुगुरोः पार्श्वे परिव्रज्यामुपाददे। कर्मशल्यं समुद्धर्तुं सुचिरं चारित्रं पालयामास। ज्ञानेन विदितोत्सर्गापवादविधिः श्रुतस्कन्धाधिरूढः क्रमाद् गीतार्थो जज्ञे। गुरोरनुज्ञया एकाकी विहारं प्रतिपद्याकाशगमनेनान्यदा पुष्करद्वीपे समागमत्। तत्र शाश्वतार्हतो नत्वा हेमाद्रिसन्निधौ तीव्रं तपस्तपन् परीषहान् सहमानस्तत्र कालमगमयत्। सोऽपि कुर्कुटोऽहिजीवो नरकादुद्वृत्य हेमाद्रिगह्वरे कालदारुणः सर्पो जातः। स बहून् जन्तून् कवलयन् आहारार्थमहर्निशं बभ्राम। एकदा स पर्यटन् नागो ध्यानैकाग्रमानसं तं किरणवेगं ऋषिं ददर्श। स सद्यः प्राग्जन्मवैरेण संजातकोपारुणेक्षणस्तं मुनिमवेष्टयत्। विषभीष्माभिर्दंष्ट्राभिर्मुनिं ददंश। ततः स्वस्थानमगमत्। तदा स मुनिर्दध्यौ—'अयं ममोपकारी कर्मक्षयाय' इति चिन्तयन् वाढं विषव्याप्तदेहालोचनां कृत्वाऽखिलान् जन्तून् क्षामयित्वाऽसावनशनं विधाय नमस्कारं ध्यायन् विपद्य द्वादशे कल्पे जंबूद्रुमावर्ते विमाने द्वाविंशत्यर्णवस्थित्या प्रवरः सुरः समुत्पेदे। तत्र दिव्यसुखं भुञ्जन् कालमत्यवाहयत्। यतः—

देवाण देवलोए जं सुखं तं नरो सि भणिओ वि । न भणइ वाससएण वि जस्स वि जीहासयं हुज्जा ॥

अथ सोऽही रौद्रध्यानात् बहून् जीवान् भक्षयन् हेमाद्रिपर्वते दववह्निना दग्धस्तमःप्रभायां षष्ठ्यां नरकपृथिव्यां द्वाविंशत्यर्णवस्थित्या नारकः समुत्पन्नः । तत्र स नारको मुद्गलैः खंडयते, वज्रमुद्गरैः कुट्यते, कुंडकुंभीषु पच्यते, निशितासिभिश्छिद्यते, करपत्रैर्विदार्यते, कोलशुकरैर्भक्ष्यते, महायंत्रेषु पीड्यते, गलितं त्रपुः पाय्यते, अयोरथेषु योज्यते, शिलातले आस्फाल्यते, वह्निकुंडेषु क्षिप्यते, वज्रशूलिषु स्थाप्यते । तथा क्षेत्रस्वभावजं दुःखमन्योन्याभ्यां कृतं च महादुःखमनुभवंस्तस्थौ । क्षणमपि तस्य सुखं नाभूत् ।

आनंदवीरो भवतापहारी श्रीसंघवीरः सुरराजपूज्यः ।
कल्याणकारी कृतसंघहर्षः श्रीपार्श्वनाथः कुरुताच्छिवं वः ॥ १ ॥

इति श्रीतपागच्छे श्रीजगच्चन्द्रसूरिपट्टपरंपरालंकारश्रीपूज्यश्रीहेमविमलसूरिसंतानीयश्रीहेमसोमसूरिविजयराज्ये पंडितश्रीसंघवीरगणिशिष्यपंडितश्रीउदयवीरगणिविरचिते श्रीपार्श्वनाथगद्यबन्धलघुचरित्रे चतुर्थपञ्चमभववर्णनो नाम द्वितीयसर्गः ॥

---

# अथ तृतीयः सर्गः ।

प्रणम्य पार्श्वाधिपतिं जिनेन्द्रं दशावतारं भुवनैकभानुम् ।
कथाप्रबन्धैः सुरसैर्मुदाऽहं वदामि सर्गं सकलं तृतीयम् ॥ १ ॥

इतश्चास्मिन् जंबूद्वीपे प्रत्यग्विदेहविभूषणे सुगन्धिविजये शुभंकरानाम्नी पुरी कल्पद्रुमसमैर्दातृनरैर्युक्ताऽप्सरस्तुल्यनारीभिर्मनोरमा देवमन्दिरैः शोभिता स्वर्गपुरीव राजते । तत्राद्भुतभाग्यभूः सकलगुणसागरो वज्रवीर्यनामा नृपोऽभवत् । यः स्वकीर्त्या विश्वं धवलयन् जनान् रञ्जयामास । यं सर्वेऽपि राजानो नमस्कुर्वन्ति । येन सर्वेऽप्यरयो वशीकृताः । यस्मै प्रजा सकलापि सेवते । यस्मात् कल्याणपरंपरा वृद्धिं प्राप्नोति । यस्य गुणा देशे देशे जनैर्गीयन्ते । यस्मिन् राज्यं शासति ईतयो न पराभवन्ति । स वज्रवीर्यो नृपतिरेकच्छत्रं प्राज्यं साम्राज्यं पालयामास । तस्यापरा लक्ष्मीरिव लक्ष्मीवतीनाम्नी पट्टराज्ञी लज्जाविनयसाधुत्वशीलप्रमुखैर्विविधैर्गुणैः सदा शुशुभे ।

इतः किरणवेगस्य जीवो देवभवाच्च्युत्वा तस्या लक्ष्मीवतीदेव्याः कुक्षिसरस्तीरे मरालवदवातरत् । सा चोत्तमस्वप्नसूचितं शुभसमये धरणीभूषणं विश्वजननयनानन्ददायकं सुतमसूत । पित्रा महोत्सवः कृतः । ततो वर्धापनमहोत्सवे कृते स्वजनान् भोजयित्वा स्वजनसमक्षं वज्रनाभ इति स्पष्टं नाम निर्ममे । पित्रोरानन्देन समं पुण्यपुद्गलैर्वर्धिष्णुः स वज्रनाभः कौमार्ये सकलाः कला ग्राहितः ।

स शशीव कलाकलापसंपन्नः कुवलये हर्षं व्यधात् । क्रमात्स वज्रनाभ उज्ज्वलं यौवनं प्राप । तस्य महद्भुजाबलं प्रससार । स संगीतशास्त्रविनोदेन काव्यकथास्वजनगोष्ठीरसेन च क्रीडन् कालं निनाय । अन्यदा वंगदेशपतिश्चन्द्रकान्तो निजांगजां वज्रनाभाय प्रदातुं तन्मुखसमढौकयत् । कुमारोऽपि तां विजयाभिधां कन्यामुदुवाह । स तया सह पञ्चविधविषयसुखानि बुभुजे ।

अन्यदा कुमारस्य मातुलनन्दनः कुबेराख्यः स्वपितृभ्यां रुष्टो वज्रनाभस्यान्तिके आगत्य स्थितः । स च नास्तिकवादी कुमारं धर्मे सादरं वीक्ष्यावादीत्—" अहो मुग्ध किमेषा कष्टकल्पना ? केन त्वं विप्रतारितोऽसि, यद्धर्मात्सद्गतिर्भवेत् । अतः कारणात्मनोवचःकायानामीप्सितं पूरय " । राजकुमारस्तदुक्तं निशम्य तूष्णीं दध्यौ—"कुग्रहग्रथिलैः सह संवादो मतिभ्रंशाय भवति । अत एनं कुतोऽपि ज्ञानितो बोधयिष्यामि " । इति विचिन्त्य स्थितः । एकदा लोकचन्द्रसूरिर्भूरिमुनिपरिवारपरिवृतो बहिरशोकवने समवसृतः । तस्यागमनं श्रुत्वा बहवः पौरा अभिवन्दितुं जग्मुः । कुमारोऽपि कुबेरसहितो मुनीश्वरं सूरिवरं वन्दितुमगच्छत् । कुमारो विधिना शुद्धभावेन मुनीश्वरं ववन्दे । कुमारस्योपरोधेन कुबेरोऽपि तं ननाम । तत्र कुमारप्रमुखेषु जनेषु यथास्थानमुपविष्टेषु धर्मोद्यानसुधोपमां धर्मदेशनां प्रारेभे । तथाहि—

**इह प्रकृत्या स्वच्छोऽपि जीवः कर्ममलावृतः । लभते विविधं दुःखं भ्राम्यन् गतिचतुष्टये ॥ १ ॥**

अस्य व्याख्या—स्वच्छोऽपि जीवः कर्ममलावृतो गतिचतुष्टये भ्राम्यन् विविधानि दुःखानि लभते । तच्च कर्माष्टधा—ज्ञानावरणीयं दर्शनावरणीयं वेदनीयं मोहनीयं नामकर्म गोत्रकर्म आयुःकर्म अन्तरायकर्म चेति । तत्र ज्ञानं पञ्चधा—मतिज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं चेति । तेषां ज्ञानानामावरणं विधीयते येन तज्ज्ञानावरणं कर्म । दर्शनावरणं कर्म नवधा—

चक्षुर्दर्शनावरणं अचक्षुर्दर्शनावरणं अवधिदर्शनावरणं केवलदर्शनावरणं निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला स्त्यानर्द्धिः एवं नवधा दर्शनावरणीयं कर्म। वेदनीयकर्म द्विधा—सुखवेदनीयं दुःखवेदनीयं च। मोहनीयकर्माष्टाविंशतिभेदं। तद्यथा—षोडश कषायाः क्रोधमानमायालोभाख्याः। संज्वलनक्रोधः प्रत्याख्यानक्रोधः अप्रत्याख्यानक्रोधः अनन्तानुबन्धी क्रोधश्च। एवं मानस्य मायाया लोभस्य च चत्वारश्चत्वारो भेदा भवन्ति। उक्तं च—

पक्षं संज्वलनः प्रत्याख्यानो मासचतुष्टयम्। अप्रत्याख्यानको वर्षं जन्मानन्तानुबन्धकः ॥ १ ॥

एवं सर्वेऽपि मिलिताः षोडश कषायाः। हास्यादिषट्कं—हास्यमोहनीयं रतिमोहनीयं अरतिमोहनीयं शोकमोहनीयं भयमोहनीयं जुगुप्सामोहनीयं च। पुरुषवेदः स्त्रीवेदः नपुंसकवेदश्चेति वेदत्रिकं। सम्यक्त्वमोहनीयं मिश्रमोहनीय मिथ्यात्वमोहनीयं चेति मोहनीयत्रयं। एवं मोहनीयकर्मणोऽष्टाविंशतिर्भेदाः। नामकर्म द्विविधं—शुभमशुभं चेति। गोत्रकर्म द्विविधं—उच्चैर्गोत्रं नीचैर्गोत्रं च। आयुःकर्म चतुर्विधं—देवायुर्मनुष्यायुस्तिर्यगायुर्नरकायुश्चेति। अन्तरायकर्म पञ्चविधं—दानान्तरायं लाभान्तरायं वीर्यान्तरायं भोगान्तरायं उपभोगान्तरायं च। ज्ञानस्यान्तरायाज्ज्ञानावरणीयं कर्म बध्नाति। धर्मान्तरायकरणाद्दर्शनावरणीयं कर्म बध्नाति। यदुक्तं—

सर्वज्ञगुरुसंघादौ प्रत्यनीकतया भृशम्। दर्शनावरणीयं स्यादनन्तभवकारकम् ॥ १ ॥

अनुकंपागुरुभक्तिक्षमादिभिः सुखवेदनीयं कर्म बध्नाति। तद्विपरीतकरणाद् दुःखवेदनीयं कर्म बध्नाति यतः—

जया मोहोदयो तिव्वो अन्नाणं खु महब्भयं। केवलं वेयणीयं तु तया एगिंदियत्तणं ॥ १ ॥

रागद्वेषमहामोहयुतस्तीव्रकषायवान् देशविरतिसर्वविरतिप्रतिबन्धकं मोहनीयं कर्म बध्नाति । मनोवचनकायेषु वक्रोऽभिमानवान् अशुभनामकर्म बध्नाति । तद्विपरीतो गुणवान् शुभनामकर्म बध्नाति । गुणवान् परगुणग्राही मदाष्टकरहित आगमश्रुतिप्रियो जिनभक्तिपरायण उच्चैर्गोत्रं कर्म बध्नाति । तद्विपरीतो नीचैर्गोत्रं बध्नाति । अथायुःकर्मबन्धं कथयति—अज्ञानतपसाऽज्ञानकष्टेनाणुव्रतसु-(महा)व्रतैर्देवायुर्बध्नाति । उक्तं च—

अकामनिर्जराबालतपोऽणुव्रतसुव्रतैः । जीवो बध्नाति देवायुः सम्यग्दृष्टिश्च यो भवेत् ॥ १ ॥

यो दानशीलोऽल्पकषायी ऋजुप्रकृतिकः स मनुष्यायुर्बध्नाति । यतः—

प्रकृत्याऽल्पकषायः स्याच्छीलसंयमवर्जितः । दानशीलो मनुष्यायुर्गुणैर्बध्नाति मध्यमैः ॥ २ ॥

बहुमायी शठवृत्तिर्मार्गमुल्लंघ्योन्मार्गप्रवर्तकः सशल्यो बहिर्वृत्त्या क्षामयति स तिर्यगायुर्बध्नाति । यतः—

उन्मार्गदेशको मार्गनाशको बहुमायिकः शठवृत्तिः सशल्यश्च तिर्यगायुर्निबन्धकः ॥ ३ ॥

महारम्भवान् बहुपरिग्रहकारी कुणिमाहारी पञ्चेन्द्रियवधकारी आर्तरौद्रध्यानध्यायी जीवो नरकायुर्बध्नाति । उक्तं च—

मिथ्यादृष्टिः कुशीलश्च महारंभपरिग्रहः । पापः क्रूरपरिणामो नरकायुर्निबन्धकः ॥ ४ ॥

यः सामायिकपौषधप्रतिक्रमणव्याख्यानजिनपूजादिविघ्नकर्ता सोऽन्तरायकर्म बध्नाति । यतः—

हिंसादिषु रतो दानजिनपूजादिविघ्नकृत् । अर्जयत्यन्तरायाख्यं कर्माभीष्टार्थबाधकम् ॥ १ ॥

ज्ञानावरणीयकर्म दर्शनावरणीयकर्म वेदनीयकर्म अन्तरायकर्म एतेषां चतुर्णां कर्मणां त्रिंशत् त्रिंशत् कोटीकोटयः सागरोपमाणामुत्कृष्टा स्थितिः। मोहनीयकर्मणः सप्ततिः कोटीकोट्यः सागराणामुत्कृष्टा स्थितिः। नामकर्मगोत्रकर्मणोः प्रत्येकं विंशतिः कोटीकोट्य उत्कृष्टा स्थितिः। आयुःकर्मणः त्रयस्त्रिंशत्सागराणां स्थितिः। वेदनीयस्य कर्मणो जघन्या स्थितिर्द्वादशमुहूर्ता। नामकर्मगोत्रकर्मणोर्जघन्या स्थितिरष्टान्तर्मुहूर्ता। शेषकर्मणां स्थितिर्जघन्यैकांतर्मुहूर्ता। तेषां कर्मणां ग्रन्थिं यदा भिनत्ति तदा जीवः सम्यक्त्वं लभते। सम्यक्त्वप्राप्त्या जिनधर्मे लब्धास्वादो मनः शनैः शनैः कुरुते। तदा गृहस्थधर्मं यतिधर्मं च कुर्वन् धौतकर्ममलो भवेत्। ततः परमं पदं लभते। अतः कारणाद् भविकैः धर्मे मतिः कार्या।

मुनेस्तद्गुरुवचः श्रुत्वा दर्पात्स्फुरदोष्ठपुटो जगौ,—"आचार्य इयतीं वेलां कंठशोषः कृतः स वृथैव। सर्वमेतदसंबद्धं त्वयोदितं। यद्धर्मकर्मादिगुणौघाः स्थाप्यन्ते, तन्मिथ्या खकुसुमवत्। स एवात्मा नास्ति। निराधारा गुणा हताः। यद्यत्प्रत्यक्षं दृश्यते पटघटवत्, तदेव सत्यं। जीवस्त्विन्द्रियग्राह्यो नैव, तस्मान्नास्ति जीवः। जीवाभावे धर्मोऽपि नास्ति। यथा मृत्पिंडेन घटः संजायतीति तथा पृथिव्यप्तेजोवाय्वाकाशपञ्चभूतपदार्थैर्देहपिंडो जातः। कियत्यपि गते काले त एव पञ्चभूतपदार्थाः स्वस्वपदार्थेष्वन्तर्भवन्ति। तस्मान्नास्त्येव जीवः। किं च कष्टरूपात्तपसः सुखं कथं भवेत्? कष्टेन हि कष्टफलमेव स्यात्। तथा च जीवाभावे धर्मस्याप्यभावः। निमित्ताभावे नैमित्तिकस्याप्यभावः"। ततो मुनिः शान्तात्मा जगाद—"देवानां प्रिय शृणु, युक्तिवचनविरुद्धं मा वद। मम माता वन्ध्या तद्वच्चयोच्यते जीवाभावः तत्सर्वमघटं। ज्ञानं प्रमाणं, न चेन्द्रियगोचरः। चर्मचक्षुषामात्मा नेन्द्रियगोचरः। परमज्ञानचक्षुषां ज्ञानगोचरः। पृथिव्यादिपञ्चपदार्था अचेतनरूपाः। चेतनालक्षणो जीवः। यतः—

एगविहदुविहतिविहा चउविहा पंचछव्विहा जीवा। चेयणतसइयरेहिं वेयगईकरणकाएहिं ॥ १ ॥

बालवयसि यत्कृतं भुक्तं च तद्वृद्धवयसि जीवाभावे कथं स्मर्यते जीवस्यैव स्मर्यते, न त्वचेतनानां पृथिव्यादिपदार्थानां किञ्चित् स्मर्यते। यत्र जीवस्तत्र धर्माधर्मौ। यथोक्तधर्माधर्मयोर्भोक्ता जीवश्चैतन्यलक्षणोऽवमन्तव्यः। यथा भूमिगतं बीजमंकुरादनुमीयते तथा पूर्वभवशुभाशुभं सुखदुःखादनुमीयते। तथाहि—एके विचित्रमणिकुट्टिमतले सचित्रशालिकारम्ये सदुगन्धवासिते दिव्योल्लोचयुक्ते सौधे सुखिनो वसन्ति। एके पुनर्मूषकसर्पनकुलधूलिनिकरसमाकीर्णे दुःस्थिता गृहक्लेशयुक्ता दृश्यन्ते। एके मिष्टान्नपक्वान्नद्राक्षापानादिभोजनाः कर्पूरमिश्रतांबूलमुखाः सुखं भुञ्जन्ति। अन्ये परमुखं वीक्षमाणाः परसेवां कुर्वन्तो बुभुक्षाक्षामकुक्षयः कदन्नमपि क्वापि भुञ्जते। एकेऽप्युदारशृंगाराः सारमाल्यविलेपना दिव्ययानपरिवारा गत्यनकृतगीतगानाः स्मरमूर्तयः क्रीडन्ति। अन्ये तु दीनवदना धनस्वजनवर्जिता दुर्दशा दुर्गन्धवदनदेहा नारका इव दुःखिनो दृश्यन्ते। एके तु तूलिकासु सुगीतैः वीणानादमनोहरैर्लब्धनिद्रासुखाः प्रातर्भद्दजयजयारवैर्जाग्रति। अन्ये तु जंबूकोलूकखरध्वनिं शृणवन्त ऊपरावनौ स्वपित्वा मत्कुणचञ्चुपुटैर्भक्ष्यमाणा गतनिद्राः स्युः। एतत्प्रत्यक्षं धर्माधर्मफलं वीक्ष्यानन्तशर्मकृते कष्टसाध्योऽपि धर्मः कार्यः। यच्च त्वया कथितं कष्टकरणान्न सौख्यं तदपि मृषा, कटुकौषधयोगात् किमारोग्यं न जायते? धर्मोद्यतस्य जीवस्य स्वर्गादप्यधिकं सुखं भवेत्। तथा च येन धर्मेण चारुकुलरूपबलज्ञानधनयशांसि प्राप्यन्ते। अन्यच्च—

सूर्याचन्द्रमसावेतौ विश्वोपकृतिहेतवे। उदयेते जगत्यस्मिन्नूनं धर्मस्य शासनात् ॥ १ ॥

अबन्धूनामसौ बन्धुरसखीनामसौ सखा । अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥ २ ॥

अतो हेतोर्धर्मकुटुंबस्य सेवा विधेया । यतः—

धर्मस्य दया जननी जनकः किल कुशलकर्मविनियोगः । श्रद्धा च वल्लभेयं सुखानि निखिलान्यपत्यानि ॥३॥

संघश्चतुर्विधो बिंबं सुचैत्यं चागमोऽर्हताम् । सप्ताप्येतानि धर्मस्य क्षेत्रकाणि विदुर्बुधाः ॥ ४ ॥

गुरूणां विनीतैर्भाव्यं कर्तव्या साधुसंगतिः । विवेके तु मनो धार्यं न त्याज्यं सत्त्वमुत्तमम् ॥ ५ ॥

विनयचश्च विवेकश्च सुसंगश्च सुसत्त्वता । लौकिका अप्यमी श्लाध्या गुणा लोकोत्तराः स्फुटम् ॥६॥

अहो कुबेर त्वं नृपपुत्रोऽश्वारोहणं कुरुषे । सेवकास्तव सेवां कुर्वन्ति । तत्र को हेतुः ? धर्म एव हेतुः । अतः कारणाजीवादयः पदार्थाः सन्ति" । तदा तद्गुरुवाक्यश्रवणात् स कुबेरः संबुद्धः समुत्थाय कृतोत्तरासंगः प्रदक्षिणात्रयं दत्वा गुरुचरणांबुजं नमस्कृत्य प्राञ्जलिरिदमुवाच—' भगवन् भवद्भिर्यत् कथितं तत्प्रमाणं । अथ धर्मतत्त्वं मम कथयन्तु ' । ततो गुरव ऊचुः—"कुबेर त्वं धन्यः । धर्मतत्त्वं शृणु । उक्तं च—

यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।

तथैव धर्मो विदुषा परीक्ष्यते श्रुतेन शीलेन तपोदयागुणैः ॥ १ ॥

चत्वारः पदार्था धर्मार्थकाममोक्षाख्याः सन्ति । तेषु मुख्यः पदार्थो धर्म एव । धर्मे स्वायत्ते त्रयोऽप्यन्ये पदार्थाः स्वायत्ता भवन्ति यतः—

मानुष्यकं जन्म भवेऽत्र सारस्तत्र त्रिवर्गः खलु तत्र धर्मः ।
तत्रापि दानं पुनरत्र विद्यादानं निदानं परमार्थसिध्द्यै ॥ १ ॥

तत्र मानुष्यकं भवं दुष्प्रापं प्राप्य धर्मे यतितव्यं । मुधा न हारयितव्यो मनुष्यभवः । यतः—

जहा य तिन्नि वणिया मूलं घित्तूण निग्गया । एगत्थ लहए लाहो एगो मूलेण आगउ ॥ १ ॥
एगो मूलं पि हारित्ता आगउ तत्थ वाणिउ । ववहारे उवमा एसा एवं धम्मे वियाणहा ॥ २ ॥

तथाहि—जंबूद्वीपाभिधे द्वीपे ऐरवतक्षेत्रेऽयोध्यायां नगर्यां धन्यो नाम व्यवहारी वसति । तस्य धनवतीनाम्नी गुणवती स्नेहवती प्रियाऽस्ति । तयोर्धनदेवधनमित्रधनपालनामानस्त्रयः पुत्राः सन्ति । ते तु यौवनं प्राप्ता बहुबुद्धिभांडागाराः सन्ति । अन्येद्युः श्रेष्ठिना विमृष्टं—'मम त्रयः पुत्राः सन्ति, कस्य गृहभारं ददामि ?' इति विमृश्य त्रयाणां पुत्राणामेवमुक्तं—"भोः पुत्राः श्रूयतां । यूयं प्रत्येकं रत्नत्रयं गृहीत्वा देशान्तरे यात । स्वस्वबुध्द्या व्यापारं कुरुत" । तदा तैरामिति प्रोक्तं । ततः श्रेष्ठिना तेषां पुत्राणां प्रत्येकं सपादकोटिमूल्यानि त्रीणि त्रीणि रत्नानि दत्तानि । तैः गृहीतानि गोपितानि च । श्रेष्ठिना पुनरप्युक्तं—'यदाहमाकारयामि तदा भवद्भिरागन्तव्यमिति' । ततस्तेषां त्रयाणां मध्ये ज्येष्ठो धनदेवोऽप्रमादी तत्कालं प्रमाणमिति कथयित्वा विजयमुहूर्ते निर्गतः ।

कथितं च तेन ज्येष्ठेन—'अहं पुराद्बहिः पथि स्थितोऽस्मि । युवाभ्यां तत्रागन्तव्यं' । इति कथयन् पितुः पादौ प्रणम्य पुराद्बहिर्गत्वा स्थितः । द्वितीयो धनमित्रो बन्धुः क्षणमेकं प्रतीक्ष्य शीघ्रं चलितः, पथि धनदेवस्य च मिलितः । तृतीयस्तु भोजनं कृत्वा क्षणमेकं विमृश्य गृहाच्चलितः । मार्गे त्रयोऽपि मिलिताः । देशान्तरमार्गसंमुखं चलिताः । ते त्रयोऽपि क्षेमेण सिंहलद्वीपाभिधे द्वीपे कुसुमपुरपरिसरवने प्राप्ताः । तैर्विमृष्टं—"अत्रैव नगरे व्यापारः विधीयते । अग्रे गमनेन किं ? यतः—

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लंघयितु न शक्तः ।

तस्मान्न शोको न च विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ॥ १ ॥

अतः कारणदत्रैव नगरे व्यवह्रियते । प्रथममत्र वने भुज्यते" । इति निश्चित्य ते तत्र भोजनं चक्रुः । ततो धनदेवो भोजनं कृत्वा शीघ्रमेव पुरमध्ये प्रविष्टः । तत्र चतुष्पथे बहवो व्यवहारिणः किञ्चित्तत्कालप्रवहणागतं वस्तु गृह्णन्ति स्म । तदा तत्र धनदेवः समेतः । सर्वजनान् शीघ्रं ननाम । यथोचितं विनयं चकार । तं तथाविधं सल्लक्षणोपेतं सद्वस्त्रयुक्तं दृष्ट्वा इभ्या मुदिताश्चिन्तयन्ति—कोऽप्ययमपूर्वो देशान्तरव्यापारी सभाग्यः सज्जनो दृश्यते'। इति विमृश्य तैः प्रोक्तं—'अस्माभिरिदं वस्तु गृह्यते । पंक्त्यागतं यूयमपि गृह्णीत' । तदा धनदेवोऽप्युवाच—'यादृशो विभागः श्रीमतां तादृशो ममापि विभागः' । ततः कस्यापि हट्टं भाटकेन गृहीत्वा तत् क्रयाणकं गृहीत्वा तत्र स्थापितं । स्तोकैरेव वासरैस्तद्वस्तुक्रयाणकं महार्घ्यं जातं । देशान्तरागतव्यापारिणां क्रयाणकं दत्त्वा क्रयाणकं विक्रीतं । तत्र बहुक्रयाणकस्य लाभो जातः । तेन लाभद्रव्येणान्यान्यपि वस्तूनि व्यवहरति । स्वरत्नानि त्रिकालं

पूजयति । अन्यान्यपि क्रयाणकवस्तूनि गृह्णाति विक्रीणाति च । ततो महाधनवान् व्यवहारी जातः । तस्य सर्वत्र राजद्वारे जनेषु च प्रसिद्धिर्जाता । कीर्तिर्विस्तृता ।

अथ धनमित्रो द्वितीयो बान्धवो भोजनानन्तरं मुहूर्तान्तरेण तत्र पुरमध्ये प्रविष्टः । क्रमेण पुरे व्रजन् रत्नपरीक्षकापणे गतः । तावत्तेन रत्नपरीक्षकेण नरेण तमदृष्टपूर्वसद्भाग्यवन्तमागच्छन्तं वीक्ष्याभ्युत्थानपूर्वकं मानं दत्वा पृष्टं–'सज्जनशेखरोत्तंसनर ! कुतः समागतः ? क्व निवासः ? किमर्थमत्रागमनं ?' तेनोक्तं—'अहं व्यापारी देशान्तरादागतः' । ततो रत्नपरीक्षकोऽब्रवीत्—' अद्य मम मन्दिरे समागच्छ ' इत्युक्त्वा बहुमानं दत्वा निजगृहे नीतः । स्नानमज्जनभोजनभक्त्यादिकं कृत्वा विलेपनतिलकतांबूलादिकं दत्वा पृष्टं—'भोः सत्पुरुष कं व्यापारं करोषि ? ' । ततो धनमित्रेणोक्तं—'येन लाभो भविष्यति तं व्यापारं करिष्ये ' । पुनः परीक्षकेणोक्तं—'त्वत्पार्श्वे कियत्प्रमाणं द्रव्यमस्ति ? ' तेनोक्तं—"मत्पार्श्वे सपादकोटिमूल्यानि त्रीणि रत्नानि सन्ति, देशोनाश्चतस्रः कोटयः सन्ति । तेन द्रव्येण व्यापारं करिष्ये " । पुनरपि रत्नपरीक्षकेणोक्तं—'वरं, परं मदीयां बुद्धिं कुरु' । धनमित्रेणोदितं—'कथ्यतां' । सोऽवक्—" त्वं त्वदीयानि रत्नानि मम कीचकेन देहि । तव कीचकं यथोक्तं दास्यामि । तव लाभो भविष्यति । यदा तव कार्यं भावि तदा तान्येव रत्नानि ग्राह्याणि" । तेन आमिति कथयित्वा त्रीण्यपि रत्नानि तस्य दत्तानि । प्रतिदिनं तस्य यथोक्तं कीचकं ददाति । स तु प्रतिदिनं गृह्णन् सुखी जातः । स्वेच्छया पुरमध्ये याति क्रीडति भुंक्ते च । यतः—

भग्नाशस्य करंडपीडिततनोर्ग्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।

तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थस्तिष्ठतु दैवमेव शरणं वृद्धौ क्षये कारणम् ॥ १॥
यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकं ।
तद्धीरो भव चित्तवृत्तिकृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ २॥

स धनमित्रस्तत्र सुखेन स्थितो यथेच्छं सुखं भुनक्ति ।

अथ धनपालस्तृतीयो बन्धुभोजनानन्तरं प्रमादात्प्रसुप्तः । निद्रां कृत्वा संध्यासमये पुरमध्ये प्रविष्टः । तत्र पुरप्रतोल्यां पण्यांगना बहवो दृष्टाः । तत्रैका पण्यांगना मधुरनटविटपुरुषसहिता दृष्टा । एकस्तु तस्याः करं गृह्णाति एकस्तां तांबूलबीटकं ददाति । एकस्तु हास्यं करोति कारयति च । तदैकेन विटनरेणोक्तं—'भो वैदेशिक पुरुष किं विलोकयसि ? इदमेव मनुष्यभवफलं गृहाण' । सोऽपि धनपालस्तया गृहे गतः । तत्र विविधं नाट्यं पश्यति । गीतगानं शृणोति । धनपालो रजन्यां तत्रैव स्थितः । तया हावभावादिकैरावर्जितस्तया सह भोगान् भुनक्ति । सा स्नेहवचसा तं पृच्छति—'स्वामिन् केन कार्येणात्र यूयं समागताः ?' स विस्मितो वदति—'व्यापारार्थं' । पुनस्तयोक्तं—'स्वामिन् त्वत्पार्श्वे द्रव्यं कियत्प्रमाणमस्ति ? ' । तेनोक्तं—प्रत्येकं सपादकोटिमूल्यानि त्रीणि रत्ना-

नि सन्ति '। तयोक्तं—'मम दर्शयतु '। तेन दर्शितानि। सा सहर्षा जाता। सा तानि रत्नानि गृहीत्वा मुखं चुंबति हृदये समालिंगति। ततः साऽवक्—" स्वामिन् मद्गृहे स्थापयामि। कार्ये उत्पन्ने गृहीतव्यानि। स्वामिन्निदं गृहं तवैव। अहमपि त्वदीया। इदं परिकरादिकं सर्वं त्वदायत्तं। अत्रैव तिष्ठतु। नवं वयः सफलं करोतु। नाटकं विलोकयतु। गीतगानादिकं शृणोतु। कामभोगान् भुनक्तु। पुनरपीदं मनुष्यजन्म क्व ?। इदमेव मनुष्यजन्मफलं "। इति तस्या वचनैः स मोहं प्राप्तस्तत्रैव स्थितस्तया सह पञ्चविधान् वैषयिककामभोगान् नित्यमेव भुनक्ति। आभरणानि वस्त्रादीनि च तस्याः पूरयति। अल्पेनापि कालेन सर्वमपि रत्नद्रव्यं तेन व्ययितं। ततः स तया गृहान्निष्कासितः। पुरमध्ये चलितः। विटपुरुषः संमुखो मिलितः। तस्याग्रे कथितं—'मुषितोऽहं वेश्यया '। विटनरेणोक्तं—' त्वदीयं कार्यं करोमि चेद्वस्त्राणि त्वदीयानि मम ददासि '। तेन तत्सर्वं प्रतिपन्नं। पुनर्विटेनोक्तं—'पूर्वं वस्त्राणि देहि'। तेनाम्बराणि दत्तानि। विटनरेण समं पुनस्तस्याः पणांगनाया गृहे जगाम। विटेन तस्या उक्तं—'त्वया कथमयं निप्रतारितः ? किं गृहीतं ?'। तयोक्तं—'लेखकं विलोकयतु एतद्दत्तं एतच्च विलसितं एकोऽपि द्रम्मको न वर्धितः ' इत्युक्त्वा पुनरपि गृहान्निर्गमितः। नगरमध्ये व्यग्रचितः शून्यो वस्त्ररहितो दरिद्ररूप एकाकी निराशो जातः सर्वत्र भ्रमति। भोजनसमयो जातः परं किं भक्ष्यते। यतः—

अन्नं नास्त्युदकं नास्ति नास्ति मुद्गयुगंधरी। शाकं न लवणं नापि तन्नास्ति यच्च भुज्यते ॥१॥

किमपि भक्ष्यं नास्ति। इतस्ततो भ्रमति तदा कुत्रापि भारवाहका भुञ्जन्ति। तैस्तथाविधो दृष्टः। पृष्टं च—'त्वं कुत्रत्यः ? कुतः स्थानात्समागतः ?'। धनपालेनोक्तं—' मया प्रमादवशाद्रत्नानि निर्गमितानि' इत्युक्त्वा यथास्थितं सर्वमचीकथत्। तैरुक्तं—

'अद्य किञ्चिद् भुक्तं न वा ?'। तेनोक्तं—'कुतः किं भक्षयामि ?'। तदा तैरनुकंपया भोजितः। द्रमकवत् सोऽपि भारवाहकैः सह भ्रमति। सोऽपि धनपालो भारवाहको जातः दुःखेनोदरपूरणं करोति। यतः—

मानं मुञ्चति सेवतेऽन्त्यजजनं दीनं वचो भाषते कृत्याकृत्यविवेकमाश्रयति नो नोऽपेक्षते सत्कृतिम्।
भंडत्वं विदधाति नर्तनकलाभ्यासः समभ्यस्यते दुष्पूरोदरपूरणव्यतिकरे किं किं न कुर्याज्जनः॥ १॥
खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन् देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥ २॥

स नीरस्थाने तटाके कूपे च भुंक्ते। आपणे स्वपिति। इत्थं स महादुःखी जातः। स मनसि चिन्तयति—"एतत्प्रमादफलं। ममैव ज्येष्ठबन्धुर्धनदेवः क्रयाणकशकटानि भृतानि बहूनि प्रेषयति। धनदेवस्य कीर्तिः सर्वत्र प्रसृता"। एवं तेषां त्रयाणां बन्धूनां तत्र द्वादश वर्षा गताः।

इतश्च पित्रा तेषां त्रयाणामाकारणार्थं लेखः प्रेषितः। स लेखो ज्येष्ठबन्धोः करे प्राप्तः। लेखो वाचितः। प्रमोदो जातः। तेन धनदेवेन चिन्तितं—'अथ तत्र गमनं क्रियते। पितृपादा वन्द्यन्ते। परमुभयोर्भ्रात्रोः शुद्धिः कथं ज्ञास्यते?' इति विचिन्त्य पुरमध्ये सर्वत्र विलोकितम्, परं तयोः शुद्धिर्न जाता। तदा तेन चिन्तितं—'सर्वेषां महाजनानां भोजनं कारयामि, तदा तयोः शुद्धिर्ज्ञास्यते'। इति विमृश्य नानाविधपक्वान्नादिसर्वसामग्री कारिता। ततः प्रथमदिवसे नृपं सकलराजलोकसहितं निमंत्र्य तान्, भक्तिपूर्वकं भोज-

यित्वा वस्त्राभरणादिकं दत्वा स्वालये विसर्जयामास । तेषां मध्ये बान्धवौ न दृष्टौ । द्वितीयदिने इभ्यान् सकलान्निमंत्र्य भोजयित्वा विसर्जयति । तेषां मध्येऽपि स्वकीयौ बान्धवौ न दृष्टौ । तृतीयदिने सर्वान् वस्त्रग्रहान् निमंत्र्य भोजयति । तेषां मध्येऽपि सहोदरौ न पश्यति । चतुर्थदिने रत्नपरीक्षकान्निमंत्र्य भोजयति । तेषां मध्ये धनमित्रसहोदरोऽग्रेसरः सालंकारः प्राप्तः । तस्य स्नेहपूर्वकं सोत्कंठमालिंगनपूर्वकं मिलितः । तमाकार्य लेखः प्रदत्तः । तं लेखं वाचयित्वा स संतुष्टः कथयति—'पितुर्लेखः प्रमाणं । तत्र गम्यते । पितृपादा नमस्क्रियन्ते' । ततः सर्वान् भक्तिपूर्वं भोजयित्वा विसर्जयति । एकान्ते मिलितौ तौ भ्रातरावन्योऽन्यं कुशलोदन्तं पृच्छतः । स्नेहालापं कुरुतः । अन्योऽन्यं धनपालस्योदन्तं पृच्छतः । कोऽपि धनपालस्य शुद्धिं नो वेत्ति । इति वार्तां कृत्वा स्वकीयकार्यपरायणौ संजातौ । पञ्चमे दिने भारवाहकाः सर्वेऽप्यामंत्रिता भोजिताश्च । तेषां मध्ये दुःखितो दरिद्ररूपो धनपालबान्धवः कृशशरीरो दृष्टः । स समालिंगनपूर्वकं पृष्टः—'त्वं कथमीदृशो दृश्यसे ? तव लक्ष्मीः क्व गता ?' । ततस्तेनोक्तं—"मया प्रमादवशाद्वेश्यालये लक्ष्मीर्भुक्ता । मदीयानि रत्नानि वेश्यया गृहीतानि । तेनैव कारणेनाहं दुःखी जातः" । तदा ज्येष्ठबन्धुना धनदेवेनोक्तं—"बान्धव शृणु । शास्त्रेऽपि प्रमादो निवारितोऽस्ति । यतः—

प्रमादः परमद्वेषी प्रमादः परमो रिपुः । प्रमादो मुक्तिपूर्दस्युः प्रमादो नरकायनम् ॥ १ ॥"

ततस्तस्यापि पितृप्रहितलेखं समर्पयति । स लेखं वाचयित्वा निःश्वासं मुक्त्वा वदति स्म—'अहमशंबलः कथमागां ?' । तदा धनदेवेन प्रोक्तं—'त्वरितमागच्छ । शंबलमहं दास्ये' । इत्युक्त्वा स्वकार्ये लग्नः । ततो धनमित्रः परीक्षकगृहे गतः । तत्र स्वमयाणवार्तां कथयित्वा रत्नानि त्रीण्यपि मार्गयति । ततस्तेन परीक्षकेण लेखकं कृत्वा कथितं 'एतद् भुक्तं । एतद् गृहीतं । एतद्दत्तं ।

एतद्वर्धितं। तद् गृह्णातु। एतानि युष्मद्रत्नान्येव'। तत्सर्वं समर्प्य न लेयं न देयं करोति। तत्सर्वं गृहीत्वा निबिडग्रन्थिं बद्ध्वा ज्येष्ठबन्धुपार्श्वे समेतः। तृतीयोऽपि समागतः। त्रयोऽप्युत्सुकाः सामग्रीं कारयित्वा सज्जा बभूवुः। शकटानि क्रयाणकैर्गणिमधरिमादिभिर्वस्तुभिर्भांडैश्च भृतानि। विनयपरो धनदेवः सर्वेषामिभ्यानां जनानां च शिक्षां मार्गयित्वा भृत्यपरिजनशकटादिभिः परिवृतश्चलितः। अविच्छिन्नप्रयाणैः कुशलेन स्वनगरे स्वगृहे बन्धुसहितः समेतः। त्रयोऽप्यंगजाः पितृपादे भक्त्या पेतुः। भोजनान्तरमेकान्ते तान् जनकः पृच्छति —'किं कृतं? किं प्राप्तं? किं समुपार्जितं? तत्कथयन्तु'। ततो वृद्धेन धनदेवेनोक्तं—'तात तानि त्रीण्यपि रत्नानि गृह्णातु। एतं लाभं गृह्णातु। एष व्यापारो मया कृतः'। इत्युक्त्वा पितुस्तानि रत्नानि समर्पितानि, लाभोऽप्यर्पितः। ततो द्वितीयोऽवक्—'तात तान्येतानि रत्नानि गृह्णातु। व्याजेन द्रव्यं समागतं तन्मया भुक्तं, एतत्परिमाणं च वर्धितं'। इत्युदित्वा पितू रत्नान्यपि समर्प्योक्तं—'पुनरपि व्यापारोऽत्रैव कार्यः'। ततस्तृतीयेनोक्तं—'तात तान्येव रत्नानि तत्रैव प्रमादवशाद् भुक्तानि, तस्मान्निर्धनो जातः। भारवाहककृत्यं मया कृतं। ममापराधः क्षम्यतां'। ततः पित्रा तानि सुतवाक्यानि श्रुत्वा मनसि विचार्य ज्येष्ठस्य स्वजनसमक्षं भाण्डागारं सर्वमपि समर्प्य गृहाधीशं कृत्वा सर्वेषां कथितं—'एतस्याज्ञा केनापि नोल्लंघनीया'। द्वितीयपुत्रस्य वस्तुव्यापारक्रयाणकानि समर्प्योक्तं—'त्वया व्यापारः कार्यः। वृद्धाज्ञया कार्याणि कार्याणि'। ततस्तृतीयस्य खंडनं पेषणं रन्धनं परिवेषणं च समर्पितं। स प्रमादात् पूर्वकर्मवशाच्च दुःखी जातः।

अत्र जिनवरैरुपनयो दर्शितः। सिद्धान्तेऽप्युक्तं—

उवणओ णायव्वो सिद्धांते जिणवरेहिं जो भणिओ। तं निसुणह भो भव्वा एगग्गमणा य पच्चक्खं ॥१॥

जो सिट्ठी सो य गुरू पुत्ता तिन्नि वि कमेण नायव्वा । सव्वविरइदेसविरइअविरओ तईओ नेओ ॥२॥
दंसणनाणचरितं तिन्नि वि रयणाइ मूलनीवी य । वावारत्थे चलिया पत्ता नयरम्मि मणुअभवे ॥ ३ ॥
जो न कुणेइ पमायं वुड्ढेइ नाणदंसणचरितं । सव्वविरई य जीवो लाहो देवगईभवे ॥ ४ ॥
वीओ अ अप्पमाओ किच्चा वावाररक्खिओ नीवी । सो पावइ मणुअभवं भोगं भुंजेइ जह इत्थं ॥ ५ ॥
तइओ बहुप्पमाओ निद्दाविकहाइएण संकलिओ । हारेअ मूलनीवीं पावेइ रोरवं नरयं ॥ ६ ॥
मज्जविसयकसायानिद्दाविकहाइ पंचहा भणिआ । एए पंच प्पमाया जीवं पाडंति संसारे ॥ ७ ॥

तस्मान्मनुष्यभवं प्राप्य धर्मे प्रमादस्त्याज्यः । पुनरपि श्रूयताम्—" महारंभियाए महापरिग्गहाए कुणिमाहारेणं पंचिंदियवहेणं जीवा नरयं गच्छन्ति । जे लोए निस्सीला निव्वया निग्गुणा निमेरा निप्पच्चक्खाणपोसहोववासा ते कालमासे कालं किच्चा अहे सत्तमाए पुढवीए अपइट्ठाणे णेरईयावासे णेरइयत्ताए उववज्जंति " । व्याख्या—महारंभाए इत्यादि । महारभाः पञ्चदशकर्मादानरूपास्त्याज्याः । तथाहि—

अंगारवनशकटभाटकस्फोटजीविका । दन्तलाक्षारसकेशाविषवाणिज्यकानि च ॥ १ ॥
यंत्रपीडानिलांछनमसतीपोषणं तथा । दवदानं सरःशोष इति पञ्चदश त्यजेत् ॥ २ ॥

तत्र प्रथममंगारकर्म यथा—

अंगारभ्राष्ट्रकरणं कुंभायःस्वर्णकारिता । ठठारश्वेष्टिकापाकावृत्तिह्यंगारजीविका ॥ १ ॥

अंगारकर्म नवांगारकरणं भ्राष्ट्रकरणं इष्टिकापाकादिपाकः कुंभकारायस्कारस्वर्णकाराः चूर्णकारा इष्टिकापाचकास्तेषां वृत्तिरंगाराजीविका तत्कर्म अंगारकर्मेति १।

छिन्नाछिन्नवनपत्रप्रसूनफलविक्रयः। कणानां दलनं चैषा वृत्तिश्च वनजीविका ॥ २ ॥

छिन्नाछिन्नवनस्पतिपत्रपुष्पकन्दमूलफलतृणकाष्ठकंबावंशादेर्विक्रयो वनकच्छादिकरणं कणानां दलनं चैभिः कर्मभिर्यदाजीविका क्रियते तद्वनकर्म २।

शकटानां तदंगानां घटनं खेटनं तथा । विक्रयश्चेति शकटाजीविका परिकीर्तिता ॥ ३ ॥

शकटानां शकटांगानां च घटनखेटनविक्रयास्तैर्यज्जीवनं तच्छकटकर्म ३।

शकटोक्षलुलायोष्ट्रखराश्वतरवाजिनाम् । भारस्य वाहनाद् वृत्तेर्भवेद्भाटकजीविका ॥ ४ ॥

शकटवृषभकरभमहिषखरवेसराश्वादेर्भाटकग्रहणेन भारवाहनं तद्भाटककर्म ४।

सरःकूपादिखननं शिलाकुट्टनकर्मभिः । पृथिव्यारंभसंभूतैर्जीवनं स्फोटजीविका ॥ ५ ॥

यवचणकगोधूमकरड्यादेः सक्तुदालिपिष्टतंदुलकरणादिः खनिसरःकूपाद्यर्थं भूखननहलखेटनपाषाणघटनादिकं तत् स्फोट-कर्म ५। एतानि पञ्च कर्माणि त्याज्यानि।

अथ पञ्च वाणिज्यकर्माण्याह—

दन्तकेशनखास्थित्वक्रोमग्रहणमाकरे। त्रसांगस्य वणिज्यार्थं दन्तवाणिज्यमुच्यते ॥ ६ ॥

तत्राकरे दन्तिदन्तघूकव्याघ्रादिनखहंसादिरोममृगादिचर्मचामरशंखशृंगशुक्तिकपर्दकस्तूरीहिंसकादित्रसांगग्रहणं दन्तवाणिज्यं। एभिर्व्यापारैर्यज्जीवनं तद्दन्तवाणिज्यमुच्यते ६।

लाक्षामनःशीलनीलीधातकीटंकणादिनः। विक्रयः पापसदनं लाक्षावाणिज्यमुच्यते ॥ ७॥

लाक्षाधातकीनीलीमनःशीलहरितालवज्रलेपतुवरिकापटवासटंकणसाबुकक्षारादिविक्रयो लाक्षावाणिज्यमुच्यते ७।

नवनीतवसाक्षौद्रमद्यप्रभृतिविक्रयः। द्विपाच्चतुष्पाद्विक्रयो वाणिज्यं रसकेशयोः ॥ ८॥

मधुमद्यमांसम्रक्षणवसातैलदधिदुग्धघृतादिविक्रयो रसवाणिज्यमुच्यते ८। तथा दासादिनृणां अश्वगोतिरश्चां च विक्रयः केश-वाणिज्यमुच्यते ९।

विषास्त्रहलयंत्रायोहरितालादिवस्तुनः। विक्रयो जीवितघ्नस्य विषवाणिज्यमुच्यते ॥ ९॥

विषनागफीणवत्सनागसोमलखड्गकुशीकुद्दालादिलोहहलादिविक्रयो विषवाणिज्यमुच्यते १०। एतानि पञ्च वाणिज्यकर्माणि सुश्रावको वर्जयेत् इति।

तिलेक्षुसर्षपैरंडफलयंत्रादिपीडनम्। दलतैलस्य विकृतिर्यंत्रंपीडा प्रकीर्तिता ॥ १० ॥

तिलेक्षुसर्षपैरंडफलानि तेषां पीलनं दलतैलविधानं जलयंत्रवाहनादिकं यंत्रपीडनकर्म घरट्टादिकर्माणि ११।

नासावेधोऽङ्कनमुष्कच्छेदनं पृष्ठिगालनम्। गोकर्णकंबलच्छेदो निर्लांछनमुदीरितम् ॥ ११ ॥

गवादिपशूनां कर्णकंबलभृगपुच्छच्छेदनासावेधाङ्कनकर्णस्फोटनपंढनत्वग्दाहादिकं उष्ट्रपृष्ठिगालनादिकं निर्लांछनं कर्म नरकदुःखदायकं वर्जनीयमेवेति ॥ १२ ॥

शारिकाशुकमार्जारश्वकुर्कुटकलापिनाम्। पोषं दासस्य वित्तार्थमसतीपोषणं विदुः ॥ १२ ॥

शारिकाशुकमार्जारकुर्कुरकुर्कुटमर्कटमयूरकुरंगशूकरादेः पोषोऽसतीपोषः। केचन हि दासीपोषणं कुर्वन्ति। तत्संबन्धि भाटकं गृह्णन्ति गोल्लदेशे १३।

व्यसनात् पुण्यबुध्या वा दवदानं भवेद् द्विधा। सरःशोषः सरस्यंबुह्लदादेरंबुसंप्लवः ॥ १३ ॥

गहनदाहे सति भिल्लादयः सुखेन चरन्ति। जीर्णतृणदाहे वा नवतृणांकुरोद्भेदाद् गवादयश्चरन्ति। यद्वा दग्धे क्षेत्रे सस्य-[illegible] स्यात् इत्यादिपुण्यबुध्या कौतुकेनारण्येऽग्निप्रज्वालनं दवदानं। श्रूयते हि मरणकाले भिल्लादयो भणन्ति यथे-[illegible] धर्मार्थं कार्यीया इति १४। तथा सरोनद्ह्रदतडागादिशोषः सारणीकर्षणेन धान्यादिवपनार्थं क्रियते स सरःशोषः। [illegible] मानं तु तडागादि इत्यनयोर्भेदः १५। एतेषां पञ्चदशकर्मादानानामाचरणेन बहुदोषापत्तिः।

तत्रांगारकर्मण्यग्नेः सर्वतोमुखशस्त्रत्वात् षण्णां जीवनिकायानां विराधना स्यात् १ । वनकर्मणि वनस्पतेस्तदाश्रितत्रसादेश्च विराधना २ । शकटभाटककर्मणोर्भारवाहकवृषभादेर्मार्गस्थषड्जीवानां च विराधना इति ३–४ । स्फोटककर्मणि कणदलनादौ वनस्पतेर्भूमिखननादौ पृथिव्या उभयत्र तद्गतत्रसादेश्च महाविराधना प्रवर्तते ५। आकरे दन्तचामरकेशाजित्रसाङ्गवाणिज्ये ग्राहकान् दृष्ट्वा लोभात् पुलिन्दादयस्तत्कालमेव हस्तिचमर्यादिवधेऽपि प्रवर्तन्ते ६ । लाक्षावाणिज्ये लाक्षाया बहुत्रसाकुलत्वात्तद्रसस्य च रुधिरभ्रमकारित्वात् धातकीत्वक्पुष्पयोर्मद्याङ्गत्वात्तत्कालस्य कृमिहेतुत्वात् गुलिकाया अनेकजन्तुपातघातादिना नाश्यत्वान्मनःशीलहरितालवज्रलेपानां च संपातिमबाह्यजन्तुघातकत्वात् तुंबरिकायाः पृथ्वीत्वादिना पडवासस्य त्रसाकुलत्वात् टंकणक्षारसाबूक्षारादेर्बाह्यजीवविनाशकत्वाच्च महानेव दोषः । लाक्षादेर्दुष्टत्वं मनुस्मृतावप्युक्तं—

सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्री भवति ब्राह्मणः क्षीरविक्रयात् ॥ १ ॥

७ । रसवाणिज्ये मध्वादौ जन्तुघातोद्भवत्वादनेकजन्तुसंमूर्छनादिदोषः । दुग्धादौ संपातिमजन्तुविराधना । दिनद्वयातीते दध्नि जन्तुसंमूर्छनापि प्रागुक्तयुक्त्या ८ । केशवाणिज्ये द्विपदचतुष्पदानां नित्यं पारवश्यं वधबन्धक्षुत्पिपासादिपीडादोषः ९ । विषवाणिज्ये शृंगिकावत्सनागादेर्हरितालसोमलक्षारादेश्च विषशस्त्रादीनां च जीवितघ्नत्वं प्रतीतमेव । दृश्यन्ते हि जलार्द्रहरितालेन सहैव विपद्यमाना मक्षिकादयः । सोमलक्षारादिना भक्षितेन बालादयोऽपि म्रियन्ते । विषादिवाणिज्यं शास्त्रेऽपि निषिद्धमस्ति । यतः—

कन्याविक्रयिणश्चैव रसविक्रयिणस्तथा । विषविक्रयिणश्चैव नरा नरकगामिनः ॥ १ ॥

१० । यंत्रपीडाकर्मणामेकः संबंधः स्यात् । यतः—

खंडनी पेषणी चुल्ली जलकुंभः प्रमार्जनी । पञ्च सूना गृहस्थस्य वध्यन्ते जंतवो हि यत् ॥ १ ॥

तिलयंत्रादेश महापातकहेतुत्वं लौकिका अपि वर्णयन्ति । तद्यथा—

दशसूनासमश्चक्री दशचक्रिसमो ध्वजः । दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ १ ॥

११ । निर्लाञ्छनकर्माणि गवाश्वोष्ट्रादिपश्वेन्द्रियकवर्धनादोषः १२ । दवदानेऽनेकविधजीवकोटिवधदोषः १३ । सरोवरादिशोषे जलस्य तथा तद्गतानां मत्स्यादीनां तदुत्प्लावितानां च षण्णां जीवनिकायानां विनाशः स्यात् १४ । असतीपोषे दास्यादिक्रियमाणदुष्कृतैः पापवृद्धिः स्यात् १५ । तदेवंप्रकाराण्यन्यान्यपि खरकर्माणि निस्त्रिंशजनोचितानि कोट्टपालनगुप्तिपालनसीमपालनादीनि कर्माणि श्रावको वर्जयेत् । तथा—

वृषभान् दमय क्षेत्रं कृष पंढय वाजिनम् । दाक्षिण्याविषये पापोपदेशोऽयं न कल्प्यते ॥ १ ॥

यंत्रलांगलशस्त्राग्निमुशलोदूखलादिकम् । दाक्षिण्याविषये हिंस्रं नार्पयेत् करुणापरः ॥ २ ॥

कुतूहलाद्गीतनृत्यनाटकादिनिरीक्षणम् । कामशास्त्रप्रसक्तस्य द्यूतमद्यादिसेवनम् ॥ ३ ॥

जलक्रीडान्दोलनादिविनोदो जन्तुयोधनम् । रिपोः सुतादिना वैरं भक्तस्त्रीदेशराट्कथा ॥ ४ ॥

---

१ नर्त। निर्लाञ्छन। २ भाज कल्प्यते।

रोगमार्गश्रमौ मुक्त्वा स्वापश्च सकलां निशाम्। एवमादि परिहरेत् प्रमादाचरणं सुधीः ॥ ५॥

एते योगशास्त्रोक्ताः श्लोकाः सुगमाः स्वयमेवाभ्यूह्याः। विवेकिना श्रावकेण जिनवचनानि विज्ञायैकाग्रमनसा परिपालनीयानि। 'महापरिग्गहाए'त्ति महापरिग्रहो लोभमूलः। स लोभो नरकदुःखदायकः। लोभी कथमपि न सन्तोषमेति—

तृप्तो न पुत्रैः सगरः कुचिकर्णो न गोधनैः। न धान्यैस्तिलकश्रेष्ठी न नन्दः कनकोत्करैः ॥ १ ॥

लोभी तृप्यति नो घनैरपि धनैरछिन्नवं स्वं नवं, दर्पाद्यः पितृकल्पितानुजपदं किं वार्षभिर्नाच्छिदत्।
अश्रान्तं सरितां शतैरपि भृतः किं वाऽम्बुधिः पूर्यते, किं वा शाम्यति काष्ठकोटिभिरपि ज्वालाकरालोऽनलः

महापरिग्रहे रतः सुभूमश्चक्रवर्ती पट्खंडाधिपतिः राज्यं करोति। तेनान्यदा चिन्तितं—"अन्ये चक्रवर्तिनः पट्खंडाधिपतयः संजाताः। अहं तु द्वादशखंडाधिपो भवेयं"। इति चिन्तयित्वा सबलवाहनश्चर्मरत्नयोगाल्लवणसमुद्रं तरीतुं प्रविष्टः। तदा तच्चर्मरत्नाधिष्ठातारः सहस्रदेवाः सन्ति, तैश्चिन्तितं—'इदं चर्मरत्नं जले तरति तदस्मत्प्रभावः ? किं वा चक्राधीशप्रभावः ?' इत्थं संचिन्त्य सुराः सर्वेपि चर्मरत्नं संत्यज्य पृथक् स्थिताः। तदा लोभानुभावाच्चक्रवर्तिचर्मरत्नं त्रुडितं। गजाश्वयोधादयः सर्वेपि विपन्नाः। लोभाभिभूतश्चक्रवर्ती मृत्वा सप्तमनरके नारकोभूत्। तत्सर्वं महारंभमहापरिग्रहफलं ज्ञात्वा विवेकिभिर्महारंभा महापरिग्रहास्त्याज्याः। 'कुणिमाहारेणं ति' मांसादिभक्षणे नरकपातः। आदिशब्ददादभक्ष्यद्रव्याणामनन्तकायिकानां च भक्षणं त्याज्यं। तत्राभक्ष्यद्रव्याणि द्वाविंशतिः। तथा चाहुः—

पंचुंबरि ५ चउ विगई ९ हिम १० विस ११ करगे अ १२ सव्वमट्टी अ १३।
रयणिभोअणगं चिय १४ बहुबीअ १५ अणंत १६ संधाणं १७ ॥ १॥
घोलवडा १८ वायंगण १९ अमुणियनामाणि फुल्लफलयाणि २०।
तुच्छफलं २१ चलिअरसं २२ वज्जह दव्वाणि बावीसं ॥ २॥

व्याख्या—पञ्चोदुंबरी वटपिप्पलोदुंबरप्लक्षकाकोदुम्बरफलरूपा। सा मशकाकारसूक्ष्मबहुजीवनिचितत्वाद्वर्जनीया। लौकिका अपि पेठुः—एतानि न भक्ष्यन्त इति ५। तथा चतस्रो विकृतयोऽभक्ष्याः मद्यमांसमधुनवनीतरूपाः, तद्वर्णानेकजीवसंमूर्छनात्। तथा चाहुः—

मज्जे महुंमि मंसंमि नवणीअम्मि चउत्थए। उप्पज्जंति चयंति य तव्वण्णा जंतु तत्थगा ॥१॥

परेऽपि—

मद्ये मांसे मधुनि च नवनीते तक्रतो बहिः। उत्पद्यन्ते विलीयन्ते सुसूक्ष्मा जन्तुराशयः ॥ १॥
सप्तग्रामे च यत्पापमग्निना भस्मसात्कृते। तदेतज्जायते पापं मधुबिन्दुप्रभक्षणात् ॥ २॥

१ तव्वण्णा तत्थ जंतुणो इति वा पाठः।

मद्यं द्विधा काष्टपिष्टभेदात् । मांसं त्रिधा जलचरस्थलचरखचरभेदात् । मधु त्रिधा माक्षिकं कौत्रिकं भ्रामरं चेति । नवनीतं चतुर्धा गोमहिष्यजैडकासंभवं एवं सर्वमीलने नव ९ । हिमं शुद्धासंख्येयाप्कायरूपत्वात् १० । विषं मंत्रोपहतवीर्यमप्युदरान्तर्वर्तिगंडोलकादिजीवघातहेतुत्वान्मरणसमये महामोहोत्पादकत्वाच्च ११ । करका असंख्येयाप्कायरूपत्वात् । नन्वेवं जलमप्यसंख्येयजीवमयं तस्मात् पानीयमप्यभक्ष्यं । सत्यं, पानीयेन विना न निर्वाहः स्यात् । करकादीन् विना तु न कश्चिदनिर्वाहः, ततस्त एव निषिद्धाः, न पुनः पानीयं । तदपि जलं श्रावकस्य प्रासुकमेवोचितं १२ । सर्वाऽपि मृत्तिका खटिकादिका त्याज्या, न च भक्षणीया । ते हि मृत्तिकादिभक्षणव्यसनवतीनामबलानां पांडुरोगदेहदौर्बल्याजीर्णश्वासक्षयरोगादयो महानर्था मरणान्ताः । सचित्तमृत्तिकाभक्षणे चासंख्येयपृथिवीकायविराधना भवति । यतः—

अद्दामलकपमाणे पुढवीकाए हवंति जे जीवा । ते पारेवयमित्ता जंबुद्दीवे न मायंति ॥ १ ॥

एवं चेत्तर्हि लवणमप्यसंख्येयपृथिवीकायात्मकत्वात्त्याज्यं । सत्यं, किं तु सर्वथा तत्त्यागे गृहस्थस्य न निर्वाहः । सचित्तं तच्छ्रावकजने पुनस्त्यजन्ति । विवेकिनो हि भुञ्जाना लवणं चेद् गृह्णन्ति तदा प्रासुकमेव, न त्वितरत् । प्रासुकत्वं च तस्याग्न्यादिप्रबलशस्त्रयोगेनैव संभवति, न त्वन्यथा । पृथ्वीकायजीवानामसंख्येयत्वेनात्यन्तसूक्ष्मत्वात् । तथा च श्रीपञ्चमाङ्गे एकोनविंशतितमे शतके तृतीयोद्देशके निर्दिष्टोऽयमर्थः—“ वज्रमय्यां शिलायां स्वल्पपृथ्वीकायस्य वज्रलोष्टकेनैकविंशतिवारान् पेषणे सति केचन जीवाः स्पृष्टाः केचन नेति ” । १३ । रजनीभोजनं बहुविधजीवसंपातसंभवेनैहिकपारलौकिकानेकदोषदुष्टत्वात् । यदभिहितं—

मेहं पिपीलिआओ कुणंति वमणं च मच्छिआ कुणइ । जूआ जलोदरं जाउ (तू)कोलिओ कोढरोगं च ॥१॥
गलो सरस्स भंग कंटो लग्गइ गलम्मि दारुं च । तालुम्मि विंधइ अली वजणमज्झंमि भुंजंतो ॥ २ ॥

निशीथचूर्णावपि—" गिहकोकिलस्स अवयवसमिस्सेण भुत्तेण पोट्टे किल गिहकोईला समुच्छति " । एवमन्नादेर्विषमिश्रसर्पादिलालामलमूत्रवीर्यपातादिना मृत्याद्यपि । तथा—

मालिंचिमाहिअलंजामिणीसु[१] रयणीपरासमंतेणं । तोवि लु(छ)लंति हु फुल्लं रयणीए भुजमाणं तु ॥ १ ॥
जीवाणं कुंथुमाईण घायणंताण धोवणाईसु । एमाइ रयणीभोयणदोसे को साहिओ तरइ ॥ २ ॥
उलूककाकमार्जारगृध्रसंवरशूकराः । अहिवृश्चिकगोधाश्च जायन्ते रात्रिभोजनात् ॥ ३ ॥

इत्यादि । परेऽपि पठन्ति—

मृते स्वजनमात्रेऽपि सूतकं जायते किल । अस्तं गते दिवानाथे भोजनं क्रियते कथं ॥ १ ॥
रक्तीभवन्ति तोयानि अन्नानि पिशितानि च । रात्रौ भोजनसक्तस्य ग्रासे तन्मांसभक्षणम् ॥ २ ॥
अस्तं गते दिवानाथे आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं मार्कंडेयमहर्षिणा ॥ ३ ॥

---

१ मालिंच माहिअल्जामिणीसु इति पाठान्तरम् ।

नोदकमपि पातव्यं रात्रावत्र युधिष्ठिर । तपस्विना विशेषेण गृहिणा च विवेकिना ॥ ४ ॥

तथा च—

त्रयीतेजोमयो भानुरिति वेदविदो विदुः । तत्करैः पूतमखिलं शुभं कर्म समाचरेत् ॥ १ ॥
नैवाहुतिर्न च स्नानं न श्राद्धं देवतार्चनम् । दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥ २ ॥

तस्माद्विवेकिना रात्रौ चतुर्विधोऽप्याहारः परिहार्यः। तदशक्तौ चाशनं खादिमं सर्वथा त्याज्यमेव। स्वादिमं पूगीफलाद्यपि दिवा सम्यक्शोधनादियतनयैव ग्राह्यं। अन्यथा त्रस हिंसादयोऽपि दोषाः स्युः । मुख्यवृत्त्या च प्रातः सायं च रात्रिप्रत्यासन्नत्वादाद्ये द्वे घटिके भोजने त्यजेत् । यतः—

अह्नो मुखेऽवसाने च यो द्वे द्वे घटिके त्यजेत् । निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥ १ ॥

अ१ एवागमे सर्वजघन्यं प्रत्याख्यान मुहूर्तप्रमाणं नमस्कारसहितमुच्यते । कदाचित् तत्कार्यव्यग्रत्वादिना तथा न शक्नोति तदापि सूर्योदयास्तनिर्णयमपेक्षते एवातपदर्शनादिना । अन्यथा रात्रिभोजनदोषः । अन्धकारभनेऽपि व्रीडया प्रदीपाकरणादिना त्रसादिहिंसानियमभंगमायामृषावादादयोऽधिकदोषा अपि स्युः । यतः—

न करेमि त्ति भणेत्ता तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई माया नियडीपसंगो य ॥ १ ॥
पावं काऊण सयं अप्पाणं सुद्धमेव वाहरइ । दुगुणं करेइ पावं बीअं बालस्स मंदत्तं ॥ २ ॥

रात्रिभोजननियमाराधनविराधनयोर्मित्रत्रयदृष्टान्तः तद्यथा—देवपल्लीग्रामे श्रावकभद्रकमिथ्यादृष्टयस्त्रयः सुहृदो वणिजोऽभूवन् । ते चान्यदा जैनाचार्यान्तिके जग्मुः । आचार्या अपि रात्रिभोजननियमदेशनां प्रारेभिरे। तच्छ्रुत्वा तैः रात्रिभोजनवर्जनादिनियमश्चक्रे । तत्र श्राद्धेन रात्रिभोजनकन्दमूलाद्यभक्ष्यनियमः श्राद्धकुलोद्भवतया सोत्साहतयैव जगृहे । भद्रकेण बहु विमृश्य रात्रिभोजन एव नियमो गृहीतः । मिथ्यादृष्टिस्तु न प्रतिबुद्धः, कदाग्रहग्रस्तत्वात् । यतः—

आग्रही बत निनीषति युक्तिं तत्र यत्र मतिरस्य निविष्टा ।

पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ १ ॥

तदनु श्रावकभद्रकयोः कुटुंबे अपि रात्रिभोजनादिनियमपरे अभूतां । गृहेशानुसारिणी हि गृहव्यवस्था । श्रावकश्च क्रमात्प्रमादबहुलतया स्वनियमे शिथिलमतिर्जातः । स्वकार्यव्याकुलतया प्रातः सायं च त्याज्यघटीद्वयमध्येऽपि भुंक्ते,क्रमात् सूर्येऽस्तंगतेऽपि सम्यग्नियमाराधकभद्रकादिभिर्नोदितस्तु 'संप्रति दिवस एवास्ति, क्व रात्रिः ?' इत्यादि प्रत्याह । तदनुसारेण सकलं तत्कुटुंबमपि तथैव जातं । अहह गृहस्वामिनः प्रमादबहुलतायाः पापप्रसंगवृद्धिः । अन्यदा भद्रकः किञ्चिन्नृपादिष्टकार्यव्यग्रतया प्रातर्मध्याह्नेऽप्यभुक्तः सूर्यास्तमनवेलायां कथमपि भोक्तुं गृहमागतः । तावदुत्सूरोभूत् । ततः सुहृदादिभिः भृशमभ्यार्थितोऽपि भद्रको नाभुंक्त । यतः—

अप्पहियं कायव्वं जई सक्का परहिअं पि कायव्वं । अप्पहियपरहियाणं अप्पहिअं चेव कायव्वं ॥ १ ॥

श्राद्धकस्तु निःशूकतया किञ्चिदन्धकारप्रसरेऽपि यथेच्छया बुभुजे । तदा च तन्मूर्ध्नि पतिता यूका तेनाहारान्तराहारिता । ततोऽसौ जलोदरमहाव्याधिनाऽत्यन्तं बाधितो मृत्वा निशाभोजननियमभंगात् क्रूरो मार्जारोऽजनि । ततश्च दुष्टेन शुना कदर्थ्यमानो विपद्य नरके नारक उदपद्यत । रजनीभोजनप्रसक्तो मिथ्यादृष्टिरपि कदाचित् किञ्चिद्विषमिश्राहारभुक्त्या शादंशादं क्षुटदंत्रनिविडपीडया मृत्वा मिश्रवत्तथैव मार्जारो नारकश्चाभूत् । भद्रकस्तु सम्यग्नियमाराधनाद् सौधर्मे महर्द्धिसुरोऽभूत् । श्राद्धजीवस्तु नरकादुद्वृत्य निःस्वद्विजस्य तनुजोऽजनि श्रीपुञ्जनामा । मिथ्यात्विजीवश्च तल्लघुभ्राता श्रीधराभिधः ।

इतश्चोपयुक्तेन भद्रकदेवेन रहसि स्वस्वरूपज्ञानप्राग्भवकथनपूर्वं प्रतिबोध्य रात्रिभोजनाद्यभक्ष्यनियमं ग्राहितौ तौ तत्प्रतिपालने दृढीकृतौ च । यतः—

> पापान्निवारयति योजयते हिताय गुह्यं च गूहति गुणान् प्रकटीकरोति ।
> आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १ ॥

पित्रायैस्तु कदाग्रहनिग्रहाय सर्वथा भोजनं निषिद्धं । तयोर्लंघनत्रयं जातं । तृतीयरात्रावत्रहितभद्रकसुरेण तन्नियममहिमवृद्ध्यै तत्र धात्रीपतेरात्यन्तिकी जठरव्यथा विचक्रे । यथा यथा भिषग्ज्योतिषिकमांत्रिकादयः किञ्चिदुपचेरुस्तथा तथा सा घृतसिक्ता ज्वालेवावर्धततमां । ततो मंत्र्यादिषु किंकृत्यमूढेषु हाहारवपरेषु पौरेषु सत्सु च दिवि दिव्या वागभूत्—" भो भो यामिनीभोजनविवर्जनादिदृढधर्मपुञ्जश्रीपुञ्जहस्तस्पर्शनेनैवास्य राज्ञः पाटवं नान्यथा कथमपीति "। ततः ' कोऽत्र पुरे श्रीपुञ्जः ? ' इति

विमर्शपरेषु सचिवादिषु केनाप्युक्तं—" निःस्वविप्रपुत्रः स्वनियमदार्ढ्याल्लंघनत्रयेऽप्यक्षुभितः श्रीपुञ्जः शिशुरेकोऽस्ति। स एवायं संभवतीति "। ततः संभावनमात्रेणाप्यत्र बहुमानेनाहूतः सचिवाद्यैः स श्रीपुञ्जः सपद्यागतः। आगत्य श्रीपुञ्जः सोत्साहमुच्चैराह—" यदि ममाराध्यमानयामिनीभोजनादिनियममाहात्म्यमस्ति तदानीमिदानीमेवास्य राज्ञः सर्वांगव्यथा सर्वथाऽप्युपशाम्यतु"। इत्युक्तिपूर्वमुर्वीशं स्वहस्तस्पर्शनेनैव झटिति पटूचक्रे। ततस्तुष्टेन राज्ञा श्रीपुञ्जाय पञ्चग्रामाधिपत्यं प्रादायि। तद्दिनाच्च नृपाद्यैस्तत्रिपत्राद्यैरन्यैरपि विभावरीभोजनान्यपि त्यक्तानि। एवं जिनधर्मं प्रभावयन् भुक्तपञ्चग्रामसाम्राज्यः श्रीपुञ्जः श्रीधरेण सार्धं सौधर्मं प्राप्तः। त्रयोऽपि क्रमात्सिद्धाः। ॥ इति रात्रिभोजने भिन्नत्रयसंबन्धः ॥

बहुबीजं पंपोटकादिकं अभ्यन्तरपटादिरहितं केवलं बीजमयं। तच्च प्रतिबीजं जीवोपमर्दसंभवाद्वर्जनीयं। यच्चाभ्यन्तरपटादिसहितं बीजमयं दाडिमटिंडूरकादि तन्नाभक्ष्यतया व्यवहरन्ति १५। अनन्तकायिकान्यनन्तजन्तुजातघातपातकहेतुत्वात्। यतः—

> नृभ्यो नैरयिकाः सुरास्तु निखिलाः पञ्चाक्षतिर्यग्गणो
> द्व्यक्षाद्या ज्वलनो यथोत्तरममी संख्यातिगा भाषिताः।
> तेभ्यो भूजलवायवः समधिकाः प्रोक्ता यथानुक्रमं
> सर्वेभ्यः शिवगा अनन्तगुणितास्तेभ्योऽप्यनन्तांशगाः ॥ १ ॥

तानि च व्यक्त्याऽग्रे दर्शयिष्यन्ते १६ । संधानं निंबुकबिल्वकादीनामनेकजीवसंसक्तिनिमित्तत्वात् संधानस्य व्यवहारवृत्त्या दिनत्रयात् परतोऽभक्ष्यत्वमाचक्षते १७ । घोलवटकान्यामघोलमिश्रवटकानि । उपलक्षणत्वादामगोरससंपृक्तद्विदलानि च । केवलिगम्यसूक्ष्मजीवसंसक्तिसंभवात् । द्विदललक्षणं लिख्यते—

जंमि उ पीलिज्जंते नेहो न हु होइ बिंति तं विदलं । विदले वि हु उप्पन्ने नेहजुअं होइ नो विदलं ॥१॥

इति १८ । वृन्ताकानि निद्राबाहुल्यमदनोद्दीपनादिदोषपोषकत्वात् । उक्तं च—

यस्तु वृन्ताककालिंगमूलकानां च भक्षकः । अन्तकाले स मूढात्मा न स्मरिष्यति मां प्रिये ॥ १ ॥

इति १९ । अज्ञातनामानि पुष्पाणि फलानि च । अज्ञानतो निषिद्धपुष्पफलेषु प्रवृत्तौ व्रतभंगसंभवाद्विषपुष्पफलेषु तु प्रवृत्तौ जीवितस्यापि नाशना कचूलपल्लीपतिसार्थिकवत् २० । तुच्छफलं मधुकजंबूकफलादेः । उपलक्षणत्वाच्च तुच्छपुष्पं करीराणिशिग्रुमधुकादि । तुच्छपत्रं माष्यपि तंदुलीयकादेश्च, बहुजीवसंमिश्रत्वात् । यद्वा तुच्छफलमर्धनिष्पन्नं कोमलं च वलकमुद्गसिंगादिकं । तद्भक्षणे हि न तथाविधा तृप्तिः, विराधना च भूयसी स्यात् २१ । चलितरसं कुथितान्नं पर्युषितद्विदलान्नपूपिकाद्यनेकजन्तुसंसक्तगम्यत्वात् परिहार्यत्वमस्तु । दिनद्वयातीते दध्नि जीवसंसक्तिः कथमवगम्यते ? तदुच्यते—शास्त्रप्रमाणात् । तथा चोक्तम्—

---

१ आणिशिग्रुः मीमोद्गतशिग्रुजानिः

जइ मुग्गमासमाई विदलं कच्चम्मि गोरस पडइ । ता तसजीवउप्पत्तिं भणंति दहिए विहु दिङ्गुवरि ॥१॥

श्रूयते च धनपालपंडितप्रतिबोधनार्थं समागतेन तद्बन्धुशोभनमुनिना दिनद्वयातीते दध्नि अलक्तकपुंभेन जीवदर्शनं ( कृतं ) ततस्तत्प्रतिबोधभवनं च २२ । इति द्वाविंशत्यभक्ष्याणि वर्जनीयानि।

अथानन्तकायिकानि द्वात्रिंशन्मितानि तान्यपि त्याज्यानि । तेषां स्वरूपं चाहुः—

सव्वायकंदजाइ सूरणकदो अ १ वज्जकंदो अ २
अल्लहलिद्दा य ३ तहा अल्लं तह ४ अल्लकच्चूरो ५॥ १॥
सितावरी ६ विराली ७ कुंअरि ८ तह थोहरी ९ गलोईअ १०।
लसण ११ वंसकारिल्ला १२ गज्जर १३ लूणोअ १४ तह लोढा १५॥ २॥
गिरिकण्णि १६ किसलपत्ता १७ खरिंसूआ १८ थेग १९ अल्लमुत्थाय २०।
तह लोणरुक्खछल्ली २१ खिल्लूहडो २२ अमयवल्ली य २३॥ ३॥
मूला २४ तह भूमिरुहा २५ तह विरुहा २६ ढक्कवत्थुलो पढमो २७।
सूअरवल्लो अ २८ तहा पल्लंको २९ कोमलंबिलिया ३०॥ ४॥

आलू ३१ तह पिंडालू ३२ हवंति एए अणंतनामेण।

अन्नमणंतं नेयं लक्खणजुत्तीइ समयाओ ॥ ५ ॥

व्याख्या—सर्वे च कन्दजातिरनन्तकायिका। तत्र कांश्चित् कन्दान् व्याप्रियमाणत्वान्नामतो दर्शयति—सूरणकन्दोऽर्शोघ्नकन्दविशेषः १। वज्रकन्दः २। आर्द्रहरिद्रा ३। आर्द्रकं शृंगवेरं ४। आर्द्रकचूरकः ५। शतावरी ६। विरालिके वल्लीभेदौ ७। कुमारी मांगलप्रणालाकारपत्रं ८। थोहरी स्नुहीतरुः ९। गडूची वल्लीविशेषः १०। लशुनं कन्दविशेषः ११। वंशकरेलानि १२। गर्जरकानि १३। लवणिका वनस्पतिविशेषः, येन दग्धेन सज्जिका नि पद्यते १४। लोढकः पद्मिनीकन्दः १५। गिरिकर्णिका वल्लीविशेषः १६। किसलयरूपाणि प्रौढपत्रादर्वाग बीजस्योच्छूनावस्थालक्षणानि सर्वाण्यपि १७। खरिंशुका १८। थेगश्च कन्दभेदः १९। आर्द्रमुस्ता २०। लवणादरपर्यायस्य भ्रामरनाम्नो वृक्षस्य च्छविः त्वग्, न त्वन्येऽवयवाः २१। खिल्लोहडो लोकप्रसिद्धः कन्दः २२। अमृतवल्ली वल्लीविशेषः २६। मूलकः प्रसिद्धः कन्दः, स त्याज्यः। यदुक्तम्—

लसुनं गृंजनं चैव पलांडुः पिंडमूलकम्। मत्स्यं मांसं सुरा चैव मूलकस्तु ततोऽधिकः ॥ १ ॥

पुत्रमांसं वरं भुक्तं न तु मूलकभक्षणम्। भक्षणान्नरकं गच्छेद्वर्जनात् स्वर्गमाप्नुयात् ॥ २ ॥

मूलकेन समं चान्नं यस्तु भुंक्ते नराधमः। न विद्यते तस्य शुद्धिश्चान्द्रायणशतैरपि ॥ ३ ॥

इति २४। भूमिरुहाणि च्छत्राकाराणि वर्षाकालभावीनि भूमिस्फोटकानीति प्रसिद्धानि २५। विरूढान्यंकुरितानि द्विद-

लधान्यानि २६ । ढंकनास्तुलः शाकविशेषः । स च प्रथमोद्गत एवानन्तकायिको न तु च्छिन्नप्ररूढः २७ । सूकरवल्लः स एवानन्तकायिको न तु धान्यवल्लः २८ । पल्यंकः शाकभेदः २९ । कोमलाम्लिका अवस्थाकिका चिंचिणिका ३० । आलूकः ३१ । पिंडालुकौ ३२ कन्दभेदौ । न चैत एवानन्तकायाः, चतुर्दशलक्षा अनन्तकायिकाः । तेषां लक्षणान्युच्यन्ते—

गूढसिरसंधिपव्वं समभंगमहीरुगं च छिन्नरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेअं ॥ १ ॥

इत्यादिसिद्धान्तोक्तलक्षणयुक्ता अन्येपि ज्ञेया हेयाश्च ।

चतस्रो नरकद्वारः प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव संधानानन्तकायिकाः ॥ १ ॥

अनन्तकायाद्यभक्ष्यं चाचित्तभूतमपि परिहार्यं । अथार्द्रकादेः स्वयं परेणाचित्तीकृतस्य ग्रहणे को दोषः ? उच्यते—निःशूकतो लौल्यवृद्ध्यादिपरंपरया सचित्ततद्ग्रहणप्रसंगवृद्ध्यादिश्च (दोषः)। यथोक्तम्—

इक्केण कयमकज्जं करेइ तप्पच्चया पुणो अन्नो । सायाबहुलपरंपर वुच्छेओ संजमतवाणं ॥ १ ॥

इति द्वात्रिंशदनन्तकायस्वरूपं ज्ञात्वा त्याज्यं । तथा आलस्यादिना घृततैलभाजनानामस्थगनं, मार्गे सति हरितकायाद्युपरि अशोधिताध्वनि वा गमनं, अनालोकितस्थाने हस्तक्षेपादि, सत्यपि स्थाने सचित्तोपरि स्थित्यादि वस्त्रादेर्वा मोचनं, पनककुंथ्वाद्याक्रान्तशुष्यवस्त्रावणादेस्त्यजनं, अयतनया कपाटार्गलादानादि, वृथा पत्रपुष्पादित्रोटनं, मृत्खटिकावर्णिकादिमर्दनं, वह्न्युद्दीपनं, गवादिघातादीनां शस्त्रव्यापारणं, निष्ठुरमर्मभाषणहास्यनिन्दाकरणादि । रात्रौ दिवाऽप्ययतनया वा स्नानकेशग्रथनखंडनरन्धनभूखनन-

मृदादिमर्दनलिंपनवस्त्रधावनजलगालनादि च प्रमादाचरणं, श्लेष्मादीनां व्युत्सर्गे स्थगनाद्ययतनयाऽपि प्रमादाचरितं, मुहूर्तानन्तरं तत्र संमूर्छिममनुष्यासंमूर्छनतद्विराधनाया महान् दोपसंभवः । आह च श्रीपन्नवणाउपांगे—" कहण्णं भंते समुच्छिममणुस्सा उप्पज्जंति ? गोयमा अतो मणुस्सखित्ते पणयालीसाइजोअणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुदेसु पन्नरसकम्मभूमीसु छप्पन्नाइं अंतरदीवेसु गब्भवक्कंतिअमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा गयजीवकलेवरेसु वा थीपुरिससंजोएसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुईठाणेसु समुच्छिममणुस्सा समुप्पज्जंति अंगुलअसंखिज्जभागमित्ताए ओगाहणाए असन्नी मिच्छद्दिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतमुहुत्ताउआ चेव कालं पकरेंति" । एवं संसारान्तर्भ्रमद्भिर्जीवैर्जीववधाद्यनर्थः स्यात् तान्यप्यधिकरणानि वर्जनीयानि । यतः—

" न ग्राह्याणि न देयानि पञ्चद्रव्याणि पंडितैः । अग्निर्विषं च शस्त्रं च मद्यं मांसं च पञ्चमम् ॥१॥ "

कथितं चान्यशास्त्रेपि—

"क्षेत्रं यंत्रं प्रवहणवधूलागलं गोतुरंगं धेनुर्गंत्रीद्रविणकरिणौ हर्म्यमन्यच्च चित्रम् ।
यत्सारंभं जनयति मनः कर्मबन्धश्च यस्मात् तादृग्दानं सुगतिमतिभिर्नैव देयं न लेयम् ॥ १ ॥"

येन कृत्वाऽनर्थदंडः स्यात्तदपि वर्जनीयं । दुष्टजीवा जागरिताः ते चारंभं कुर्वन्ति । तथा च पानीयाहारिकाकणदलनकारिकास्त्रीकारुककर्पुकारघांचिकयांत्रिकरजकलोहकारमात्सिकशौनिकवागुरिकघातकचौरपारदारिकावस्कन्दकदायकादीनामपि परं-

परया कुव्यापारप्रवृत्तिरिति महानर्थदंडः । अत एवोक्तं श्रीभगवत्यंगे कौशांब्यां शतानीकस्य राज्ञो भगिन्या मृगावतीननान्दुर्जयन्त्याः श्रीवीरपार्श्वे प्रश्नसंबन्धे—"सुत्तत्तं भंते ? साहू जागरियत्तं भंते? जयंती ! अत्थेगइयाणं सुत्तत्तं साहू अत्थेगईयाणं जागरियत्तं साहू । से केणट्ठेणं भंते एवं वुचइ ? जयंती ! जे इमे जीवा अहम्मिया अहम्मिट्ठा अहम्मक्खाई अहम्मपलोई अहम्मपलज्जणा अहम्मसीलसमुदायारा अहम्मेण चेव वित्तिं कप्पेमाणा विहरंति एएसिणं जीवाणं सुत्तत्तं साहू । एएणं जीवा सुत्ता समाणा नो बहूणं जीवाणं पाणाणं भूआणं सत्ताणं दुक्खणयाए जाव परिआवणाए वट्टंति । एएणं जीवा सुत्ता समाणा अप्पाणं वा परं वा तदुभयं वा नो बहूहिं अहम्मियाहिं संजोअंति । एएसिं जीवाणं सुत्तत्तं साहू । जयंती ! जे इमे जीवा धम्मिआ धम्मेण चेव वित्तिं कप्पेमाणा विहरंति एएसिणं जीवाणं जागरिअत्तं साहू । एएणं जीवा जागरिआ समाणा पुव्वरत्तावरत्तकालसमयंसि धम्मजागरिअं जागरइत्तारो भवंति । एएसिं जागरियत्तं साहू । एवं बलिअत्तं दुब्बलिअत्तं दक्खत्तं आलसिअत्तं नेयव्वं"। इत्थं ज्ञात्वा प्रमादाचरणं त्याज्यं । येन कृतेन आरंभो वर्धते तदपि त्याज्यं । यथोदुखलेन मुशलं, हलेन फालः, धनुषा शरः, शकटेन युगं नीसया लोष्टकः, कुठारेण दंडः, घरट्टिकायां पुटं द्वितीयपुटेनेत्यादि । इत्यादिपापोकरणानि परिहर्तव्यानि दुर्गतिदायकानि ज्ञातव्यानि । "पंचिंदियवहेणं ति" एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियवधेन जीवा नरकं गच्छन्ति यथा कालसौकरिकः पञ्चशतजन्तुघातकारकः नरकं गतः । तथा च—

नास्त्यहिंसासमो धर्मो न संतोषसमं व्रतम् । न सत्यसदृशं शौचं शीलतुल्यं न मंडनम् ॥ १॥

सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचं तु पञ्चमम् ॥ २॥

स्नानं मनोमलत्यागो दानं चाभयदक्षिणा । ज्ञानं तत्त्वार्थसंबोधो ध्यानं निर्विषयं मनः ॥ ३ ॥

गृहेऽपि रमतां नित्यमस्नानानां नृणां तपसा विनापि केवलं मनःशुध्ध्या शुद्धिर्भवति । उक्तं च—

मन एव मनुष्याणां कारणं बन्धमोक्षयोः । यथैवालिंग्यते कान्ता तथैवालिंग्यते सुता ॥ १ ॥

प्रणिहन्ति क्षणार्धेन साम्यमालंब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ २ ॥

धर्मस्य मूलं विनयविवेकौ । तौ विना न श्लाघा । शास्त्रेऽप्युक्तं—

विणओ सासणमूलं विणयाओ संजमे तवे । विणयाओ विप्पमुक्कस्य कओ धम्मो कओ तवो ॥ १ ॥

विणीओ आवहए सिरिं लहए विणीओ जसं च किंत्तिं च । न कयाइं दुव्विणीओ सकज्जसिद्धिं समाणेइ ॥२॥

यथाद्रिषु गुरुर्मेरुर्ग्रहेषु दिवसाधिपः । चिन्तामणिश्च रत्नेषु विवेकोऽपि गुणेष्विति ॥ ३ ॥

विवेकोऽपि गुणश्रेष्ठः । विवेकेन विना गुणा अपि निर्गुणा भवन्ति । यतः—

यं विना शोभते न श्री रूपं चक्षुर्विना यथा । विवेकदीपकालोकसप्रकाशीकृतेऽध्वनि ॥ १ ॥

चरन्तो न स्खलन्त्येव कलिध्वान्तेऽपि कोविदाः । विवेको गुरुवत्सर्वंकृत्याकृत्यं प्रकाशयेत् ॥ २ ॥

सन्मित्रवदकृत्याच्च वारयेत् सुमतिं यथा ।

## । अथ सुमतिदृष्टान्तः ।

श्रीपुरपुरे श्रीसेननृपो राज्य करोति । तस्य श्रीसखी भार्यास्ति । तस्य नृपस्य सोमाख्यः कुलक्रमायातोऽमात्योऽस्ति । तस्य सुतो नास्ति । पुत्राभावादत्यन्तदुःखी क्वापि रतिं न लेभे । अन्यदा तममात्यं प्रति नृपः प्रोवाच—"तवेयमनपत्यता मा बाढं बाधते । इयत्कालमावयोः सम्बन्धः क्रमागतोऽभूत् । अत एव मत्पुत्रस्यामात्यः को भविष्यति ? अन्यस्मिन्नमात्ये कीदृशो विश्वासो भवेत् । त्वं तु निश्चिन्त इव दृश्यसे " । सोमः प्राह—" स्वामिन् किं विधीयते ? यतः—

जीवितं सन्ततिर्द्रव्यं दैवायत्तमिदं त्रयम् । अनया चिन्तया किं स्यात् किं परायत्तवस्तुनि ॥१॥

नृपो जजल्प—उपायो विधीयताम् । साहसं कृत्वा धैर्यमवलम्ब्य निजा कुलदेवतामाराधय " । इति राज्ञार्पिते सदुपाये सोऽमात्यो देव्या भवनं गतः । शुचिर्भूत्वा तस्याः पुरो दर्भसंस्तारके स्थित्वा इत्यवक्—" हे मातः यदा मे पुत्रस्य प्रसादं करिष्यसि तदाऽहं भोजन करिष्यामि " इत्यभिग्रहमग्रहीत् । तृतीयदिवसे सा देवी प्रत्यक्षं जाता इत्युवाच—"भद्र किं कष्टं करोषि ? तव पुत्रः सल्लक्षण-धरो नास्ति । अधुना परदाररतश्चौरो द्यूतकारो भविष्यति । तस्मात् कियत्कालं प्रतीक्षस्व । तवोत्तमं सुतं दास्ये" । तदा तेनोक्तं—"अहं राज्ञः पृच्छामि" इत्युक्त्वा स राज्ञे प्रष्टुं गतः । राज्ञो देव्याः कथितं शशंस । राज्ञा विमृश्योक्तं—"देवी कथय, तादृशोऽप्यस्तु, परंतु पुत्रमध्ये विनयविवेकौ भवेताम्" । इति निशम्य देवीपार्श्वे समागत—" भगवति तादृशोऽपि अवगुणी पुत्रोऽस्तु, त्वं देहि, परंतु पुत्रे विनयविवेकगुणौ देहि" । देव्या प्रोक्तं—"एवमस्तु, तव पुत्रः परदाररतश्चौरो द्यूतकारश्च भविष्यति । परं विनयविवेकवान् भविष्यति" ।

सोऽप्यमात्यो देवीं नमस्कृत्य स्वगृहं गन्तुमुद्यतः। अथ तस्य द्वितीया स्त्री पण्यनारी परिग्रहेऽस्ति। सापि देवीभवनगतममात्यं ज्ञात्वा तावद्दिनानि भूस्वापा मुक्तभोजना चाभूत्। तद्देवीतोपस्वरूपं ज्ञात्वा चेटया बलादपि स्वगृहं समानीतः। सोऽप्यमात्यः तद्गृहे तत्रैव स्नातभुक्तो रात्राववात्सीत्। प्रभाते स्वगृहं गच्छन् विषण्णधीः समादध्यौ—"धिङ् मां, सुकुलजायामुपेक्ष्यात्रैव स्थितः। देव्याः प्रसादमासाद्य यदत्रैवावसम्। ततो मे कुक्षेत्रजपुत्रो भावी। परं भाव्यन्यथा न भवति। मम जातपुत्रस्य धिक्, पुत्रजन्मन्यपि स्पष्ट-मुत्सवो नो भावी। अथ किं करोमि? भूपस्य यथातथा कथयामि"। इति विमृश्य राजसौधमागच्छन् (राज्ञा) तादृशो वीक्ष्य भज ल्पितः—"भो मंत्रिन् हर्षस्थाने कथं विषण्ण इव दृश्यसे? किं देव्या विप्रतारितोऽसि? किं वा व्यलीकं संजातं?"। तदाऽमात्यो देव्यादेशं स्वदोषं च स्वं निन्दन् सर्वमाख्यातवान्। तदा नृप ऊचे—"खेदं मा कुरु, ईदृशे एव कुले तादृशा देवतादिष्टा अन्याय-कारिणो भवन्ति। तव का क्षतिः? परं त्वं जायां स्वभवनभूमिगृहे सुगुप्तां स्थापय। पुत्रजन्मानन्तरं तां गृहान्निष्कासयेः"। तेनापि तथैव कृतं। पूर्णसमये पुत्रोऽजनि। आशु नृपस्य निवेदितः। प्रच्छन्नकृतसंस्कारः (पुत्रः) क्रमेण व्यवर्धिष्ट। तमध्यापनयोग्यं ज्ञात्वा शास्त्रविचक्षणः पिता सुतमध्यापयितुमारेभे। तस्य भूमीगृहस्थस्योपरितनफलकासनस्थः छात्राणां पुरो बाह्ये नीतिशास्त्रमध्या-पयति। नृपाज्ञया निजांगुष्ठे दवरकं बद्ध्वा स्तनवेऽर्पयति। "संदेहे सति दवरकोऽयं चालनीयः" इति संकेतपूर्वकं स्वसुतमध्याप-यति। क्रमेण पुत्रः प्राज्ञो जातः। अन्यदा नीतिशास्त्रे श्लोक एकः समायातः। तथाहि—

**दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥१॥**

तस्य व्याख्यानं निशम्य (पुत्रः) दवरकं चालयति। पुनस्तस्य पिता पूर्ववत् व्याख्यानयति। भूयोऽपि दवरके चालिते

रोपितोऽन्यान् छात्रान् विसृज्य पुत्रं बहिः समाकृष्योक्तवान्–" समुद्रसमं शास्त्रं तरित्वा गोष्पदोपमे श्लोकेऽस्मिन् सुगमार्थे किं भवान्मूढो जातः ?" । ततः सुतोऽप्याह–" आम तात भवद्भिर्वित्तस्य गतित्रयं वर्णितं, तत्तु मम न पूर्यते । वित्तस्य गतिद्वयी चास्ति, एका दानं द्वितीया नाश एव । यत्तु भुज्यते स एव नाशः । यत आह—

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १ ॥

तच्च सर्वोत्तमं पात्रे देयं धर्माय दुःखिते । याचके कीर्तिपोषाय स्नेहपोषाय बन्धुषु ॥ २ ॥

भूतादौ विघ्ननाशाय वैरघाताय वैरिषु । औचित्येन नृणां दत्तं न दानं क्वापि निष्फलम् ॥ ३ ॥

भोगेन केवलं सौख्यमैहिकं कार्त्स्निकं भवेत् । लोकद्वयविनाशाय तस्य नाशस्तु निश्चितम् ॥ ४ ॥

तन्निशम्य विचारचतुरोऽमात्यो हृदि प्रमोदं वहन् महीभुजे तत्सर्वमाख्यातवान् । नृपोऽप्याह—" भो भद्र एतस्य हृदि विवेकरविरुद्गतः । असौ तव मम च मनोरथं पूरयिष्यति । अहो एतस्य विचारगांभीर्यं, अहो चातुर्यं, अहो अद्भुता मतिः, उपाध्यायं शास्त्रं चातिक्रम्य यः प्रवर्तते । एतस्य ज्ञानं समुन्मीलितं । अथ तं छात्रं गजेन्द्रे समारोप्येहानय " । इत्यादिश्य नृपः स्वहस्तिनं परिवारं च प्रैषीत् । सोमोऽपि स्वगृहे गत्वा निजस्वजनानमेलयत् । अथ कारितशृंगारं कृतकौतुकमंगलं हस्त्यारूढं महदध्वर्या नृपौकसि सुतं निन्ये । नृपोऽपि स्वस्योत्संगे निवेश्य तस्य सत्कारमकरोत् । तस्य सुमतिरित्यभिधानं कृतं । " अहो तव सर्वत्रैव गतिः । अहो त्वया भांडागारेऽन्तःपुरेऽपि सर्वत्रैव राज्यमध्येऽपि क्रीडायै गन्तव्यं " इति संमान्य विसर्जितवान् । राज्ञा सर्वत्रास्ख-

लितगतिः स सर्वत्र क्रीडां कर्तुं भ्रमति। सोऽन्यदा भांडागारे प्रविष्टः। तत्र नृपस्य मुक्ताफलहारं दृष्ट्वा देवतादिष्टदोषवशाच्चलचित्तः सन् तमग्रहीत्। तं संगोप्य सशंकमनास्तरलेक्षणः प्रयातुमुद्यतः तावद्विवेकेन क्षणादाश्रितोऽचिन्तयत्—"धिङ् मां किमिदं विश्वनिन्दितं कर्म निर्ममे? अहो चौर्यसमं पापं पृथिव्यामन्यन्नास्ति" इति विचिन्त्य हारं स्थानके तत्रैव मुक्त्वा गृहमागतः। अथाप्यन्यदा राजमध्येऽस्खलितगत्या क्रीडया भ्रमन् राजपत्न्या कामरागेण सुरतेच्छयाऽऽभाषितः—"भोः सुमते समागच्छ, निर्व्यजनं स्थानमस्ति, मया सह विलासं कुरु"। तच्छ्रुत्वा सुमतिः कुमतीभूय तत्र गन्तुं प्रवृत्तवान्। तावता विवेकेन बन्धुनेव वारितः—"अहो धिङ् मां, यतो राजप्रेयस्यां मातृकल्पायां यन्मे मनः सविकारं समजनि। परस्त्रीसंगिन इह भवे शिरश्छेदादिकं परभवे च नारकत्वं प्राप्नुवन्ति। स महान् स एव पंडितः, य आभ्यः कुटिलांगीभ्यो भुजंगीसदृशीभ्यो दूरं व्रजति। मयाऽतः परं परनारीसहोदरं महाव्रतं पालनीयं"। इति विचिन्त्य तस्याः पादयोर्नित्वा स्वगृहेऽगमत्। एकदा कौतुकी द्यूतकाराणां समीपे कौतुकार्थं क्रीडार्थं च समागतः। तेषां व्यसनं विलोकितं। तेषां स्वरूपमपि दृष्टं। एके परस्परं विवदन्ति, एके तु कलहायन्ते, एके तु द्रव्यं हारयन्ति, एके तु हसन्ति, एके तु चोरयन्ति। तादृशं तद् दृष्ट्वा चिन्तयति—"द्यूतव्यसनं धिगस्तु। यतः—

> द्यूतं न किं त्यजत किं दहत स्वदेहं छागं च मूत्रयत किं वदने स्वकीये।
> तत्तादृशप्रियतमासहितो नलोऽपि जानीत रोर इव राज्यसुखान्निरस्तः ॥ १ ॥

इदं द्यूतव्यसनं मम नो मंजाघटीति"। इति विचिन्त्य स्वगृहे गतः। एकदा क्रीडां कुर्वन् राजसदसि गतः। नृपं नमोऽकरोत्। राज्ञोत्संगे कृत्वा चुंबितः। तदा तेन सुमतिनोक्तं—"स्वामिन् नीतिशास्त्रे उक्तमस्ति—कस्यापि विश्वासो नो विधीयते, अहं अस्व-

लितगतिः कथं कृतोऽस्मि ? मयीदृशो विश्वासो नोचितः " । नृपः प्रोवाच—" वत्स त्वं देवतादत्तवरलब्धोऽस्मद्वंशपुरोधाः, त्वयि विश्वासः कथं नो भवेत् ? त्वयि विषये देवतया विनयविवेकगुणौ मुक्तौ तौ तव साहाय्यकारिणौ । " तदा तेन राज्ञोऽग्रे सर्वमपि स्वकीयं गुप्तं स्वरूपं प्रोक्तं । राजा प्रोवाच—" वत्स त्वं सदोषोऽपि निर्दोष एवासि, विनयविवेकसहायात् । उक्तं च—

यस्य तस्य प्रसूतोऽत्र गुणवान् पूज्यते नरः । सुवंशोऽपि धनुर्दंडो निर्गुणः किं करिष्यति ॥ १ ॥

स नृपोक्तं निशम्य लज्जयाधोमुखः तस्थौ । तदा तस्य नृपेण राजकार्यप्राधान्यं दत्तं । स राजकार्यं कृत्वा क्रमात् सद्धर्ममासाद्य सुमतिः सुगतिं ययौ ॥

॥ इति सुमतिदृष्टांतः ॥

तस्माद्धर्मस्य मूलभूतौ विनयविवेकौ तावेव ग्राह्यौ । तावेव गुणौ सत्संगत्या भवतः । सत्संगतेः शास्त्रोक्तं फलं शृणु । सज्जनाः कीदृशाः ? यतः—

न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं संतोषं वहते परर्द्धिषु परावाधासु धत्ते शुचम् ।
स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लंघयत्युक्तोऽप्यप्रियमक्षमां न रचयत्येतच्चरित्रं सताम् ॥१॥

सज्जनसंगत्याः किं फलम् ?

हरति कुगतिं भिन्ते मोहं करोति विवेकितां वितरति रतिं सूते नीतिं तनोति विनीतताम् ।
प्रथयति यशो धत्ते धर्मं व्यपोहति दुर्मतिं जनयति नृणां किं नाभीष्टं गुणोत्तमसंगमः ॥ २ ॥

लब्धुं बुद्धिकलापमापदमपाकर्तुं विहर्तुं पथि प्राप्तुं कीर्तिमसाधुतां विधुवितुं धर्मं समासेवितुम् ।
रोद्धुं पापविपाकमाकलयितुं स्वर्गापवर्गश्रियं चेत्त्वं चित्त समीहसे गुणवतां संगं तदंगीकुरु ॥३॥

सुसंगस्य माहात्म्याज्जीवः सौख्यमाप्नोति । यतः

पश्य सत्संगमाहात्म्यं स्पर्शपाषाणयोगतः । लोहं स्वर्णं भवेत्स्वर्णयोगात्काचो मणीयते ॥ १ ॥
विवेकाय भवत्येवाकुलजोऽपि सुसंगतः । कुलजातोऽपि दाहाय शंखो वह्निनिषेवणात् ॥ २ ॥
आस्तां सचेतसां संगात् सदसत् स्यात्तरोरपि । अशोकः शोकनाशाय कलये तु कलिद्रुमः ॥ ३ ॥

धर्मोऽपि जीवेन सत्संगत्या प्राप्यते । अत्र प्रभाकरनिदर्शनमुच्यते । तथाहि—

॥ अथ प्रभाकरदृष्टांतः ॥

अस्त्येव भरतक्षेत्रे वीरपुरनगरे यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपषट्कर्मकर्मठो दिवाकरनामा विप्रो वसति । तस्यांगजः प्रभाकरोऽस्ति । स निरंकुश इव सर्वत्र भ्रमति । स्वेच्छया रमते, धातुं धमति, द्यूतं कुरुते, स्वैरं यत्र तत्र क्रीडां कुरुते । पिता तं शिक्षयते " वत्स किं कुरुषे ? आत्मापि नात्मीयः ततः कोऽन्यो भविष्यति ? किं कुव्यसनानि सेवसे ? शास्त्राणि अवगाहस्व । काव्यरसामृतं पिब । गुरुलः शिक्षस्व । धर्मं कुरु । निजकुलं समुद्धर । यतः—

एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना । कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा ॥ १ ॥

किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः । वरमेकः कुलालंबी यत्र विश्रम्यते कुलम् ॥ २ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना । आमोदितं वनं सर्वं सुपुत्रेण कुलं तथा ॥ ३ ॥
एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं कुपुत्रेण कुलं तथा ॥ ४ ॥

किं च—

धनाशा धातुवादेन जीविताशा रसायनैः । गृहाशा पण्यनारीभिर्मतिभ्रंशास्त्रयो नृणाम् ॥ ५ ॥

इत्यादिशिक्षया शिक्षितोऽपि हसित्वा सुतस्तातमाह—" आम तात पठितेन किं ? पठित्वा को दिवं गतः ? यतः—

बुभुक्षितैर्व्याकरणं न भुज्यते, पिपासितैः काव्यरसो न पीयते ।
न च्छन्दसा केनचिदुध्धृतं कुलं, हिरण्यमेवार्जय निष्फलाः कलाः ॥ १ ॥

किं च—

निगुणमवि गुणड्ढं रूवहीणं वि रम्मं, जडमवि मइमंतं मंदसत्तं पि सूरं ।
अकुलमवि कुलीनं तं पयंपांति लोआ, नवकमलदलच्छी जं पलोए पलच्छी ॥ २ ॥

[illegible] पिता विलक्षश्चेतस्यचिन्तयत्—" अयं च मत्पुत्रो भूत्वा निर्गुणः कुलकलंकरूपः कुशीलः । किं करोमि ?

क्व गच्छामि ? इत्युदासीनवृत्त्या जन्म निर्वाह्य पर्यन्ते पुत्रमाकार्येदमभाषत–" वत्स यद्यपि तव मद्वाक्येऽनास्था, तथाप्येकममुं श्लोकं त्वं गृहाण । एतन्मे कथनं कुरु "। तेनोक्तं–" करिष्याम्यहमेवेति "। पित्रा श्लोकः कथितः । तथाहि—

कृतज्ञस्वामिसंसर्गमुत्तमस्त्रीपरिग्रहम् । कुर्वन्मित्रमलोभं च नरो नैवावसीदति ॥ १ ॥

व्याख्या–यः प्रभुः कृतमुपकारं जानाति, तस्य प्रभोः सेवा कार्या । कुलजा स्त्री भार्या कार्या । निर्लोभं मित्रं कार्यं । एभिस्त्रिभिः प्रकारैर्नरो नावसीदति । इति ॥ १ ॥

एतच्छ्लोकं गृहीत्वा द्यूतस्थाने जगाम । तावन्मित्रेणागत्योक्तं–" भोः प्रभाकर तव पिता विपन्नः । अथ मया किं कर्तव्यं ? " इति श्रुत्वा प्रभाकरो मित्रमूचिवान्–" नाहं जाने किंचित्, यत्कृत्यं भवति तत्त्वयैव कार्यं " । तत्तथा कृते शोके निवृत्ते पित्रादिष्टं श्लोकं निभालयन् " पित्रा यदादिष्टं तद्विपरीते किं स्यात् ? विलोकयामि " इति संचिन्त्य परदेशं प्रतस्थिवान् । मार्गे व्रजन् सिंहाभिधानं ग्रामपतिं श्रुत्वा कृतघ्नं तुच्छप्रकृतिं स्तब्धं तमाश्रयत् । तस्य सेवां चक्रे । तेन तस्यैका दासिका सदाधर्मा नीचा रूक्षाऽज्ञाना गृहे गृहिणी कृता । तथा तत्रैव वास्तव्यो निर्दाक्षिण्योऽर्थैकलुब्धो लोभनन्दिनामा वणिक् मित्रं कृतः । तत्रैव स स्थितो राजसेवां चकार । तेन स्वपराक्रमेण स्वबुध्ध्या च नृपस्य भांडागारो वर्द्धितः । तेन दास्या बहूनि वस्त्राणि आभरणानि च कारितानि । सा च बहु बहु संतोषिता । लोभनन्दी निःस्वोऽपि महर्द्धिः कृतः । अथ तस्य सिंहनृपस्य पुत्रादप्यधिको मयूरकोऽस्ति । स स्वकीयोत्संगे लालितः पालितः पोषितो भूषितश्च । एकदा प्रभाकरस्य दास्या भार्याया गर्भानुभावतो मयूरामिषस्य दोहदो जज्ञे । तदा तेन

प्रभाकरेण ठक्कुरस्य मयूरकं यत्नात् संगोप्यान्यस्य मयूरस्यामिषेण दोहदः पूरितः। अथ भोजनवेलायां ठक्कुरस्तं मयूरमदृष्ट्वा मनुष्यान् प्रेष्य सर्वतो वीक्षयामास। मयूरः कुत्रापि न लब्धः। राज्ञे कथितं। तावता ठक्कुरो भृशमाकुलव्याकुलो जातः। स उच्चैः पटहोद्घोषणां कारयामास—" सिंहनृपस्य मयूरशुद्धिं यः कोऽपि कथयति तस्मै दीनारशतं समर्पयामि "। तच्छ्रुत्वा दास्या चिन्तितं—"अनेन वैदेशिकेन किं? द्रव्यं गृह्णामि। ममान्यो भर्ता भविष्यति "। इति विचिन्त्य सा पटहं स्पृष्ट्वा सिंहनृपान्तिकं गत्वाऽवदत्—"स्वामिन् यथातथं शृणु। यतः—

सत्यं मित्रैः प्रियं स्त्रीभिरलीकमधुरं द्विषा। अनुकूलं च सत्यं च वक्तव्यं स्वामिना सह ॥ १ ॥

स्वामिन् निशि मे मयूरामिषभक्षणे दोहदो जातः। प्रभाकरेण तं मयूर समानीय मयि वारयन्त्यामपि स व्यापादितः। तस्यामिषेण मम दोहदः पूरितः"। तच्छ्रुत्वा सिंहो रुष्टः—"किं महतां संगाद्विनष्टो जातोऽयं वा स्वभावात्"। ततो राजा प्रभाकर निगृहीतुं स्वभटान् प्रैषीत्। सोऽपि मित्रपरीक्षार्थं लोभनन्दिमित्रगृहेऽगमत्। कंपमानांग उवाच—" भो मित्र मां रक्ष रक्ष "। तदा लोभनन्दी तमप्राक्षीत्—"भोः किं त्वया विनाशित?" स उवाच—'कलत्रार्थे मया स्वामिबर्ही विनाशितः'। तच्छ्रुत्वा मित्राधमः प्राह—" स्वामिद्रोहविधायिनः कः स्थानं ददाति? प्रज्वलन्तं पूलकं स्वगृहे को निक्षिपेत्? " एवं वदतो लोभनन्दिनो गृहे यावत्प्रभाकरः प्रविवेश तावल्लोभनन्दिना पूत्कृते। तावता नृपभटा आगताः। तैः स बध्वा बहिर्नीतः। तस्य निग्रहाय ते उद्यताः। तावत्स दैन्यमभाषत—"मया भवतामुपकारः कृतः, मां रक्षत। किं च मां प्रभोरग्रे नयत"। इत्युक्ते तैस्तत्र नीतः सकरुणं जगौ—"देव

त्वं मे पिता स्वामी, त्वमेव शरणं, एकं मदीयं व्यलीकं क्षमस्व"। तच्छ्रुत्वा भृकुटीभंगभीषणः सिंह उक्तवान्—' रे रे दुष्ट मदीयं मयूरमर्पय स्मर चाऽभीष्टदेवतां' तदा मित्रकलत्राभ्यां विनाऽखिलो लोको व्याकुलो जातः। ततः स ऊचे–' मम पितुर्वचनस्यातिक्रमणेनेदृशं फलमभूत् '। पितुरुक्तं वचः पुनः पुनः स्मृत्वा यथास्थितं तं मयूरं समर्प्य सिंहनृपं पल्लीपतिमापृच्छ्य प्रसन्नास्यस्ततोऽचलत्। स सिंहेन बोधितोऽपि नास्थात्। तेनोक्तं—'प्रत्यक्षदृष्टदोषेषु कोऽवस्थितिं करोति ?'। स ततो गच्छंश्चिन्तयामास–" धिगमीषां दुष्टचेष्टितं। खलसंगतिः किंपाकवृक्षच्छायेव दुःखदायिनी। एतेषां यन्मयोपकृतं तदग्निसात्कृतं। नृणां मृत्युरपि श्रेयान्, परं मूर्खदुष्टसंगतिर्न वरा। यतः—

पंडितोऽपि वरं शत्रुर्न मूर्खो हितकारकः। वानरेण हतो राजा विप्रचौरेण रक्षितः ॥ १ ॥

किं च—

शिरसा सुमनःसंगाद्धार्यन्ते तन्तवोऽपि हि। तेऽपि पादेन मृद्यन्ते पटेऽपि मलसंगताः ॥ २ ॥

मयाऽधमानां स्वामिमित्रकलत्राणां परीक्षणं कृतं। इदानीं पितुर्वचः करिष्यामि"। इति विचिन्त्य स क्रमेण गच्छन् सुन्दरपुरं नगरं प्रापत्। तत्र हेमरथो राजा राज्यं करोति। तस्य पुत्रो गुणसुन्दरः कुमारः। स पुरबाह्ये वाह्याली कृत्वा श्रान्तस्तरुच्छायायां भृत्यैः परिवृतः स्थितोऽस्ति। तदा स प्रभाकरः सहसा तत्रागतः। प्रणामः कृतः। राजपुत्रेण तस्य सत्कारसन्मानादिकं दत्तं। स तत्रोपविष्टः। शास्त्रगोष्ठी कृता। राजपुत्रस्तत्र भोजनं कृतवान्। प्रभाकरोऽपि भोजितः। परस्परसंलापमधुरालापः कृतः। यतः—

प्रसन्ना दृग् मनः शुद्धं ललिता वाग् नतं शिरः । सहस्राण्यपि ...

कुमारस्तं प्रभाकरं पप्रच्छ–'कुतः समागतः ? क्व यास्यसि ? क्व कार्यं ?' प्रभाकरेणोक्तं–'देशान्तरादागतः पृथिव्यां कौतुकविलोकनार्थं निर्गतोऽस्मि'। ततो राजपुत्रेणोक्तं–'महाभाग किं भ्रमसि ? मदन्तिके स्वस्थमनास्तिष्ठ'। नृपसूनुनेत्युक्ते प्रभाकरस्तत्र तस्थौ। पुरमध्ये तेन सार्धं स गतः परस्परं मित्रत्वं जातं। प्रभाकरश्चिन्तयति–"अस्याहो चातुर्यं, अस्याहो मधुरं वचः, अस्याहो नयवयस्यौचित्यं, अस्याहो स्वच्छं ज्ञानं। यतः–

बाल्येऽपि मधुराः केपि द्राक्षावत् केऽपि चूतवत्। विपाके न कदापीन्द्रवारुणी फलवत्यहो ॥१॥

आकृतौ हि गुणा नूनं सत्यीभूतमिदं वचः। यस्यैव दर्शनेनापि नेत्रं च सफलीभवेत् ॥२॥

तदस्य सेवयाऽधुना प्राक् कुस्वामिसंगजं दोषमलं क्षालयामि"। इति निश्चित्य तस्य सेवां करोति कुमारार्पितवासवेश्मनि निवसति सुखेन। उत्तमप्रकृतिस्थैर्यगांभीर्यविनयान्विता सुप्रभानाम्नी गेहिनी कृता। तत्र महेभ्यः परोपकारतत्परः सर्वजीवदयापरो गगनताख्यो मित्रं कृतः। सुखेन कालं निनाय।

इतश्च राज्ञि विपन्ने गुणसुन्दरो राजाऽभूत्। प्रभाकरो मंत्री जातः सर्वकार्यकर्ता। तस्य नृपस्य प्रजां पालयत एकदा जात्यतुरंगमौ ढौकनीये कृतौ। तौ सल्लक्षणधरौ, परंतु विपरीतशिक्षितौ। तयोस्तत्स्वरूपमजानन्नृप एकस्मिन् हये स्वयमारूढः द्वितीयेऽमात्यमादिशत्। तौ नृपामात्यौ सपरिवारौ पुराद्बहिर्गतौ। क्षणं वाहयित्वा तयोरश्वयोर्वेगं ज्ञातुं नृपामात्यौ कर्कशं प्रहारं चक्रतुः। ततः सह-

सोत्प्लुत्य वेगतो गन्तुं प्रवृत्तौ । तावता नृपेणोक्तं–'भो भृत्याः शीघ्रं धावत' । एवं जल्पतस्तस्य तौ हयौ शीघ्रगत्या चलितौ । तौ नृपामात्यौ क्षणाददृष्टौ जातौ । यथा यथा नृपामात्यौ वल्गामाकर्षयतः तथा तथा तौ तुरंगमौ शीघ्रगत्या गच्छतः। तस्मिन् प्रस्तावे महाटव्यामामलकीतरोरधो गच्छताऽमात्येनामलकत्रयमात्तं । तदनन्तरं तौ दूरं गतौ विलक्षीभूतौ वल्गां मुमुचतुः । तावदश्वौ तत्रैव संस्थितौ । नृपामात्यावुत्तीर्णौ । वाजिनौ प्राणमुक्तौ जातौ । क्षणमेकं तयोः खेदं धृत्वा तरुच्छायायां स्थितौ नृपस्तृपया पीडितो मनस्येवमचिन्तयत्—

"पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढः पाषाणखंडेषु रत्नसंज्ञाऽभिधीयते ॥ १ ॥

ध्रुवं सत्यमिदं वाक्यं यत्पर्याणे तनौ च मे । सत्स्वप्येतेषु रत्नेषु तृष्णा शाम्यति नाधुना ॥ २ ॥"

नृपोऽमात्यमुवाच–'तृपया ममासवो यान्ति' । तदा व्याकुलो मंत्र्युवाच–'स्वामिन् तव तृषां वारयामि' इत्युक्त्वैकमामलकं ददौ । नृपस्तद्भक्षणेन क्षणं स्वस्थो जातः । मुहूर्तानन्तरं भूयस्तापार्दितः प्राह–' भो मंत्रिन् पुनस्तथैव संप्रति मां तृष्णा बाधते, यथा नूनं न जीव्यते' । इति वदन् मूर्छां गतोऽपतत् । मंत्रिणाऽऽशु द्वितीयामलकं दत्वा पुनर्नृपः सज्जीकृतः । एवं तृतीयवेलाया-मप्यामलकमर्पितं ।

इतश्च पृष्ठे पदानुलग्नं सैन्यमागतं । अग्रेसराश्ववारैस्तौ दृष्ट्वा जयध्वनिश्चक्रे । तदा मंत्रिणोचे–' भो भटास्तावन्नीरमानीयतां' । ततस्तैर्व्याघुट्य तदानीतं । जलाहारसंतुष्टो महीपतिः सज्जीचक्रे । राजाऽथ सपरिवारो निजं नगरं जगाम । सामन्तनागराः पुना राज्ञो जन्मोत्सवं चक्रुः ।

अथ राज्ञः सुतः सालंकारः पञ्चवर्षीयो नृपमन्दिरात् क्रीडार्थं नित्यं प्रधानगृहे समायाति । अथैकदा स्वस्वामिपरीक्षार्थं तं कुमारं गोपयित्वा स्वगृहे एकान्ते गोपयामास । तथा नृपस्य भोजनवेला जाता । कुमारो नेक्ष्यते । सर्वत्र विलोकयामास । यावत्तत्रापि न लब्धस्तावत् शोकव्याकुलो राजाऽधोमुखीभूय तस्थिवान् । मनसि दध्यौ–' कुमारो मन्त्रिमन्दिरं गतः, ततः पश्चान्न दृष्टः । इदमसंभाव्यं किं संभाव्यते ? ' । राजलोकः समग्रोऽपि शोकाकुलो जातः । प्रभाकरो मंत्री विषण्णवदनः स्वगृहेऽस्थात्, राजसभायां न गतः । तदा मंत्रिपत्नी पतिं पप्रच्छ–' भो अद्य राजकुले कथं न गतः ? ' । ततोऽमात्यः सदुःखमिवाब्रवीत्–" प्रिये भूपतेरात्ममुखं दर्शयितुं न शक्नोमि, येन मया पापबुद्धिना तादृशो नृपपुत्रो जघ्ने " । ततः सा संभ्रान्ता जगौ–'स्वामिन् किमिदं जल्पसि ? ' । पुनस्तेनोक्तं–' एतन्मया कृतं ' । तेनेत्युक्ते सा पुनरवोचत्–'इदं कथंकार ? ' । सोऽवोचत्–"त्वया गर्भानुभावेन गतदिने पलं प्रार्थितं । मयाऽन्यत्र पलं न प्राप्तं । तस्मादेष नृपांगजो व्यापादितः । तन्मांसं तवार्पितं । त्वया च भक्षितं । त्वन्मोहान्मयेदृशं कर्म कृतं " । तच्छ्रुत्वा साऽवदत्–" स्वामिन् धैर्यं कुरु । अहं नृपस्य प्रत्युत्तरं दास्ये । यूयं गृहमध्ये एकान्ते तिष्ठत " । अत्रान्तरे भर्तृमित्रस्य वसन्तस्य गृहे गत्वा तत्सर्वमाख्यातं । सोऽपि विमृश्य धैर्यं कृत्वाऽब्रवीत्—" अयि सुन्दरि मा भैषीः । अहं स्वजीवितेन धनेन च निजमित्रस्य विपदं रक्षाम्येव । यतः—

क्षीरेणात्मगतोदकाय सकला दत्ता निजा ये गुणाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनास्तदभवद् दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ १ ॥

इति निशि योत्थाय राजकुले गत्वा नरेश्वरं नत्वा वसन्ताख्यः कृताञ्जलिः सारंभं व्यजिज्ञपत्—" नरेन्द्र विकल्पं मा

कार्षीः, त्वत्पुत्रो मया व्यापादितः, अतो हेतोर्मम वित्तं जीवितं च गृहाण "। नृपतिरिदं निशम्य हृदि संशयितः । तावन्मंत्रिपत्नी समागत्यैवं व्यज्ञपयत्—'स्वामिन् मया मद्दोहदस्यार्थे त्वत्पुत्रस्य वधः कृतः'। तदा नृपः किंकर्तव्यतामूढः शून्य इवाभवत्। ततो मंत्री समागत्य कंपमानांग इवावदत्—"देव पत्नीमित्रयोर्नापराधः। मदीयपीडया स्वमपराधं कथयतः। इदं दुष्कर्म मया समाचरितं। मया दुर्मतिना कुमारो निहतः। मम योग्यं दंडं कुरुष्व"। तदा नृपतिना विमृश्योक्तं—"मित्र तदा विपदि धात्रीफलानि नार्पयिष्यस्तर्हि क्वाहं? क्व राज्यं? क्व सुतः? क्व परिच्छदः? तव को दंडः?"। मंत्र्याह—'प्रभो पुत्रहनने मद्दंडो युक्त एव'। नृपेणोक्तं—'एव चेत्तर्हि त्रयामलकमध्यादेकामलकं वलितं'। अमात्येन नृपस्य निश्चय ज्ञात्वा निजान्नरान् प्रेष्य नृपांगजमानाययत्। प्रधानेनोक्तं—"हे स्वामिन् कुमारेण सह त्वं चिरकालं राज्यं कुरु। राजसुखं भुंक्ष्व"। तदनन्तरं नृपो भूपितांगं स्मितमुखं ललमानं तं सुतं दृष्ट्वा सविस्मयो हर्षं प्राप। राज्ञोक्तं - 'किमेतत्?'। मंत्री लोकसमक्षं पितुरादेशादारभ्याखिलवृत्तान्तमाख्यातवान्। राजा तन्निशम्य भृशं सत्स्वभावतो लज्जितः। मंत्रिणं करे कृत्वा सस्नेहमब्रवीत्—"त्वं मम बन्धुः, तवोपकारं कथमपि नो विस्मरेयं, त्वं निश्चिंतमनाः सुखेन तिष्ठ, सौख्यं भुंक्ष्व"। ततोऽसौ सुस्वामिसुकलत्रसुमित्रजं सुखं लब्ध्वा सुखमन्वभूत्। ततो भूपसचिवौ सत्संगतत्परौ राज्यं भुक्त्वा सद्गुरोर्धर्ममासाद्य पर्यन्तेऽनशनं प्राप्य दिवं गतौ ॥

॥ इति प्रभाकरदृष्टांतः ॥

इत्थं तदुपदेशं निशम्य कुबेरः प्रतिबुद्धो गुरुमुवाच—"हेभगवन् स्तोकाक्षरैः पुनरपि घनं धर्मस्वरूपं समीहितं समादिशतु'। गुरवोऽप्यूचुः—' महाभाग तत्त्वं त्वं शृणु। तथाहि—

विनयः सुव्रताचारो गुरौ धर्मोपदेशके। शुश्रुषा प्रणतिश्चाज्ञामाननं मृदुभाषणम् ॥ १ ॥
विवेको जिनपूजादौ मनोवाक्कायशोधनम्। सुसंगस्त्वेष यो धर्ममित्रेण सह संगमः ॥ २ ॥
सुतत्त्वं च जिनाख्यातं तत्त्वश्रद्धाननिश्चयम्। लोकोत्तरगुणैरेवं भवेल्लोकोत्तरं सुखम् ॥ ३ ॥

तथा चाह—

अत्याहारस्तथायासः प्रजल्पोऽनियमग्रहः। लोकसंगश्च दैन्यं च षड्भिर्योगी विवर्जितः ॥ ४ ॥
क्रियायां भवेद्योगी वागुच्चारणमात्रतः। कुतः कस्याह्वयेनैव चारित्रं न हि सीदति ॥ ५ ॥
भूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः। समः सर्वेषु भूतेषु न लिंगं तत्र कारणम् ॥ ६ ॥

पुनरपि कुबेरोऽवदत्—' भगवन् को देवः ? को गुरुः ? को धर्मः ? ' गुरुरेवं प्राह—"महानुभाग त्वं शृणु—

वीतरागो जिनो देवो रागद्वेषविवर्जितः। हतमोहमहामल्लः केवलज्ञानदर्शनः ॥ १ ॥
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थप्रदेशकः। कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ॥ २ ॥
द्रव्यपूजा जिनेन्द्रस्य गन्धपुष्पाक्षतादिभिः। तथा तद्बिम्बपूजादौ कर्तव्यं द्रव्ययोजनम् ॥ ३ ॥

भावपूजा तु सर्वज्ञे व्रतरूपा प्रकीर्तिता । देशसर्वविरत्या या भेदतस्तत्पुनर्द्विधा ॥ ४ ॥
तत्र देशव्रतं जीवहिंसादीनां प्रदेशतः । निषेधेन सर्वथा तु स्यात्सर्वविरतिव्रतम् ॥ ५ ॥
जीवाजीवौ तथा पुण्यं पापमाश्रवसंवरौ । बन्धश्च निर्जरा मोक्षो नव तत्त्वानि तन्मते ॥ ६ ॥
तत्र जीवः कर्मकर्ता भोक्ता कर्मफलस्य च । चैतन्यलक्षणस्तस्मादजीवो वैपरीत्यभाक् ॥ ७ ॥
सत्कर्मपुद्गलाः पुण्यं पापं त्वेतद्विपर्ययः । आश्रवश्चित्तवाक्कायव्यापारा बन्धहेतवः ॥ ८ ॥
संवरस्तन्निरोधेन तथा जीवस्य कर्मणा । यः संबन्धस्तयोरैक्यं स बन्धस्तत्प्रकीर्तितः ॥ ९ ॥
बद्धस्य कर्मणः सादो यतस्तु निर्जरा मता । आत्यन्तिको वियोगश्च देहादेर्मोक्ष उच्यते ॥ १० ॥
एतानि नव तत्त्वानि यः श्रद्धते स्थिराशयः । सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥ ११ ॥

इति सिद्धान्तेऽप्युक्तम्—

नाणं पयासयं सोहओ तवसंजमो अ गुत्तिकरो । तिन्नं पि समाओगे मुक्खो जिणसासणे भणिओ ॥

१ नाश॰

गतपंकं यथा तुंबं जले यात्युपरि स्वयम् । क्षीणकर्ममलो जीवस्तथा याति शिवालयम् ॥ १३ ॥
इत्याराध्यो वीतरागो गुरुस्तत्त्वोपदेशकः । दयामूलस्तु धर्मो यस्तत्फलं त्वपुनर्भवः ॥ १४ ॥"

इत्थं तत्त्वोपदेशं निशम्य कुबेरः प्रतिबोधं प्राप्तः । नृपोऽपि प्रतिबुद्धः । मुनिं नत्वा स्वगृहं ययौ । वज्रवीर्यनृपः स्वांगजाय वज्रनाभकुमाराय योग्यं ज्ञात्वा राज्यं दत्वा पत्न्या सह कुबेरेण च सह व्रतमुपाददे । वज्रनाभो नृपो न्यायेन महीमपालयत् । तस्य विजयाकुक्षिसमुद्भवश्चक्रायुधाभिधः सुतः समजनि । सोऽपि क्रमेण यौवनं प्राप्तः । युवराजपदवीं प्राप्तवान् । अन्यदा नृपो वातायनस्थितः शुभध्यानं ध्यायन् जातिस्मरणं प्राप्तवान् । पूर्वभवपालितं चारित्रं सस्मार । तदा स स्वधिया दध्यौ—" अहो भवसमुद्रस्य वीचिभिः को न भ्राम्यति । एके उत्पद्यन्ते, एके विलीयन्ते, एके गायन्ति, एके रुदन्ति, एके हसन्ति, एके विलपन्ति । ज्वलति ज्वलने कृती अल्पभारं बहुमूल्यं च यत्कर्षति तद्भव्यं । अत एव समुद्रावगाहने चारित्रयानाधारं विना भवजलधिः कथं तरीतुं शक्यते "। इति वैराग्यरंगरंगितो नृपतिर्व्रतं जिघृक्षुः पुत्रं मित्रमिवाकार्य स्वाभिप्रायमचिकथत । तदा चक्रायुधोऽब्रवीत्—" ताताहं त्वत्पादसेवाग्रणीरस्मि । अधुना कः प्रस्तावः । व्रतं पश्चिमे वयसि युक्तं । इदानीं लोकस्य लालनं मम च पालनं युज्यते" । ततो नृपः प्राह—"वत्स को वेत्ति पश्चिमं प्रथमं वा वयः ? मा त्वं ममान्तरायकृद्भव । चर्वितचर्वणैः किं ? त्वं पूर्वक्रमागतं राज्यभारं निधेहि । यथाऽहं तव साहाय्यात् स्वार्थसाधको भवेयं " । इत्युक्त्वा तं सुतं मौनपरं राज्ये निवेश्य क्षेमंकरजिनान्तिके परिव्रज्यामुपाददे । स मुनिर्बाह्यं राज्यं परित्यज्यान्तरंगराज्यं धर्ममाददे । यस्य विरतिर्भार्या, संवेगोऽङ्गजः, विवेकोऽमात्यः, विनयस्तुरंगमः, आर्जवं पट्टहस्ती, शीलांगनामा रथः, शमदमादयो भृत्याः, सम्यक्त्वं सौधः, सन्तोषः सिंहासनं, यशश्छत्रं तु विस्तृतं, धर्मध्यानशुक्लध्याने सुचामरे उभे । एवंविधमन्तरंगरा

ज्यं पालयन् गुर्वनुज्ञयैकाकिविहारप्रतिमां दधौ । स दुस्तपस्तपस्तपति । तपसोऽनुभावाद्व्योमगमनलब्धिर्जाता । अन्येद्युर्विहारं कुर्वन् आकाशगत्या सुकच्छविजयं ययौ ।

अथ सोऽप्यहिजीवो नरकादुद्वृत्य भवं भ्रमन् ज्वलनाद्रौ सुकच्छविजये कुरंगकनामा भिल्लोऽभूत् । प्रत्यक्षपापपिंडरूपः कराालो मषीनिभो बहून् जीवान् हिंसन् संहरन् प्राणवृत्तिं करोति । तदा श्रीवज्रनाभमुनीन्द्र एकदा कर्मवशाद्भवितव्यतावशाद्वा तत्रैव ज्वलनाद्रौ रात्रौ कायोत्सर्गेण तस्थिवान् । तत्र ध्वान्ते सर्वत्र व्याप्तेऽतिभीषणैर्घूघूकारघूत्कारैः द्वीपिनां फू(बू)त्कारैः शिवारवैः कुर्वैः भूतव्यन्तरकृताट्टहासैरविभ्यत् सुतरां हृदि दीप्यमानध्यानप्रदीपकः स मुनिर्धर्मजागरणेन तस्थौ । इतः प्रातः कुरंगकपुलिंदेन पापर्द्धिव्यग्रेण स मुनिर्ददृशे । तदा स पापरूपः पापिष्ठः प्राच्यद्वेषवशात्स्फूर्जत्कोपः ' प्रातरयमनिष्टः ' इति ध्यात्वा शरेण हत्वा भिल्लस्तं मुनीश्वरं भुवि न्यपातयत् । गाढप्रहारेणार्तोऽपि आर्तध्यानरौद्रध्यानपरो मनागपि नाभूत् । मनसि च दध्यौ—"सहस्व रे जीव तवैवेदं पुराकृतं कर्म । यतः—

उपेक्ष्य लोष्ठक्षेप्तारं लोष्ठं दृष्ट्वाति मंडलः[1] । सिंहस्तु शरमप्रेक्ष्य शरक्षेप्तारमीक्षते ॥ १ ॥

उपदेशमालायाम्—

पत्थरेणाहओ कीवो पत्थरं डक्कुमिच्छइ । मिगारि उ सरं पप्प सरुप्पत्तिं विमग्गइ ॥ २ ॥

---

१ मण्डलः श्वा.

पञ्चनमस्कारं स्मृत्वा सम्यगालोचनां कृत्वाऽनशनं चकार । तद्यथा—" चत्तारि सरणं पवज्जामि, अरिहंता सरणं, सिद्धा सरणं, साहू सरणं, केवलिभासिअधम्मं सरणं पवज्जामि । तहा पच्चक्खामि हं अट्ठारसपावठाणाणं । तं जहा—

पाणाइवाय १ मलियं २ चोरिक्कं ३ मेहुणं ४ दविणमुच्छं ५ ।
कोहं ६ माणं ७ मायं ८ लोहं ९ पिज्जं १० तहा दोसं ११ ॥ १ ॥
कलहं १२ अभक्खाणं १३ पेसुन्नं १४ अरइरइसमाउत्तं १५ ।
परपरिवायं १६ मायामोसं १७ मिच्छत्तसल्लं १८ च ॥ २ ॥

इमाइं अट्ठारसपावठाणाइं वोसिरामि त्ति " । तथा " नमोत्थुणं अरिहंताणं भगवंताणं इच्चाइ नमोत्थुणं मम धम्मायरियस्स धम्मोवदेसगस्सावि" इत्यादि ध्यायन् एकाग्रमनाः शुभं ध्यानं ध्यायन् समाधिमृत्युना मृत्वा मध्यग्रैवेयके आनन्दसागरनाम्नि विमाने ललितांगाभिधः सुरो निर्मलानन्दमग्नमानसः संजातः । तत्र सप्तविंशतिसागराण्यायुर्भुक्तवान् । स पुलिन्दः स्वं धनुर्धरोत्तमं मन्यमानः कियता कालेन विपद्य सप्तमायनौ तमःतमःप्रभायां पृथिव्यां नारकः समजनि ॥ इति ॥

गुरुश्रीहेमविमलतनुद्युतिविधायकः । पार्श्वनाथो जिनो वः स्तान्मनोवाञ्छितसिद्धये ॥ १ ॥

इति श्रीतपागच्छनायकश्रीपूज्यश्रीजगचन्द्रसूरिपट्टपरंपरालंकारश्रीपूज्यश्रीहेमविमलसूरिसंतानीयश्रीहेमसोमसूरिविजयराज्ये पंडितश्रीसंघवीरगणिशिष्यपंडितश्रीउदयवीरगणिविरचिते श्रीपार्श्वनाथ-गद्यबन्धलघुचरित्रे पष्ठसप्तमभववर्णनो नाम तृतीयसर्गः ॥

पार्श्वनाथचरित्रस्य सर्गस्तृतीय एव च। पंडितोदयवीरेण गद्यबन्धेन निर्मितः ॥ १ ॥

# अथ चतुर्थः सर्गः ।

वाग्वादिन्यै नमः ॥

श्रीपार्श्वनाथं प्रणिपत्य देवं श्रीसंघवीरं कृतसंघहर्षम् ।
पार्श्वचरित्रस्य सुबोधनार्थं सर्गं तुरीयं सुगमं विधास्ये ॥ १ ॥

अथास्मिन् जंबूद्वीपे पूर्वमहाविदेहे क्षेत्रे देवपुरसमं सुरपुरं नाम नगरमस्ति । द्वादशयोजनायामं नवयोजनविस्तृतं । तत्र लोकाः सज्जना निवसन्ति । यतः—

निर्दयाः पापसंहारे निर्दाक्षिण्याः स्वजीविते । लुब्धा यशसि दोषेभ्यो भीरवो यत्र पूरुषाः ॥ १ ॥

तत्रोज्ज्वलयशसा पूर्णचन्द्रनिर्मलीकृतदिङ्मुखः श्रीवज्रबाहुमहीपतिः राज्यं करोति । स कीदृशः ?—

अकलंको दृढः शुद्धः परिवारगुणान्वितः । यः सर्वनृपतिमौल्यमंडनो भुवनत्रये ॥ १ ॥

चातुर्यौदार्यगांभीर्यस्थैर्यप्रमुखका गुणाः । यस्याश्रिताः शुभाः सर्वे पवनस्येव पादपाः ॥ २ ॥

तस्य नृपते रूपलावण्यमाधुर्यचारुचातुर्यलज्जाविनयादिगुणशालिनी सुदर्शना नामतो रूपतोऽपि पत्नी पट्टराज्ञी समस्ति । तौ

दंपती अन्योऽन्यप्रेमरसेन संपृक्तौ वैषयिकं पञ्चेन्द्रियसुखं भुंक्तः। अथ मध्यग्रैवेयकात् काले वज्रनाभजीवोऽमरश्च्युतः सुदर्शनाकुक्षि-शुक्तौ मुक्ताफलवदवतीर्णवान्। ततो राज्ञी निशीथे शयनस्थिता चक्रवर्तिजन्मसूचकान् चतुर्दश महास्वप्नान् ददर्श। ततः प्रभाते स्वप्नपाठकैः स्वप्नविचारज्ञैः स्वप्नविचारं कृत्वोक्तं–'नरेन्द्र तव पुत्रः षट्खंडाधिपश्चक्रवर्ती भविष्यति'। तच्छ्रुत्वा हर्षिता दिनान्यत्यवाहयत्। सा समये प्राची दिवाकरमिव सुतमसूत। महीयसा महामहोत्सवेन जन्मोत्सवं कृत्वा सुवर्णबाहुरित्यभिधानं तस्य निर्ममे। अंकादंकमारोपात् सर्वे राजानो बालधारका बभूवुः। स सर्वसल्लक्षणः सर्वगुणधरो द्वितीयाचन्द्रवद्वृद्धिं प्राप्तः। समुद्रसदृशे तस्मिन् कला नद्य इवाविशन्। स बाल्यमुल्लंघ्य प्रोच्चैर्यौवनं युवतिजनमनोनिविडप्रेमवनं प्राप। भानुवत्सर्वदोद्योतवान समजनि। तदा भवोद्विग्नः स वज्रनाभमहीपतिस्तं सुतं राज्यभारक्षमं ज्ञात्वा सुतस्य राज्यभारमारोप्य स्वयं प्रव्रज्यां जगृहे। स निरतिचारं चारु चरित्रं प्रतिपाल्य पञ्चमज्ञानं प्राप्य पञ्चमीं गतिं प्राप।

सुवर्णबाहुः क्षमाधीशः स्वराज्यं पालयामास। स कीदृशः ?

> व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः। आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥१॥
> भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्। अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णव ॥२॥

तस्य राज्यमनुपालयतः सप्तेतयो न कदाचिदपि प्रादुर्बभूवुः। ता यथा—

> अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः। स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥१॥

लोकाः सर्वेऽपि मुदिता अभूवन् । अथान्यदा वसन्त ऋतुराट् समागतः । अनेके पादपाः पल्लविताः पुष्पिताश्च । यतः—

रेजे वसन्तसमयो यत्र पल्लविता घनाः । एलालवंगकर्पूरपूगाद्या विलसन्त्यगाः ॥ १ ॥
कदलीलवलीद्राक्षानागवल्लीप्रियंगवः । वासन्त्याद्या लताः कंप्रैर्नृत्यन्तीवाग्रपल्लवैः ॥ २ ॥
मालती यूथिका मल्ली केतकी माधवी लता । चंपकाद्या हसन्तीव विकाशिकुसुमच्छलात् ॥ ३ ॥

तस्मिन् समये वनपालक आरामिकस्तस्य नृपस्य सदसि समागत्य प्रोक्तवान्—'प्रभो वने वसन्तर्तुः क्रीडति'। तन्निशम्य नृपस्तस्य पारितोपिकं दत्वा वने वसन्तक्रीडायै ययौ । तत्र कदलीगृहे माधवीमंडपेषु क्रीडां करोति । कदाप्यश्वक्रीडारतः, कदापि करिक्रीडारतः, कदापि जलक्रीडारतः, कदापि मल्लक्रीडारतः, कदाप्यक्षक्रीडारतः, कदापि हास्यक्रीडारतः कदापि नाट्यक्रीडारतः, कदापि गीतश्रवणादिक्रीडारतः, कदापि चतुरशीतिकासनैः सुरतक्रीडारतः, इत्यादिविविधप्रकारैर्वसन्तक्रीडां चकार ॥

एकदा वनेऽश्वक्रीडां कुर्वन्नस्ति । तदैकः करी चतुर्दशनो जंगमरजतगिरिरिव रजताभो गर्जारवं कुर्वन् दृष्टः । नृपस्तत्संमुखं प्रधावितः । यथा यथा करी याति तथा तथा नृपोऽपि तत्पृष्ठौ (ष्ठे) याति । यदा नृप उत्प्लुत्य हस्तिनमारुरोह स करी तदा नृपं गृहीत्वा नभसि समुत्पपात । वैताढ्याद्रौ गत्वा नगरासन्नवने नृपं मुक्त्वा नगरे गतः । तत्र मणिचूडनृपस्योत्तरश्रेणीश्वरस्य वर्धापनिका दत्ता—'स्वामिन् सुवर्णबाहुनृपतिरत्रानीतः वने मुक्तः । अथाहं न जाने'। नृपस्तस्य पारितोपिकं दत्त्वा विमानमारुह्य तत्रागतः । नमस्कृत्योक्तं—'प्रभो पुरे पादाववधार्येतां'। सुवर्णबाहुनरेश्वरो बहुमानेन नगरमध्ये गतः । तत्र तेन विद्याधरपतिनोक्तं—"मम पद्मावती नामांगजास्ति । तस्याः सहस्रमिताः सख्यः सन्ति । ताभिर्विमृश्य परस्परमुक्तं—आत्मनो वियोगो मा भूदत एव सर्वाभिरेक एव

पतिर्वरणीयः सर्वासामेक एव पतिर्भवतु इति। तज्ज्ञात्वा मया नैमित्तिकः पृष्टः—एतासां कः पतिर्भावीति । ततो ज्ञानवान्नैमित्तिकोऽप्याह—राजन् सुरपुरे नगरे सुवर्णबाहुश्चक्री षट्खंडाधिपतिः पतिर्भावीति निशम्य मया गजरूपेणापहृत्यात्रानीतः " । तदा सुवर्णबाहुभूपतिस्तासां प्राणिग्रहणं करोति । तत्रान्यैरपि खेचरैः स्वकीयांगजानां पाणिग्रहणं कारितं । दक्षिणश्रेणीपतिना रत्नचूडविद्याधरेश्वरेणापि स्वकीयांगजा दत्ता । तत्रस्थैरन्यैरपि खेचरैः बह्व्यः कन्या दत्ताः । तत्र पञ्चसहस्रमिताः कन्याः परिणीताः । यतः—

' गुणैः स्थानच्युतस्यापि जायते महिमा महान् । अपि भ्रष्टं तरोः पुष्पं जनैः शिरसि धार्यते ॥ १ ॥

अथ सौभाग्यभाग्यभोगभूः सुवर्णबाहुनृपतिः पद्मावत्यादिपत्नीभिः समस्ताभिः समन्वितो बहुविद्याधरपरिवारपरिवृतो निजपुरं प्राप । तस्य महीशक्रस्य विधिना महीं शासतश्चतुर्दश महारत्नानि क्रमशोऽभूवन् । तद्यथा—

चक्रचर्मच्छत्रदंडाः कृपाणिः काकिणि (णी) मणिः । गजाश्वगृहसेनानीपुरोधःस्थपतिस्त्रियः ॥ १ ॥

तदा महामहोत्साहेन राज्ञाऽष्टाहिकामहोत्सवः कृतः । तदा स नृपश्चक्रवर्ती जातः । अथान्यदायुधशालातश्चक्ररत्नं पूर्वस्यां दिशि प्रस्थितं । चक्रवर्ती ससैन्यो दिग्विजयार्थं निर्गतः। क्रमेण व्रजन्नब्धौ मागधतीर्थमासाद्य कृताष्टमतपा मागधतीर्थेश्वरं प्रति बाणमक्षिपत् । मागधेशः समासीनस्तं बाणं पुरः पतितं दृष्ट्वा 'अरे कस्य वराकस्य यमः क्रुद्धः !' इति ब्रुवन् रुषा तं बाणमग्रहीत् । तत्र चक्रिनाम वीक्ष्य शान्तकोपो जातः । तत्रोपदापाणिरेत्यानमत् । आह च—' ते भृत्योऽस्म्यहं ' । चक्री सत्कारपूर्वकं तं विसृज्य कृतपारणोऽष्टाहिकोत्सवं चक्रे । एष चक्रवर्तिविधिरेव । एवं सर्वत्राप्यधिदेवानष्टमतपसा बाणमोचनेन वशीकुर्वन् दक्षिणस्यां दिशि वरदामप्रभाससुरं तथैव वशीचक्रे । तथा सिन्धुसुरमपि नृपः क्रमाद्वशीचक्रे । तथा वैताढ्यगिरिमेत्य सैन्यं स्थापयामास । सेनान्यं प्रेष्य

सिन्धोः परखंडमसाधयत्। वैताढ्यासन्नं कृतमालं यक्षं तमिस्रागुहाधिपं जित्वा सेनान्या दंडरत्नेन द्वारमुदघाटयत्। ततश्चक्री कुंभ्यारूढ उभयतो भित्त्यां काकिण्या मंडलावलीं लिखन् गुहायां विवेश। तदुद्योतमनु सैन्यमपि चचाल। निम्नगोन्निम्नगे नद्यौ सुखेनोदतरत्। पञ्चाशद्योजनां तां गुहामुल्लंघ्य स्वयमुद्घटितदिव्यद्वारेण चक्री बहिर्निरगात्। तत्रापाताह्वयजातिम्लेच्छभूपान्निर्जित्य लीलया त्रीणि खंडानि साधयामास। क्षुद्रहिमवत्कुमारं जित्वा ऋषभकूटे काकिण्या निजाभिधां लिखित्वा खंडप्रपातां गुहां प्रविश्य पुनर्वैताढ्यमगमत्। तत्र दक्षिणोत्तरश्रेणीद्वयविद्याधरान् जित्वा गंगाया उत्तरखंड सेनान्या साधयामास। गंगादेवीं च वशीचक्रे। नव निधानानि प्रादुरभूवुः। एवं स्वर्णबाहुचक्रवर्ती षट्खंडक्षोणीमंडलं स्वायत्तं कृत्वा व्यावृत्य निजं पुरमगात्। त मुदितैर्भूपसुरैर्महामहोत्सवेन निर्भरं तीर्थांभोभिरभिषेकपूर्वं द्वादशाब्दिको महाराज्याभिषेकश्चक्रे। द्वात्रिंशत्सहस्राणि राजानस्तस्य सेवका बभूवुः। चतुःषष्टिसहस्राणि राज्योऽभूवन्। चतुरशीतिलक्षा हस्तिनो वाजिनो बभूवुः। षण्णवतिकोटयो ग्रामाः, एवमादिसमग्राभिश्चक्रवर्तिविभूतिभिः स निजयी विजयावनिं चिरं पालयामास। बहूनि पूर्वलक्षाणि संजातानि ( व्यतीतानि ) ॥

अन्येद्युर्निजभाग्यमिवोत्तुंगे प्रासादे सुस्थितोऽम्बरे देवानपश्यत्। तन्मुखाज्जगन्नाथं तीर्थंकरमुपागतमश्रौषीत्। तदा नरपतिः श्वेतपक्षागमेऽम्भोधिरिवोल्लासं भृशं दधौ। " स देशो धन्यः, तत्पुरं धन्य, यत्र तीर्थंकरागमः। स वासरः सल्लक्षणधरो धन्यः, यत्र प्रभुर्वन्द्यते " इति ध्यायन् धराधीशो जिनेन्द्रं वन्दितुं ययौ। उपानत्खड्गमुकुटच्छत्रचामरलक्षणं राजचिह्नपञ्चकं दूरे मुक्त्वा तं जिनेश्वरं ननाम। यथास्थानं निषद्य जिनवदनघनघनोद्भूतदेशनाजलं पपौ। तथाहि—

सम्मत्तं १ सामाइअं २ संतोसो ३ संजमो ४ अ सज्झायं ५।

पंच सया राज़स्स न पयारो तस्स संसारो ॥ १ ॥

तत्र प्रथमं निरतिचारं सम्यक्त्वं पालनीयं। सर्वप्रकारेण मिथ्यात्वं त्याज्यं। तन्मिथ्यात्वं द्विविधं लौकिकं लोकोत्तरं च। उभयमपि द्विविधं देवविषयं गुरुविषयं चेति। तद्यथा–हरिहरब्रह्मादिभवनेषु गमनं प्रणामपूजादिकं च १। कार्यारंभे हट्टोपवेशनादौ लाभाद्यर्थं विनायकादीनां नामग्रहणं २। चन्द्ररोहिण्योर्गीतगानादि ३। विवाहे विनायकस्थापना ४। पुत्रजन्मादौ षष्ठीदिने षष्ठीदेवतापूजादि ५। विवाहे मातृणां स्थापनं ६। चंडिकादीनामुपयाचितकरणं ७। तुलादिराशिग्रहाणां पूजनं ८। चन्द्रसूर्यग्रहणे व्यतीपातादिके च विशेषतः स्नानदानपूजादि ९। पितृणां पिंडप्रदानं १०। रेवन्तपथदेवयोः पूजनं ११। क्षेत्रे सीतायाः हलदेवतायाः कर्पासमारंभेऽर्चनं १२। पुत्रादिजन्मनि मातृणां शरावाणां चूडानामकानां भरणं (पूजनं) १३। स्वर्णरूप्यरंगि (जि) तवस्त्रपरिधानदिने सोनिणिरूपिणिरंगिणिदेवताविशेषानाश्रित्य विशेषपूजा लाहणकादीनां दानं च १४। मृतकार्थं जलाञ्जलितिलदर्भजलघटदानादि १५। नदीतीर्थादौ मृतकदाहः १६। मृतकार्थं षंडविवाहः १७। धर्मार्थं सपत्नीपूर्वजपितृणां प्रतिमाकारणं १८। भूतानां शरावदानं १९। श्राद्धद्वादशाहिकमासिकषाण्मासिकसांवत्सरिककरणं २०। प्रपादानं २१। कुमारिकाभोजनवस्त्रदानं २२। धर्मार्थं परकीयकन्यायाः पाणिग्रहणकारणं २३। नानायज्ञविधापनं २४। लौकिकतीर्थे यात्रोपयाचिततुंडमुंडनांकदापनादि २५। तद्यात्रानिमित्तभोजनादि २६। धर्मार्थं कूपादिकखननं २७। क्षेत्रादौ गोचरदानं २८। पितृणां निमित्तं हंतकारदानं २९। काकमार्जारादीनां पिंडिकादानं ३०। पिप्पलनिंबवटाम्रादिवृक्षारोपणसेचनादि ३१। षंडांकनपूजनादि ३२। गोपुच्छपूजादि ३३। शीत-

१ 'तोगलामातादि' इति पाठांतरं।

काले धर्मार्थमग्निप्रज्वालनं ३४। उम्बराम्लिनींबूह्लादिपूजनं ३५। राधाकृष्णादिरूपकारिनटप्रेक्षणाद्यवलोकनं ३६। सूर्यसंक्रान्तिदिने विशेषपूजास्नानदानादि ३७। आदित्यसोमवारादिष्वेकभक्तादि ३८। उत्तरायणदिने विशेषेण स्नानादि ३९। शनिवारे पूजार्थं विशेषतस्तिलतैलप्रदानस्नपनादि ४०। कार्तिके स्नानं ४१। माघे स्नानं घृतकंबलदानादि ४२। धर्मार्थं चैत्रे सांवत्सरिकदानं नवरात्रकरणं च ४३। आजाप्रतिपद्दिने गोर्हिसादि च ४४। भ्रातृद्वितीयाकरणं ४५। शुक्लद्वितीयायां चन्द्रं प्रति दशिकादानं ४६। माघशुक्लतृतीयायां गौरीभक्तं ४७। अक्षयतृतीयादिनेऽकर्तनं लाहनकादिदानं ४८। भाद्रपदे कृष्णा कज्जलतृतीया शुक्ला तु हरितालिका, तयोः कज्जलीदेवतापूजादि ४९। आश्विनशुक्लगोमयतृतीया ५०। मार्गशीर्षमाघकृष्णपक्षयोर्गणेशचतुर्थ्यामिन्दूदयेऽदनादि ५१। श्रावणशुक्लनागपञ्चम्यां नागपूजनादि ५२। पञ्चम्यादितिथिषु दध्यवलोडनादि कर्तनादि च ५३। माघशुक्लषष्ठ्यां सूर्यरथयात्रा ५४। श्रावणे शुक्ला चन्दनषष्ठी ५५। भाद्रपदशुक्ले सूर्यषष्ठी ५६। श्रावणशुक्लसप्तम्यां शीतलायां शीतलभोजनादि ५७। बुधाष्टम्यां केवलगोधूमान्नभोजनादि ५८। श्रावणकृष्णगोकुलाष्टम्यां उत्सवादि ५९। दुर्वाष्टम्यां के विरूढौदनादि ६०। आश्विनचत्रशुक्लपक्षयोः नवरात्रयोर्नागपूजोपवासादि ६१। चैत्राश्विनशुक्लाष्टम्यां महानवम्यां गोत्रदेवताविशेषपूजादि ६२। नकुलनवमीकरणं ६३। भाद्रपदशुक्लाविधवदशम्यां जागरणादि ६४। विजयादशम्यां शमीप्रदक्षिणादि ६५। विष्णोः स्वापे उत्थाने तथा फाल्गुनशुक्लामलक्यां ज्येष्ठशुक्लपांडवानां चैकादश्यां सर्वमासेषु वा तासूपवासादि ६६। संतानादिनिमित्तं भाद्रपदकृष्णवत्सद्वादशी शुक्ला त्वौद्वद्वादशी ६७। ज्येष्ठत्रयोदश्यां ज्येष्ठिन्यामतकुलकदानादि ६८। धनत्रयोदश्यां धनस्नपनादि ६९। शिवरात्रावुपवास-

१ जले।

चरि
॥ ८७

जागरणादि ७० । नवरात्रिपात्रादि ७१ । अनन्तचतुर्दश्यामनन्तदवरकबन्धनादि ७२ । अमावास्यायां जामातृभागिनेयभोजनादि ७३ । सोमवारयुतामावास्यायां नवोदकामावास्यायां च नदीतडागादौ विशेषस्नानादि ७४। दीपोत्सवामास्यायां पितृनिमित्तं प्रदीपप्रदानं ७५ । कार्तिकीवैशाखीपूर्णिमयोः स्नानादि ७६ । होलिकाप्रदक्षिणादि होलिकानमस्याभोजनादि ७७ । श्रावण्यां तु बलिपर्व ७८ । दीवासादिकरणं ७९ । उत्तरायणकल्पनं ८० । एवं देशप्रसिद्धमनेकविधं लौकिकदेवगतं मिथ्यात्वं । लौकिकगुरूणां ब्राह्मणतापसयोगिकादीनां नमस्कारकरणं । तापसाग्रे ॐ नमः शिवायेति भणनं । मूलाश्लेषादिजाते बाले विप्रोक्तक्रियाकरणं । विप्रादीनां कथाश्रवणं । तेभ्यो गोतिलतैलादिभोजनादिदानं । तेषां गृहे बहुमानार्थं गमनादि च । लोकोत्तरदेवगतं तु परतीर्थिकसंगृहीतजिनबिंबार्चनादि । समत्ययश्रीशान्तिनाथपार्श्वनाथादिप्रतिमानामिहलोकार्थं यात्रोपयाचितमाननादि च लोकोत्तरगुरुगतं च लोकोत्तरलिंगिषु पार्श्वस्थादिषु गुरुत्वबुध्या वन्दनादि । गुरुस्थानादौ ऐहिकफलार्थं यात्रोपयाचितादि च ।

या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्मे च धर्मधीः शुद्धा सम्यक्त्वमुपलभ्यते ॥ १ ॥

अदेवे देवताबुद्धिर्गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च मिथ्यात्वमेतदेव हि ॥ २ ॥

तस्मान्मिथ्यात्वं त्याज्यं । मिथ्यात्वादनन्तकालं संसारे जीवः परिभ्रमति । केवलं सम्यक्त्वमेवांगीक्रियतां । यतः—

अंतोमुहुत्तमित्तं पि फासिअं जेहिं हुज्ज सम्मत्तं । तेसिं अवड्ढपुग्गलपरियट्टो चेव संसारो ॥ १ ॥

भवकोटीदुष्प्रापामवाप्य नृभवादिसकलसामग्रीम् । भवजलधियानपात्रे धर्मे यत्नः सदा कार्यः ॥ २ ॥

तथा च—

अवाप्य धर्मावसरं विवेकी कुर्याद्विलंबो न हि विस्तराय ।
यतो जिनस्तक्षशिलाधिपेन रात्रिं व्यतिक्रम्य पुनर्न लेभे ॥ ३ ॥

अहो महानुभावा असारे संसारे धर्म एव सारः । तस्माध्धर्म एव कार्यः । इत्थं चैकमनसा जिनेश्वरस्य वचनामृतं शृण्वतश्च क्रवर्तिनः शुभाध्यवसायादीहापोहं कुर्वतो जातिस्मरणं समुत्पन्नं । पूर्वभवाचरितं चारित्रं स्मृतं । वैराग्यं समुत्पन्नं । 'अथालं राज्येन मोक्षाय यतिष्ये' ( इति निश्चित्य ) पञ्चमुष्टिकलोचः कृतः । जगन्नाथसमीपे स्वर्णबाहुश्चक्रवर्ती दीक्षां जगृहे । निरतीचारं पञ्चाचारं चारित्रं प्रतिपालयति । तपस्तप्यमान एकादशांगीं पठमानः स क्रमाद्गीतार्थोऽभूत् । द्वाविंशतिपरीपहान् सेहे । श्रीजिनमापृच्छय क्रमेणैकाकी विहारं चक्रे । धर्मध्यानेषु लीनांगः कर्मणां क्षयं करोति । कियद्भिर्दिनैर्विंशतिस्थानानि चाकरोत् । तथाहि—

अरिहंत सिद्ध पवयेण गुरु थेरे बहुस्सुए तवस्सीसु । वच्छलया एएसिं अभिक्खणाणोवओगे अ ॥ १ ॥
दंसेण विणए आवस्सए य सीलव्वए किरइयाणं । खणलवतव च्चियाए वेयावच्चे समाहीए ॥ २ ॥
अपुव्वनाणगहणे सुत्तभत्ती पवयणे पभावणया । एएहिं ठाणेहिं तित्थयरत्तं लहइ जीवो ॥ ३ ॥

इमानि विंशतिस्थानानि कृतवान् । एकदा स वज्रबाहुमुनीश्वरो विहारं कुर्वन् क्षीरगिरिसन्निधौ महाटव्यां प्रतिमया तस्थौ । इतश्च कमठजीवः कुरंगको भिल्लो नरकादुद्धृत्य तस्मिन्नेव पर्वते सिंहो बभूव । स सिंहस्तत्राटव्यां भ्रमन् समाययौ । स यमवद्भी-

पणः सिंहस्तं महर्षि दूरादद्राक्षीत् । प्राच्यवैरान्महा पुच्छमाच्छोटयन् हरिरास्यं प्रसार्याभ्यधावत् । तदा तत्कृतबूत्कारप्रतिशब्दमिषाद् गिरिर्गर्जितः । रौद्रध्यानो मृगेन्द्रस्तं शुक्लध्यानस्थितं महामुनीश्वर चपेटयाऽहन् । तदा स मुनिर्विशेषतः शुक्लध्यानमापूरयन् चतुःशरणपूर्वं तमप्रतिमातिथिं गणयन् रागद्वेषरहितः सम्यगालोचनां कृत्वाऽखिलांगिषु क्षामणां चेक्षुरसवद्धर्मरससारमादाय कूर्चकवद्देहं त्यजति । स मुनिर्हरिणा निर्दीर्णः सन् मृत्वा दशमे प्राणते देवलोके महाप्रभविमाने विंशतिसागरोपमस्थित्या सर्वोत्तमसुरोऽभवत् । तत्राधिकाधिकं सुरसं भुनक्ति । सिंहोऽपि पापिष्ठः पापात्मा मृत्वा चतुर्थ्यां पंकप्रभायां नरकपृथिव्यां नारको जातः । तत्र तीव्रवेदनां सहतेस्म—

दसविहवेयण नरए सीओसिण खुंप्पिवास कडुंअ । भेय सोग पारवस्स जरो अ वांही य दसमो अ ॥१॥

तस्मादुद्धृत्य विविधतिर्यग्योनिषु भ्रमन् सर्वत्र बहुदुःखमासदत् ।

सौभाग्यहर्षसूरीशः सर्वसंपद्विधायकः । पार्श्वनाथो जिनो जीयाद्भव्यानां भवतारकः ॥ १ ॥

इति श्रीतपागच्छे श्रीजगच्चन्द्रसूरिपट्टपरंपरालंकारश्रीहेमविमलसूरिसंतानीयगच्छाधिराजश्रीपूज्यश्रीहेमसोमसूरिविजयराज्ये पूज्याराध्यपं०श्रीसंघवीरगणिशिष्यपं०उदयवीरगणिविरचिते श्रीपार्श्वनाथगद्यबन्धे लघुचरित्रेऽष्टमनवमभववर्णनो नाम चतुर्थः सर्गः ।

पार्श्वनाथचरित्रस्य सर्गस्तुरीय एव च । पंडितोदयवीरेण गद्यबन्धेन निर्मितः ॥ १ ॥

---

१ धर्मध्यानमिति पाठान्तर

# अथ पञ्चमः सर्गः।

चिदानन्दरूपं जिनं पार्श्वनाथं सदा मोददं देवदेवं विनम्य।
सतां संमतः पञ्चमः सर्ग एव मया रच्यते गद्यबन्धेन सद्यः ॥ १ ॥

अथ गिहजीरो विविधानि नरकतिर्यग्योनिभवानि दुःखानि सहमानः क्वापि सन्निवेशे रोरविप्रसुतोऽभवत् । तस्य सुतस्य कर्मवशाद्बाल्ये जनकजननीबान्धवा विपन्नाः । ततो लोकैर्जीवितो रंको जातः । कमठ इति नाम्ना क्रमेण यौवनं प्राप्तः । मन्दिरं मन्दिरं प्रति भ्रमन् भिक्षया भोजनं दुःखेन प्राप्नोति । एवं सोऽतिदुःखी जातः । परकीयां समृद्धिं दृष्ट्वा खिद्यति । मम कर्मणा दुःखीकृतोऽहं । यतः—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्मांडभांडोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥१॥

सोऽन्येपुरीश्वरान् रत्नस्वर्णालंकारभूषितान् दृष्ट्वा मद्यः समुत्पन्नवैराग्यादित्यचिन्तयत्—" अमी पुण्यवन्तः सहस्राणामुदरंभरणे दरिद्रिणाग्रगः, अहं स्वोदरभरणेऽप्यक्षमः ।

केऽपि सहस्त्रंभरयो लक्षंभरयश्च केपि केऽपि नराः । नात्मंभरयन्त्यन्ये फलमेतत्सुकृतदुष्कृतयोः ॥ १ ॥

तस्मात्तपस्यामि" । इति विमृश्य खेदात् कमठः तापसव्रतं जग्राह । तपस्तेपे । कंदफलादयः पञ्चाग्न्यादिक साधयति ॥

इतश्चास्मिन् जम्बूद्वीपाभिधे द्वीपे भरताभिधेऽस्मिन् क्षेत्रे गंगोपकंठे वाराणसीनाम्ना पुरी प्रत्यक्षा साक्षात् स्वर्गपुरीव राजते ।नगरवर्णनमित्थं—

यत्र स्फटिकहर्म्याणि प्रसृतागरुधूम्यया। कैलाशा इव राजन्ते तटसंचारिवारिदाः ॥ १ ॥

यत्रैवानेकप्रासादोत्तुंगशिखरगा ध्वजाः । आह्वयन्ते जनान्नित्यं तत्पुरं शोभतेतराम् ॥ २ ॥

ईश्वरा धनदाश्चैव तेविपादागताः किमु । राजन्ते यत्पुरं नित्यं तत्पुरे शोभतेतराम् ॥ ३ ॥

तस्यां नगर्यामिक्ष्वाकुवंशोद्भवो भुवनत्रयविश्रुतोऽश्वसेननरेश्वरो राज्यं करोति । तस्य त्यागशौर्यगुणोद्भूता कीर्तिर्दशसु दिक्षु विस्तृता । यतः—

गृहे श्रीर्भारती वक्त्रे भूर्भुजे हृदि धर्मधीः । स्थितेतीव रुषा तस्य कीर्तिर्दूरतरं गता ॥ १ ॥

स राजा कीदृशः ?—

शूरो युद्धे नते सोमो दुष्टे वक्रो बुधः श्रुते । गुरुर्वाचि कविर्नीतौ मन्दे मन्दस्त्वसौ नृपः ॥ १ ॥

तस्य राज्ञो वामाजनशिरोमणिः पवित्राचारा मदाकारा शीलालंकृतिगात्रा पवित्रपुण्यपात्रं वामादेव्यभिधाना पट्टराज्ञी सम-

१. स्वर्गीत.

जनि । तयोर्दम्पत्योः पञ्चेन्द्रियवैषयिकं सुखं भुञ्जतोर्देवलीलावद्राजलीलया कालो याति । इतश्च प्राणते कल्पे उत्तमां देवर्धिं भुक्त्वा गुरुसंघपूजितश्चैत्रकृष्णचतुर्थ्यां सविशाखायां देवलोकाच्च्युत्वा निशीथसमये श्रीमद्वामाकुक्षौ समवातरत् । तदा तया वामादेव्या तीर्थकृज्जन्मसूचकाश्चतुर्दश महास्वप्ना दृष्टाः । तद्यथा—

गजेन्द्रो वृषभः सिंहो लक्ष्मीर्माल्यं शशी रविः । ध्वजः कुंभः सरो वार्द्धिर्विमानं वसवोऽनलः ॥ १ ॥

एतानीदृशान् स्वप्नान् दृष्ट्वा सा राज्ञी जजागार । एतत्स्वप्नदर्शनं राजानं कथयामास । राजापि मुदितः । प्रभाते स्वप्नपाठकानाहूय स्वप्नदर्शनं प्रोचे । तदा तैर्विमृश्योक्तं—"राजेन्द्र अस्मच्छास्त्रे द्वासप्ततिः स्वप्नाः सन्ति । तत्र त्रिंशन्महास्वप्नाः । तत्र त्रिंशन्महास्वप्नमध्ये इमे चतुर्दश महास्वप्नास्तीर्थंकरमातरश्चक्रवर्तिमातरो वा तीर्थंकरे चक्रवर्तिनि वा गर्भेऽवतरति सति पश्यन्ति । तस्माद्वामादेव्या सहसा चतुर्दश महास्वप्ना दृष्टास्तेषामनुभावात्सुतो भविष्यति । स च तीर्थंकरश्चक्रवर्ती वा भविष्यति ।" तच्छ्रुत्वा नृपतिर्मुमुदे । तेषां संमान्य प्रचुरं द्रव्यवस्त्रादिकं दत्त्वा विसर्जयति स्म । राज्ञी हृष्टा गर्भं दधौ । प्रवर्धमानगर्भानुभावात्तस्य राज्यश्रीर्धनदादिष्टगुह्यैः परिपूरिता । व्ययतोऽपि न क्षीयते । वामादेव्याः समीहितं सर्वं किंकरा इव देवताः पूरयन्ति स्म । इत्थं वामाराज्ञी सुखेन गर्भं वहन्ती क्रमात् पौषकृष्णदशम्यां सविशाखायां विश्वत्रयोद्योतकरं सर्पलाञ्छनमिन्द्रनीलरत्नवन्नीलाभं पुत्ररत्नं सुषुवे । तदा दिवि दुन्दुभिर्ननाद । दिशः प्रसन्नास्या अभवन् । नारकाणामपि मुहूर्तमेकं सुखमभूत् । तदा वायवोऽपि सुखस्पर्शा मन्दं मन्दं ववुः । क्ष्मायां पञ्चेन्द्रियादयः सर्वेऽपि मुदिताः । त्रिभुवने उद्योतोऽभूत् । तदा सहसा दिक्कुमारीणामासनानि चलितानि । अवधिना जिनजन्मसमयं ज्ञात्वा ननृतुः । क्रमेण ताः सूतिस्थानमाजग्मुः । तथाहि—

भोगंकरा भोगवती सुभोगा भोगमालिनी । सुवत्सा वत्समित्रा च पुष्पमाला त्वनिन्दिता ॥ १ ॥

एता मेरुरुचकाधोलोकस्था दिक्कुमार्यस्तत्रागत्य जिनं जिनाम्बां च नत्वा एवमूचिरे—"हे जगन्मातर्जगद्दीपप्रदायिके तुभ्यं नमः। वयमधोलोकवासिन्यो दिक्कुमार्यो जिनजन्मोत्सवं कर्तुमागताः स्मः । त्वं मा भैषीः" । इत्युक्त्वा संवर्तकमारुतं विकुर्व्य योजनमितां भूमिमशोधयन् । वातेन भूमिशुद्धिमकुर्वन् । ततो जिनासन्ननिषण्णा गायन्ति । तथा—

मेघंकरा मेघवती सुमेघा मेघमालिनी । तोयधारा विचित्रा च वारिषेणा बलाहका ॥ २ ॥

इत्यूर्ध्वलोकवासिन्योऽष्टौ दिक्कुमार्यो मेघं विकुर्व्य पृथ्वीं सिक्त्वा पुष्पवृष्टिं वितेनिरे । जिनं जिनाम्बां च नत्वा नानाविधानि धवलगीतानि गायन्ति ।

अथ नन्दोत्तरा नन्दा सुनन्दा नन्दिवर्धिनी । विजया वैजयन्ती च जयंती चापराजिता ॥ ३ ॥

एताः पूर्वरुचकात्तत्रैत्य जिनं जिनाम्बां च नत्वा दर्पणकरास्तस्थुः ।

समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा । लक्ष्मीवती शेषवती चित्रगुप्ता वसुन्धरा ॥ ४ ॥

एता दक्षिणरुचकस्थास्तत्रैत्य जिनं जिनाम्बां च नत्वा भृंगारपाणयस्तस्थुः ।

इलादेवी सुरादेवी पृथिवी पद्मावत्यपि । एकनासा नवमिका भद्रा शीतेति नामतः ॥ ५ ॥

एताः पश्चिमरुचकस्था जिनं जिनमातरं च नत्वा व्यजनपाणयस्तस्थुः ।

अलंबुसाऽमितकेशी पुंडरीका च वारुणी । हासा सर्वप्रभा श्रीर्ह्रीरष्टौ दिग्रुचकाद्रितः ॥ ६ ॥

एताश्चामरपाणयस्तस्थुः ।

विचित्रा चित्रकनका तारा सौदामिनी तथा । दीपहस्ता विदिक्ष्वेत्य सर्वा दिग्रुचकाद्रितः ॥७॥

एता दीपहस्ताः ।

रूपा रूपासिका चापि सुरूपा रूपकावती । रुचकद्वीपतोऽभ्येयुश्चतस्रो दिक्कुमारिकाः ॥ ८ ॥

एता जिनेशितुर्नाभिनालं चतुरंगुलवर्जं छित्त्वा विवरं पातयित्वा तत्र निचिक्षिपुः । रत्नमाणिक्यमौक्तिकैर्विवरं पूरयित्वा तदुपरि पिठिकाबन्धं चक्रिरे । अथ सूतिकागृहात् पूर्वदक्षिणोत्तरदिक्षु कदलीगृहाणि विचक्रुः । अथ तत्र जिनं जिनांबां च नीत्वा दक्षिणौकसि रत्नमयं सिंहासनं व्यधुः। तत्र तयोस्तैलैरभ्यच्योद्वर्तनं कुर्वन्ति । ततः पूर्वचतुःशाले कदलीगृहे मणिपीठे न्यवेशयन् । सुगन्धिजलैः स्नपयित्वा दिव्यनेपथ्यमंडनैः शृंगारयित्वोत्तरचतुःशाले रत्नासने न्यधुः । तत्रारणिकाष्ठेभ्योऽग्निमुत्पाद्य गोशीर्षचन्दनं दग्ध्वा रक्षापोट्टलिकाद्वयं कृत्वा तयोः करे बबन्धुः । तत्र जिनस्य गीतगानं कृत्वा पर्वतायुर्भवेत्युक्त्वा पाषाणगोलकौ मिथ आस्फालयामासुः । भूयो वामादेवीं विभुं च शय्यागतौ विधायास्थुः । तत्र गीतगानं कृत्वा जिनं नत्वा स्वस्वस्थाने जग्मुः ।

ततः स्वर्गे सुरेन्द्राणामासनानि चकंपिरे । तदा शक्रोऽवधिना जिनजन्मसमयं ज्ञात्वा स्वयं तत्रस्थो जिनसंमुखं सप्ताष्टपदानि गमनेत्य प्रणम्य विधिना शक्रस्तवेनास्तवीत् । ततः शक्रो हरिनैगमेषिणमादिश्य सुघोषाघंटया तीर्थकृतो जन्मकृत्यं नाकिनां

[illegible] । [illegible] पालकाभिधानं विमानं विकुर्व्य तदेव विमानमारुह्य देवैः परिवृतः शक्रो [illegible] समेतः । तत्र विमानं संक्षिप्य जिनजन्मगृहे समागत् । जिनेन्द्रं जिनांबां च नत्त्वैवमस्तवीत्—" भो रत्नधारिणि शुभलक्षणे जगन्मातस्तुभ्यं नमोऽस्तु । यया त्वया त्रिभुवनस्य धर्ममार्गप्रकाशकोऽयं दिव्यरत्नप्रदीपो भगवान् जिनः सुषुवे । अतः कारणात्तुभ्यं नमोऽस्तु । अहं शक्रोऽस्मि । जिनजन्मोत्सवं कर्तुमागाम् । तन्नो भीतिः कार्या " । इत्युक्त्वाऽवस्वापिनीं निद्रां दत्वा जिनस्य प्रतिबिंबं तत्र मुक्त्वा पञ्चरूपं धृत्वा एकेन रूपेणाञ्जलौ जिनमाददे, उभाभ्यां रूपाभ्यां चामरद्वयमवीजयत्, एकेन रूपेण प्रभोरुपरि च्छत्रं बिभ्रदेकेन रूपेण च वज्रमुल्लालयन् देवैः परिवृतः समुत्पत्य मेरुमहागिरौ समागात् । तत्र पांडुकवने पांडुकंबलायां शिलायां जिनस्नात्रयोग्यदिव्यरत्नसिंहासने प्रभुमंके कृत्वा वासवो हर्षनिर्भरः पूर्वाभिमुखो न्यषीदत् । अन्येऽपि प्रयुक्तावधयस्त्रिषष्टिर्वासवा महर्द्ध्या तत्राजग्मुः ।

दश वैमानिका इन्द्रा विंशतिर्भुवनाधिपाः । ज्योतिष्कौ द्वौ च चन्द्रार्कौ द्वात्रिंशद्व्यन्तरेश्वराः ॥ १ ॥

तत्र कलशा विकुर्विताः

सौवर्णा राजता रात्नाः स्वर्णरूप्यमया अपि । स्वर्णरत्नमयाश्चापि रूप्यरत्नमया अपि ॥ १ ॥

स्वर्णरूप्यरत्नमया अप्यन्ये मृन्मयास्तथा । अष्टाधिकानि प्रत्येकं शतानि दशसंख्यया ॥ २ ॥

पणवीसजोयणतुंगा बारस जोयणाइ वित्थारा । जोयणमेगं नालो इगकोडिसाट्ठिलक्खाइ ॥ ३ ॥

एते कलशाः क्षीरोदध्युदकैर्भृताः । अच्युतादिसुराधीशा विधिना जिनमस्नपयन् । पारिजातकपुष्पादिभिर्जिनमानर्चुः । तदा च ते देवास्तुष्टुवुः । केऽपि सुरा हृष्टा ननृतुः । केऽपि सुरा गान्धारवागालकौशिकहिंडोलदीपकमधुमादशचारुधोरणसोहागाधरासभाणमल्लीरुकुभा इत्यादिदिव्यदेवरागैर्गीतगानानि कुर्वन्ति । केऽपि सुराः पद्पञ्चाशत्कोटितालभेदैर्दिव्यनाटकं कुर्वन्ति । केऽपि ततेन विततेन घनेन सुषिरेण चतुर्विधेन वाद्येन कौतुकं पूरयन्ति । केऽपि कौतुकाद्वल्गुः । केऽपि मधुरस्वरैर्भावनां भावयन्ति । ते कलशास्तैर्गान्तर्भृताः । अथ प्रभुमीशानेन्द्राङ्के न्यस्य सौधर्मेन्द्रश्चतुर्वृषभरूपाणि विकुर्व्य विषाणोत्थैर्वारिभिः स्नपयामास । निर्भोरग दिव्यवस्त्रेणोन्मृज्य दिव्यैश्चन्दनर्विलिप्य पुष्पौघैरपूजयत् । शक्रः स्वामिपुरो रजततंडुलैरष्टौ मंगलानि चालेखयत् । तद्यथा—

दर्पणो वर्धमानश्च कलशो मीनयोर्युगम् । श्रीवत्सः स्वस्तिको नन्द्यावर्तभद्रासने इति ॥ १ ॥

ततः शक्रः एवं स्तोतुं प्रचक्रमे—

जय श्रियो निधे स्वामिन्नश्वसेननृपांगज । नम्रामरशिरोभृंगसंगचंगपदांबुजम् ॥ १ ॥
अद्य मे सफलं गोत्रं नेत्रे च विमलीकृते । स्नातोऽहं धर्मकृत्येषु जिनेन्द्र तव दर्शनात् ॥ २ ॥
अद्य मे सफलं जन्म प्रशस्तं सर्वमंगलम् । भवार्णवं च तीर्णोऽहं जिनेन्द्र तव दर्शनात् ॥ ३ ॥
अद्याहं सुकृतीभूतो निर्धूताशेषकिल्बिषः । भुवनत्रयपूज्योऽहं जिनेन्द्र तव दर्शनात् ॥ ४ ॥

अद्य मे कर्मणां जालं विधूतं सकषायकम्। दुर्गत्या विनिवृत्तोऽहं जिनेन्द्रं तव दर्शनात् ॥५॥
अद्य मे सफलं देहं अद्य मे सफलं बलम्। नष्टानि विघ्नजालानि जिनेन्द्र तव दर्शनात् ॥६॥
अद्य नष्टो महाबन्धः कर्मणां दुःखदायकः। सुखसंगः समुत्पन्नो जिनेन्द्र तव दर्शनात् ॥७॥
अद्य मिथ्यान्धकारस्य हन्ता ज्ञानदिवाकरः। उदितो मच्छरीरस्य जिनेन्द्र तव दर्शनात् ॥८॥
तव स्तवननिध्यानध्यानैरजानि निर्मलम्। चक्षुश्चक्षुर्मनो मेऽद्य वीतराग नमोस्तु ते ॥९॥

इत्थं जगन्नाथं स्तुत्वा ततो नीत्वा वामान्तिकेऽमुचत्। अवस्वापिनीमर्हत्प्रतिरूपकं च जहे। प्रभोर्दृष्टिविनोदायोपरि श्रीदामगंडकममुचत्। तथा चोन्छीर्षके दिव्ये कुंडलयुग्मे अमुचत्। शक्रादेशाद्धनदः सौधे द्रव्यरत्नवृष्टीश्चाकरोत्। प्रभोरंगुष्ठेऽमृतं संक्रम्य प्रभुं प्रणम्य नन्दीश्वरे ते सर्वेऽपि सुरेन्द्राः सुरासुराश्च शाश्वतार्हतो नत्वाऽष्टाह्निकां कृत्वा हृष्टाश्च स्वस्वास्पदं ययुः।

ततो वामा स्वामिमाता प्रबुद्धा प्रकाशवदनांबुजं दिव्यांगरागनेपथ्यधरं पुत्रं वीक्ष्यामोदत। देव्याः परिच्छदः पुत्रजन्मोदन्तं नृपं विज्ञपयामास, दिक्कुमार्यागमाद्यं सर्वमाख्यत्। ततः श्रीअश्वसेननृपस्तस्मै पारितोषिकं दत्वा पुत्रजन्मोत्सवं करोति। प्रथमं कारागारबन्दिजनमोक्षमकरोत्। नृत्यदिव्यांगनागीतैस्तूर्यनादैर्जयारवैर्नाटकैः शंखध्वनिभिस्तन्नगरं शब्दाद्वैतं तदाऽभवत्। दानसन्मानवर्षणैः श्रिया चायान्त्या तद्राज्यं व्यूढमपि संकीर्णं तदाऽभवत्। कुलाचारकृते सूतके निवृत्ते स्वजनानामंत्र्य भोजनवस्त्राभरणादि-

गत्कारपूर्वकं कथयति–" भोः स्वजनाः श्रूयतां, एतस्मिन् बालके गर्भस्थिते मात्रा निशि ध्वान्तेपि पार्श्वतः सर्पन्तं सर्पमद्राक्षीत् तद्गर्भानुभावत एवंतस्य बालकस्य पार्श्व इत्यभिधा भवतु "। तदा स्वजनसमक्षं अश्वसेननृपो बालकस्य पार्श्वाभिधामकरोत्। स बालो धात्रीभिर्लाल्यमान आदराद् द्वितीयाचन्द्रवत् क्रमेण वृद्धिं प्राप। क्षुधोदये शक्राहितं निजांगुष्ठादमृतं पपौ। देवांगनाः स्वामिनं प्रीत्या रमयामासुः। स श्रीपार्श्वो वज्रर्षभनाराचसंहननः समचतुरस्रसंस्थानो बिंबोष्ठोऽसितशरीरो नीलकान्तिः सुनयनः पद्मनिःश्वासो द्वात्रिंशल्लक्षणधरो बाल्यमुल्लंघयति।

> गंभीर उन्नतः सूक्ष्मः सरलः पृथुलोऽसितः। अदीर्घस्त्रिषु त्रिष्वेवं द्विशुभ्रो नवपाटलः ॥ १ ॥
> नाभौ सत्त्वे स्वरेऽगाधस्तुंगोंऽसपदमूर्धसु। सूक्ष्मः केशे नखे दन्ते सरलोंऽह्रौ भुजेंऽगुलौ ॥ २ ॥
> पृथुलो भ्रूमुखोरस्सु तारावृंत(पांग)कचे शितिः। कटौ पृष्ठे च पुंश्चिह्ने तुच्छः शुभ्रो रदाक्षिषु ॥ ३ ॥
> पाणिपादे गुदे तालुजिह्वयोरथ चौष्ठयोः। नखदन्तेषु मांसे च ताम्रो नवसु शस्यते ॥ ४ ॥

एभिर्द्वात्रिंशल्लक्षणैः संयुक्तः, अष्टाग्रसहस्रलक्षणैर्युक्तः, नवकरतनुमानः, अद्भुतदेहरूपगन्धः अदृश्याहारनीहारः, निरामयः, मलस्वेदोज्झितः, एवंविधो भगवान् विशेषतो रेजे। क्रमेण युवतिजनाह्लादकरं नवयौवनं प्राप।

एकदा नृपमास्थानस्थितं कश्चिन्नर एत्यैवं व्यजिज्ञपत्—"स्वामिन् इतः पश्चिमदिग्भागे कुशस्थले पुरमस्ति। तत्र नरवर्माख्यो नृपतिरासीत्। स सुकृती सत्यवादी धर्मप्रवर्तको जिनधर्मे रतः साधुशुश्रूषापरो नीत्या राज्यं प्रतिपाल्य

राज्यश्रियं त्यक्त्वा व्रतमुपादत्त । इत्यर्धकथितेऽश्वसेननृपः शिरो धुन्वन्नेवमुवाच–"अहो महानुभावः सत्त्वाधिको यः स्वीकृत राज्यं तत्याज" । सोऽपि भूयः पुमानूचे–"नरवर्मणः सूनुः प्रसेनजिन्नामार्थिनां कल्पवृक्षोपमस्तत्र राज्यं करोति । तस्य प्रभावती नाम्नी कन्यास्ति । सा संप्रति नवयौवना प्रत्यक्षं सुरकन्यावद्राज । तादृशीं तां समुद्भूतनवयौवनां वीक्ष्य पिता चिन्तातुरोऽनुरूपवरं सर्वत्रान्वेषयामास । किं तु तादृक् कोऽपि वरो न प्राप्तः । अथान्यदा सा सखीभिः परिवृता वने क्रीडार्थं ययौ । तत्र किंनरीभिर्गीयमानं पार्श्वरूपमशृणोत् । तस्य गुणोत्कीर्तनं शृण्वन्ती सा पार्श्वकुमारे सानुरागा जाता । अन्यक्रीडां व्रीडां च त्यक्त्वा हरिणीवत्तद्गीतं शृण्वन्ती शून्यीभूतमनसा लीनाऽभूत् । स्मरबाणैस्ताडिता निश्चेष्टाऽभवत् । तदा सखीजनस्तां पार्श्वनाथं ध्यायन्तीं संबोध्य स्ववेश्मनि निन्ये । सख्यस्तत्स्वरूपं पित्रोर्व्यजिज्ञपन् । पित्रोः प्रमोदो जातः–"एतच्छुभं चिन्तितं, युक्तोऽयं संयोगः, श्रीमत्पार्श्वकुमारो जगत्त्रयशिरोमणिर्वरः सुन्दरः प्रचुरायुः पुत्र्या चिन्तितः, मया ध्रुवं पार्श्वकुमारेण सहोद्वाहः कार्यः, उत्तमनरैर्विद्या कन्या च सत्पात्रे विनियोज्या, सुमुहूर्ते चेमां कन्यामधिपार्श्वं स्वयंवरां प्रेषयिष्यामि"। इत्थं पितृवचः श्रुत्वा सा कन्या मुमुदेतरां । तच्च व्यतिकरं कलिंगदेशपतिर्यवनाभिध उद्धतो भृकुटीभीषणः कथमपि ज्ञात्वाऽवादीत्–"मयि सति कः पार्श्वः प्रभावतीमुद्वोढा ? कोऽयं प्रसेनजित् ? यो मां मुक्त्वा तां तस्य प्रदास्यति" । इत्युक्त्वा भूरिसैन्यैः परिवृतः कुशस्थलपुरं वेगादागात् । तेन पुररोधः कृतः । पुरं निरुध्यागमननिर्गमं जातं । ततः प्रसेनजिद् भूपश्चिन्तातुरो जातः । मंत्रिभिर्विचार्य समर्थमश्वसेननृपं ज्ञात्वाऽहं मंत्रिसागरदत्तसुतः पुरुषोत्तमो नाम प्रेषितः । निशीथे पुरान्निरगां । मयाऽयं वृत्तान्तो भवतः कथितः । अथ यद्युक्तं कृत्यं तत्करोतु" । इत्याकर्ण्याश्वसेननृपो ऽगाज्र्जीत्–"कोऽयं वराको यवनः ? मयि सत्यपि का भीतिः ? एषोऽहं सज्जसैन्यः कुशस्थलं त्रातुमागतः"। इत्युक्त्वा भंभामवा-

दयन् । अखिलं सैन्यं मिलितं । तज्ज्ञात्वा श्रीपार्श्वो नृपान्तिके क्रीडागृहात् समागात् । पितरं जगौ–"एष संरंभः कस्योपरि ?" । ततोऽश्वसेननृपोऽगुल्या तं नरं दर्शयन् सर्वं कथयामास । तदा पुनः पार्श्वकुमार इदमभ्यधात्–"वराको यवनः, तस्योपरि कीदृशोऽप्युद्यमः ? पूज्यास्तिष्ठन्तु । अहं तस्य शिक्षां करिष्ये" । नृपस्तद्भक्तिशक्तिक्षमं वाक्यं श्रुत्वा हृष्टः श्रीपार्श्वं ससैन्यं प्रैषीत् । श्रीपार्श्वो गजारूढः पुरपोत्तमयुतोऽनेकभूपालसंयुतश्चचाल । स्वामिनः पुरतश्चलन्नगा इव गजाश्चेलुः, नदीरया इव हयाश्चेलुः, रथाः क्रीडागृहा इव चेलुः, पत्तयः कपिवद्वल्गन्ति स्म । एवंविधया क्रीडया प्रभुः यवनखेलनार्थं चचाल । तदा नन्दिघोषैः शंखादिशब्दैर्निस्वाननिस्वनैरुत्सर्पद्भिः शब्दायमानमंबरं जातं । प्रथमे प्रयाणके मातलिसारथिः सरथ उपेत्य प्रभुं नत्वेवं प्रोवाच–'नाथाहं शक्रसारथिः, त्वामतुलबलं शक्रो जानाति, तथापि तेन भक्त्याऽहं सरथः प्रेषितः । प्रभुस्तद्रथमारुरोह । कियद्भिर्दिनैः प्रभुः कुशस्थलपुरासन्नोद्याने सुरकृते सप्तभूमिके आवासेऽवसत् । ततो महादक्षं दूतं सुशिक्ष्य यवनान्तिके प्रैषीत् । स गत्वा यवनं स्माह–"श्रीपार्श्वकुमारस्त्वां मन्मुखेनैवमादिशति, भो यवन त्वं बलं मा कृथाः, निजस्थानं याहि । अहं पार्श्वः समागतोऽस्मि" । तदा यवनो ललाटमत्युच्चं कृत्वाऽवदत्–"अरे दूत मां किं त्वं नो वेत्सि ? कोऽश्वसेनः ? कः पार्श्वः ? यो मां समभिषेणयति । निष्ठुरमापमाणमपि त्वां दूतत्वान्न हन्मि । स्वस्वामिने मदुक्तं निवेदय" । पुनरपि दूतोऽप्याह–"मूढ किं मुधा गर्वं वहसि ? किं जगतां पतिं नो जानासि ? ननु प्रभुस्त्वां समरे बोधयिष्यति" इति ब्रुवन्तं दूतं यवनस्य भटाः सदायुधा हन्तुमुद्यताः । तदा वृद्धामात्यस्तान् भटान् साक्षेपमिदमूचिवान्–"भो जडा भवतामाकस्मिकः क्षयोऽयं । यस्य सदेवा इन्द्राः सेवां कुर्वन्ति तस्य श्रीपार्श्वकुमारस्य दूतस्य हनने युष्माकं का गतिः ?" । इति श्रुत्वा भयभ्रान्ता भटाः सर्वेऽपि शान्तिं ययुः । मन्त्री दूतं करे कृत्वा इत्ययो-

"यस्य त्वं त्राता तस्य सर्वत्र सौख्यं भवति । अन्यच्च मम पुत्री प्रभावती भृशं पार्श्वकुमारेऽनुरागिणी वर्तते । प्रसद्य तस्याः प्राणिग्रहणं कारयतु" । अश्वसेनोऽवदत्–"भद्र साधूक्तं । अस्माकं मनोरथोऽस्ति । परं पार्श्वः संसाराद्विरक्तोऽस्ति । न जाने किं करिष्यति । परं त्वदुपरोधादधुना पार्श्वं बलादपि पाणिग्रहणं कारयिष्यामि । तन्मा कृथास्त्वमधृतिः" । इत्युक्त्वा तेनैव सह पार्श्वान्तिकं ययौ । पार्श्वं प्रति जगौ–'वत्स त्वं प्रसेनजित्पुत्रीमुद्वह' । श्रीपार्श्वोऽवदत्–"नैव परिणेष्यामि । कुतः ? अयं भवाब्धिर्दुस्तरः । संसारे बहूनि पाणिग्रहणानि कृतानि सन्ति । अहं संसारमुन्मूलयितुमिच्छामि । स्त्री भववृक्षस्य मूलं । मम संसारास्थित्या कार्यं नास्ति" । अश्वसेननृपोऽप्यूचे–"वत्सेदृशेन मनसापि त्वमस्मन्मनोरथं पूरय । प्राक्तनजिनाः कलत्रिणो भूत्वा पश्चात्तपसा सिद्धाः । त्वमपि पाणिग्रहणं कृत्वा संसारसौख्यानि भुक्त्वा पश्चात्स्वार्थं साधय,' । प्रभुस्तातवचनमनुल्लंघ्यं ज्ञात्वा तद्वचनं मेने । तद्दिनाद्विवाहोत्सवः प्रारब्धः । स्थाने स्थाने गीतगानानि, स्थाने स्थाने नाटकानि, स्थाने स्थाने वाद्यानि, स्थाने स्थाने मांगल्यानि, स्थाने स्थाने दानानि, स्थाने स्थाने भोजनानि, एवं विधोत्सवैर्दिनानि अतिवाहन्ते । विवाहदिवसे प्राप्ते सुमुहूर्ते प्रभावतीं स्वर्णकुंभैः स्नपयित्वा गुरुदत्ताक्षतान् मूर्ध्नि निवेश्य चन्दनाक्षतदुर्वादिहस्ताः कुलस्त्रियो दिव्यवासोभिर्विविधाभरणैश्चालंकृतां चक्रुः । इत्थं श्रीपार्श्वकुमारोऽपि सुमुहूर्ते सुलग्ने परिवारपरिवृतो धवलद्विरदारूढः कृतमंगलः सच्छत्रश्चामरवीजितोऽनेकपार्थिवैर्वेष्टितस्तूर्यनादैर्गर्जितः पुरस्त्रीभिर्वीक्ष्यमाणो लीलया गच्छन् विवाहमंडपं प्राप । तत्र सुशीलेन द्विजपुंगवेन क्रमेण कुलाचारः कृतः । मंगलाचारपूर्वकमुभयोर्वरकन्ययोः करमेलको जातः । वधूवरौ चत्वरिकान्तरे गतौ । तत्र स्वजनाः श्रीखंडपुष्पतांबूलैर्नेपथ्याश्वगजादिभिश्च सन्तोषिताः । याचकानां दानादि दत्तं । आज्यलाजाद्यग्निप्रेण हवनपूर्वकं विधिना भ्रमयितुमारेभे । तत्र प्रथमे मंगले राज्ञा श्वशुरेण स्वर्णभाराः सहस्रशः प्रदत्ताः । द्वितीये

मंगले कुडलहाराद्याभरणानि प्रदत्तानि । तृतीये स्थालादीनि भाजनानि गजाश्वाश्च । चतुर्थे मंगले दिव्यचीवराणि प्रदत्तानि । अन्यान्यखिलान्यपि कृत्यानि कृतानि । एवं विवाहोत्सवं कृत्वा प्रीणिताशेषविष्टपः कुमारः श्रीपार्श्वः स्वगृहमाजगाम । सर्वेषां संतोषः संजातः । अश्वसेननृपेण बहु सत्कृता जनाः स्वगृहमाजग्मुः । प्रभुः प्रभावत्या सह सुखानि भुनक्ति । यतः—

करकिसलयमूलं धुन्वतीनां स धन्यः श्रवणपथमनल्पा यस्य पुंसः प्रविष्टाः ।
नवरतपरिरंभे बालसीमन्तिनीनामहह न न न मा मा मुञ्च मुञ्चेति वाचः ॥१॥

कुंकुमपंककलंकितदेहा पीनपयोधरकंपितहारा । नूपुरनादरणत्पदपद्मा कं न वशं कुरुते भुवि रामा ॥२॥

प्रभुः श्रीपार्श्वस्तया सह क्रीडन् जनानां प्रीतिं जनयन् वासरानत्यवाहयत् ॥

सोमविमलसूरीशः सर्वज्ञः सर्वसौख्यदः । पार्श्वनाथो जिनो जीयाद्विघ्नवा(व्रा)तहरः परः ॥१॥

इति श्रीतपागच्छे श्रीजगचन्द्रसूरिपट्टपरंपरालंकारश्रीपूज्यश्रीहेमविमलसूरिसंतानीयगच्छाधिराज श्रीपूज्य श्रीहेमसोमसूरिविजयराज्ये पूज्यश्रीपं०संघवीरगणिशिष्यपं०उदयवीरगणिविरचिते श्रीपार्श्वनाथगद्यबन्धलघुचरित्रे भगवच्च्यवनजन्माभिषेकविवाहोत्सववर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

पार्श्वनाथचरित्रस्य पञ्चमः सर्ग एव च । पंडितोदयवीरेण गद्यबन्धेन निर्मितः ॥ १ ॥

# अथ षष्ठः सर्गः ।

नत्वा श्रीगुरुपादपद्ममनिशं जाड्यप्रतापापहं श्रीसारस्वतमंत्रमेवमखिलं धृत्वा च वक्षःस्थितम् ।
षष्ठं सर्गमथ क्रमागतमहं श्रीपार्श्वदेवप्रभोः संबन्धेन युतं वदामि विमलं सद्गद्यबन्धेन हि ॥१॥

अथान्यदा श्रीपार्श्वप्रभुः प्रासादे गवाक्षस्थः काशीपुरीं विलोकयन् सपूजोपस्करान् पौरान् बहिर्गच्छतोऽपश्यत् । तद् दृष्ट्वा जनान् जगाद–"किमद्याहो दधिदुग्धपत्रपुष्पफलाद्युपस्कारसंयुक्तो जनः सहर्षं पुरीतो बहिर्याति, तत् किंनिदान उत्सवोऽस्ति ? देवयात्रा वाऽस्ति ?" । तदा कोऽप्यूचे–"स्वामिन् कृपानिधे श्रूयतां, एकः कमठाह्वयस्तपस्वी वने समेतोऽस्ति । स तपः कुर्वन् पञ्चाग्निं साधयति । तमर्चितुं जनो याति " । प्रभुरपि सभृत्योऽश्वारूढः कौतुकात्तं द्रष्टुं समागात् । तदा तीव्रपञ्चाग्नितपःस्थितं धूम्रं पिबन्तमज्ञानकष्टं कुर्वन्तं देहं दमन्तं कमठमपश्यत् । ज्ञानत्रयधरः प्रभुपार्श्वो वह्निकुण्डान्तःक्षिप्तकाष्ठान्तःस्थितं दह्यमानं महोरगं चापश्यत् । कृपावान् श्रीपार्श्वस्तं पन्नगं ज्वलन्तं दृष्ट्वाऽवोचत्–"अज्ञानमज्ञानं" यत्तपस्यपि नो दया । सर्वेऽपि जानन्ति यद्दयाहीनो धर्मो न मुक्तये स्यात् । यतः—

स कमलवनमग्नेर्वासरं भास्वदस्तादमृतमुरगवक्त्रात्साधुवादं विवादात् ।
रुगपगममजीर्णाज्जीवितं कालकूटादभिलषति वधाद्यः प्राणिनां धर्ममिच्छेत् ॥१॥

अतः कारणाद्दयैव प्रधाना । यथा नाथं विना सैन्यं नो राजते, यथा जीवं विना वपुर्नो भ्राजते, यथा निशापतिं विना निशा न शोभते, यथा नदी हंसमिथुनैर्विना न विभासते, तथा दयां विना धर्मोऽपि न चकास्ते । अतः कारणाद्भोस्तपस्विन् दयां विना किं मुधा क्लेशकारकं कष्टं करोषि ? जीवघातात् कथं पुण्यं भवति ?" । इति श्रुत्वा कमठः प्रोचे—"भोः क्षत्रियराजकुमार राजपुत्रा हस्त्यश्वक्रीडामेव विजानन्ति, धर्मं तु मुनिपुंगवा एव विदन्ति" । ततो जगतां पतिः पार्श्वनाथस्तत्प्रत्ययार्थं स्वैर्नरैर्वह्निकुंडात्काष्ठमाकर्ष्य यत्नेन स्फोटयामास । तस्मात्काष्ठादाकुलोऽहिः सहसा निरगात् । प्रभुस्तस्य पन्नगस्य नमस्कारमदात् । विभोर्वाक्यपीयूषैर्नमस्कारामृतं पीत्वा सोऽहिः समाधिना मृत्वा नागाधिपो धरणेन्द्रोऽभूत् । स धरणेन्द्रो नागसुरेषु महर्द्धी रेजे । अहोऽज्ञानं कमठ रेऽज्ञानं' जनैरेवं स्तूयमानो विभुः स्वभवनं ययौ । कमठस्तापसो लघुतां प्राप्तो जनैर्हीलितो गर्हितो भगवत उपरि द्वेषं वहन्नन्यत्र गतः । ततः कमठस्तापसो हठात्कष्टतरं बालतपस्तेपे । अज्ञानकष्टं कृत्वा पार्श्वप्रभोरुपरि द्वेषं वहन् मृत्वा भवनवासिषु मेघकुमारेषु मेघमालीति नामतोऽसुरः समजायत । यतः—

बालतवे पडिबद्धा उक्कडरोसा तवेण गारविआ । वेरेण य पडिबद्धा मरिउं असुरेसु जायंते ॥ १ ॥

मेघमाल्यसुराधमो दक्षिणश्रेण्यां सार्धपल्योपमायुष्केण देवसुखं बहुतरं भुनक्ति । श्रीपार्श्वो भोगसौख्यानि भुञ्जन् दिनान्यत्यवाहयत् । अन्यदा मधौ श्रीपार्श्वप्रभुर्जनोपरोधेनोद्यानं वीक्षितुं ययौ । तत्रोद्याने लताद्रुमपुष्पावचयं कौतुकादिकं विलोकयन् विभुरेकमुत्तुंगतोरणं महान्तं प्रासादं ददर्श । प्रभुस्तस्मिन् प्रासादे प्राविशत् । तत्प्रासादभित्तावद्भुतराज्यराजीमतीत्यागं विधायाश्रितसंयमं श्रीनेमिचरितचित्रं दृष्ट्वाऽचिन्तयत्—"अहो श्रीनेमेर्वैराग्यरंगोऽनुपमो यो नवे वयसि राज्यं राजीमतीं च विहाय निःसंगः सन्

व्रतमग्रहीत् । मयाऽप्ययमसारः संसारस्त्याज्य एव ” । तदा भगवान् वैराग्यरंगरंगितः श्रीपार्श्वो भुक्तभोगकर्मा व्रतोन्मुखो बभूव । ततोऽनन्तरं नवविधा लोकान्तिकाः सारस्वतादयः सुराः पञ्चमब्रह्मदेवलोकादागत्य प्रभुं नत्वा व्यजिज्ञपन्—“ जय स्वामिन् त्रैलोक्यनायक संसारतारक सकलकर्मनिवारक प्रभो त्रैलोक्योपकारकं तीर्थं प्रवर्तय । त्वमेव ज्ञानवान् संवेगवानसि । स्वयमेव सर्वं जानासि । अधिकारत्वाद्वयमिदं ब्रूमः ” । इत्युक्त्वा जिनं नत्वा ते देवाः स्वदिवं ययुः । ततस्तत्प्रासादात् स्वामी स्वसौधं जगाम । प्रभुः सुहृदो विसृज्य पल्यंकस्थः शुभभावनां भावयन्निशां निन्ये । तथाहि—

संपदो जलतरंगविलोला यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रमिव चञ्चलमायुः किं धनैः परहितं न कुरुध्वम् ॥ १ ॥

यत्र जातास्तत्र रता ये पीतास्ते च मर्दिताः ।
अहो लोकस्य मूर्खत्वं वैराग्यं किं न जायते ॥ २ ॥

नमस्कारं हारं दधत हृदये कर्णयुगले श्रुतं ताडंकाभं करकमलयोर्दानवलये ।
गुरोराज्ञां शीर्षे मुकुटमतुलं येन भविका यथा भव्यां[1] कंठे क्षिपति वरमालां शिववधूः ॥ ३ ॥

१ भव्यां वरमालामित्यर्थः ।

**दिवसनिसाघडिमालं आउं सलीलं जीआण घित्तूणं । चंदाइच्च वइल्ला कालरहट्टं भमाडंति ॥४॥**

**न सा जाई न सा जोणी न तं ठाणं न तं कुलं । न जाया न मुआ जत्थ सव्वे जीवा अणंतसो ॥५॥**

इत्यादिशुभभावनां भावयतो भगवतो निशा पर्यगलत् । विश्वोद्योतार्थमादित्य उद्गतः । तदा भगवान् श्रीपार्श्वः प्रभातकृत्यानि कृत्वा पित्रोः सन्निधौ गत्वा विनयेन नत्वा पित्रोरग्रे स्थित्वा पितरौ संबोध्य स्वदीक्षायै दानमारभत । श्रीपार्श्वस्तदा सर्वत्र पटहोद्घोषणमकारयत्—' भो लोका यथेच्छं दीयमानं दानं गृह्णतां ' । तदा शक्रादिष्टः श्रीदो द्रव्यं जलदवद्वर्षति । प्रत्यहं प्रभुरेका कोटी लक्षाण्यष्टौ हिरण्यं ददौ । जगतोऽखिलो दारिद्र्यमयदावाग्निः शशाम । भुवि परमानन्दकन्दाः कन्दलिताः । त्रीणि कोटिशतानि अष्टाशीतिकोटयः अशीतिलक्षाणि प्रभुर्वार्षिकं दानं ददौ । अथ ज्ञातदीक्षाक्षणाश्चतुःषष्टिवासवास्तत्राभ्येयुः । चारित्रोत्सवं चक्रुः । तत्र प्रथमं भगवतस्तीर्थांभःसंभृतैः कुंभैः स्वर्णरूप्यरत्नमयैः स्नानमकारयन् । पश्चात् हरिचन्दनकर्पूरादिसुरभिद्रव्यैर्लिप्तांगो दिव्यांबरभृत् पारिजातादिपुष्पौघस्फारधम्मिल्लबन्धुरः शुशुभेतरां । तदनु उदारस्फारहारकुंडलकोटीरकंकणांगदादिभूषणैर्भक्त्या भूपितः । तदा विभुः कल्पद्रुमवद्राज । ततः श्रीपार्श्वप्रभुः शक्रसूत्रितां विशालां शिबिकां समारोहत् । तत्र सिंहासनमलंचक्रे । ततो भगवत उपरि सुवृत्तमुज्ज्वलमुल्लसच्छत्रं रेजे । उभयोः पार्श्वयोश्च चामरे रेजाते । चतुर्षु वाद्येषु वाद्यमानेषु, विविधगीतेषु गीयमानेषु, पटुबन्दिषु जयजयारवं वदत्सु, शिबिकां सुरासुरनरेषु वहमानेषु, सोत्कंठं पुरीजनैर्वीक्ष्यमाणः शिरसा नम्यमानः, अञ्जलिना प्रह्वं स्तूयमानः संयमश्रियमुद्वोढुं मुदा वनेऽगात् । तत्राशोकतरोस्तले शिबिकातः समुत्तीर्य श्रीपार्श्वजिनपतिः स्वर्णरत्ना-

भरणान्यमुञ्चत् । ज्ञानदर्शनचारित्ररूपरत्नान्यग्रहीत् । तदा शक्रः पार्श्वप्रभोरंसे देवदूष्यममुचत् । भगवान् श्रीपार्श्वः पौषस्य कृष्णैकादश्यां विशाखानक्षत्रे कृताष्टमतपाः पञ्चमुष्टिभिः केशमुन्मूल्य 'नमो सिद्धाणं' इति पदं स्मरन् चारित्रमग्रहीत् । तदा भगवतो द्राग् मनःपर्यवज्ञानं समुत्पन्नं । विभोः पञ्चमुष्ट्युध्धृतान् केशान् शक्रः स्ववाससा गृहीत्वा क्षीरसागरे चिक्षेप । तदा च त्रिशतराजपुत्रैः संवेगाच्चारित्रमंगीकृतं । अथ सुरासुरनरेश्वराः श्रीपार्श्वं जिनेन्द्रं प्रणम्य स्वस्थानं जग्मुः । तदा तत्रैव भगवान् लंबमानभुजद्वयः कायोत्सर्गेण स्थितवान् । प्रभाते विहारं चकार । अष्टमस्य पारणके कोपकटाक्षसन्निवेशे धन्यस्य गृहिणो गृहे प्राविशत् । तदा धन्यः स्वं धन्यं मन्यमानः कल्पद्रुमामिव तं जिनं वीक्ष्य सहसोत्पन्नविवेकत्वात्तं नत्वा शुध्धधीः परमान्नेन नाथस्य पारणकं कारयामास । 'अहो दानमहो दानं'[१] इत्युद्घोषणापूर्वकं दिवि देवैर्देवदुन्दुभिस्ताडितः । गन्धांबुवृष्टिभिः भूः सिक्ता । स्वर्णवृष्टिः कृता । नानाप्रकारपञ्चवर्णकुसुमैर्भूः प्रकीर्णा । दिव्यं नाटकं जातं । नाथस्य पारणके धन्यः पुण्येन पूर्णः संजातः । गृहं धनेन पूर्णं जातं । जनो मुदा पूर्णो जातः । गगनं देवदुन्दुभिनादैः पूरितं । तदा धन्यो राज्ञा लोकैश्च संमानितः । तत्र प्रभोः पारणकस्थाने मुदा पादपीठं व्यधात् । स्वामी ततो ग्रामाकरपुरादिषु विचचार । स्वामी धरित्रीव सर्वंसहः शारदाभ्रमिवामल आकाशवन्निरालंबो वायुवदप्रतिबद्धो वह्निवत्तेजसा दीप्तः कांस्यपात्रवन्मुक्ततोयः समुद्रवद्गंभीरो मेरुरिवाप्रकंपो भारंडवदप्रमादः पद्मपत्रवन्निर्लेपः पञ्चसमितिभिः समितस्त्रिभिर्गुप्तिभिर्गुप्तो द्वाविंशतिपरीषहान् जयन् चरणन्यासेन महीं पावयन् पञ्चाचारं प्रतिपालयन् अटव्यां कलिगिरेरधः कुंडाख्यसरस्तीरे विभुः प्रतिमया स्थितः । एकोनविंशतिदोषरहितं कायोत्सर्गं व्यधात् । तथाहि–

**घोडग लय खंभाई, मालुद्धि नियल सबरि खलिण वहू । लंबुत्तर थण संजई, भमुहंगुलि वायस कविट्ठे ॥**

सिरकंप मूअ वारुणि, पेहत्ति चइज्ज दोस उस्सग्गे । एगूणवीसं दोसा, टालयियव्वा पयत्तेण ॥ २ ॥

तथा च–

नासाग्रन्यस्तदृग्द्वन्द्वो दन्तैर्दन्तानसंस्पृशन् । प्रसन्नवदनः पूर्वाभिमुखो वाप्युदङ्मुखः ॥

अप्रमत्तः सुसंस्थानो ध्याता ध्यानोद्यतो भवेत् ॥ १ ॥

कायोत्सर्गे भगवान् शुक्लध्यानं ध्यायति । तत्र महीधरो नामा करी जलपानार्थमागतः । स प्रभुं दृष्ट्वा चेहापोहसंपन्नो जातिस्मरणमाससाद । तदा स दध्यौ यथा—"प्राच्यभवेऽहं हेमाभिधः कुलपुत्रको वामनांगो जने हास्यास्पदमभूवम् । अन्येद्युः पितुः पराभवान्निर्गत्येतस्ततो भ्रमन् वने गुरवो दृष्टाः । मया च वन्दिताः । गुरुणाऽहं यतित्वस्यायोग्यत्वान्महोपकाराय श्रावकत्वं ग्राहितः। श्रावकोऽहं जातः । पर जनैर्हस्यमानोऽतिखिन्नः । तल्लघुं स्वतनुं चाभिनिन्दन् महातनुमभिलपन् आर्तध्यानेन मृत्वा शैलोपमः करी अभूवं । तदिदानीमहं पशुर्जातः । किं कुर्वे ? किमाराधयामि ? अथवा किञ्चित्करेणाशुमेव प्रभुमर्चये" । इति ध्यात्वा सरोऽम्भः प्रविश्य स्नात्वा दन्तिराद् पद्मान्यादाय पार्श्वप्रभोः पार्श्वे ययौ । स करी त्रिः प्रदक्षिणां कृत्वा प्रभोः पद्‌द्वयं पद्मैः पूजयित्वा मनसा स्तुत्वा शिरसा नत्वा स्व धन्यं मन्यमानो यथास्थानं गतः । अथासन्ना देवाः प्रभुं सद्‌गन्धवस्तुभिः पूजयित्वा प्रभोरग्रे नाट्यविधिं मुदा निदधिरे । केनापि गत्वाऽऽसन्नचंपाया करकंडुनरेन्द्रस्य तत्सर्वं स्वरूपं निवेदितं । स नरेन्द्रो विस्मितः सन् सबलवाहनः प्रभुं वन्दितुमभ्यागतः । प्रभुस्त्वन्यत्र विहार कृतवान् । नरेन्द्रेण तत्र श्रीपार्श्वप्रभुप्रतिमा नवहस्तप्रमाणा निर्निर्मिता, तत्रोरुचैत्यं कारयित्वा समहोत्सवं सा प्रतिमा तत्र निवेशिता । देवैस्तत्र नाटकं कृतं । साधिष्ठायकभावेन सा प्रतिमा सप्रभावा जाता । सापि

मनोऽभीष्टं फलं जनानां दत्ते । तत्र कलिनाम्ना पर्वतः कुंडनाम्ना सरः तदासन्नं कलिकुंड इति ख्यातं तीर्थं विश्वपावनं संजातं । सोऽपि करी मृत्वा तत्रैकभक्तिमान् महर्द्धिर्व्यन्तरो जातः । तीर्थसेवको जातः

प्रभुः पार्श्वजिनेन्द्रो विहारं कुर्वन् क्रमेण शिवपुर्यां ययौ । तत्र कौशंब्याख्ये वने कायोत्सर्गेण तस्थिवान् । तदा धरणेन्द्रः पूर्वभवोपकारं स्मृत्वा तत्र महर्द्ध्या समागत्य स्वामिनं नत्वा भक्त्या स्तुत्वा स्वामिनः पुरो नाट्यविधिं व्यधात् । धरणेन्द्रेण मनसा चिन्तितं—'मयि सेवके सत्यपि प्रभोरर्ककिरणस्पर्शो माभूत्' इति ध्यात्वा प्रभोः शिरसि सहस्रफणरूपं छत्रं दधौ । ततोऽन्यत्र गते नाथे धरणेन्द्रोऽपि स्वस्थानमगात् । तदारभ्य जनैरहिच्छत्रेतिविख्याता पुरी वासिता । अहिच्छत्रं तीर्थं प्रसिद्धं जातं । अथ स्वामी राजपुरनगरसमीपे वने गत्वा प्रतिमया स्थितः । तत्रेश्वराख्यो नृपतिरस्ति । स नृपस्तदा राजपाट्यां विनिर्ययौ । तदा सेवकैरुक्तं—'स्वामिन्नेनं व्रतस्थं स्वामिनमश्वसेननृपांगजं पश्य' । इत्युक्ते नृपो हृष्टः पार्श्वजिनान्तिकं ययौ । नृपः प्रभुं दृष्ट्वेत्यचिन्तयत्—'मयाऽयं वेपो दृष्टोऽस्ति' इति चिन्तयन्मूर्छितः । लब्धसंज्ञश्च जातजातिस्मृतिर्जगौ—'अहो महच्चित्रं मम निजप्राच्यभवोऽस्मारि' । मन्त्र्यूचे—'स कीदृक् ? उपदिश्यतां' । नृपः स्माह—"भो निशम्यताम् । वसन्तपुरनगरे दत्तनामा द्विजः पुरासीत् । स हि लग्ननिमित्तज्ञानकथनाज्जने प्रसिद्धो जातः । अथ कर्मवशात्तस्य द्विजस्य कुष्ठरोगः समुत्पन्नः औषधशतैरपि न शान्तः । कुटुंबेनापि कर्मवशात्त्यक्तः दुःखी जातः । गंगायामेत्य वेगतस्तत्र तज्जले निपतन् केनापि विद्याधरर्षिणाकाशगामिना दृष्ट उदितश्च—'महाभाग कथं जले झम्पां ददासि ?' । सोऽवक्—'भोः साधो रोगवशोत्पन्नदुःखान्म्रिये' । मुनिरुवाच—"भो महानुभाव महारसायनं जिनधर्मं सर्वरोगहरं त्वं कुरु । अर्हत्सेवनेन विपतरोः कर्ममूलं छिन्धि" । तेनोक्तं—'किं तद्रसायनं ?' तेनेति पृष्टो मुनि-

राख्यत्—'अयं कर्मरोगः । तन्निवारणार्थं धर्मौषधं कुरु'। ततोऽसौ शुद्धभावेन ससम्यक्त्वं पञ्चाणुव्रतरूपं गृहिधर्मं प्रपन्नवान् । तदनन्तरमचित्ताहारप्रासुकजलपानपञ्चपरमेष्ठिनमस्कारगणनपरोऽभवत् । शुभभावना भावयति । अन्येद्युः स चैत्यं गत्वा जिनं नत्वा मुनिं वन्दित्वा समुपविष्टः । तदाऽन्यः पुष्कलिश्राध्धो मुनिसमीपे पूर्वं समुपविष्टोऽस्ति । तेन स मुनिः पृष्टः—"भगवान् एवंविधविविधव्याधिविशीर्णदेहस्य नरस्य जिनौकसि समागत्य जिनवन्दनं युक्तं ? किमु न वा ?" । मुनिरूचे—" भो महाभागावग्रहाशातनोज्झनादेव देववन्दने को दोषः ? । साधवोऽपि मलक्लिन्नकलेवरा भवन्ति । त एव तादृग्रूपाश्चैत्ये देववन्दनं कुर्वन्तः सन्ति " । पुनरपि पुष्कलिश्राध्धः प्रोचे–' एष क्व गतौ गन्ता ?' । मुनिर्ज्ञानानुभावादूचे—' एष पूर्वबध्धायुः राजपुरे तिर्यग्गतौ कुर्कुटो भावी ' । तदा स कुष्ठी स्वस्य भाविदुःखं श्रुत्वाऽरोदीत्तरां । ततः स मुनिना संबोधितः—" हे कोविद मा खिद्यस्व । यथाऽम्बुधेः प्रचंडपवनोध्धूततरंगस्य प्रसरः केनापि रोध्धुं न शक्यते, तथा प्राक्कृतकर्मविपाकप्रसरः केनापि रोध्धुं न शक्यते । तथा चाहुः पंडिताः—

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीह कुबुध्धिरेषा ।
पुराकृतं कर्म तदेव भुज्यते शरीर हे निष्ठुर यत्त्वया कृतम् ॥ १ ॥

तथा च—

आरोहतु गिरिशिखरं समुद्रमुल्लंघ्य यातु पातालम् । विधिलिखिताक्षरमालं फलति सर्वं न सन्देहः ॥२

उदयति यदि भानुः पश्चिमायां दिशायां प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां तदपि न चलतीयं भाविनी कर्मरेखा ॥३॥

तस्मात्कर्मणां गतिर्विषमाऽस्ति । तीर्थंकरा अप्यनन्तबलाः । तैरपि कर्मणो गतिर्नोल्लंघ्यते । पुराकृतकर्मवशात्तदेव भुज्यते । प्रथमजिनेन्द्रोऽपि वर्षं यावदाहारं न लेभे । तस्मात्कर्मगतिर्नोल्लंघ्यते । तथापि शृणु–तस्मिन् राजपुरे कुर्कुटभवे मुनिं दृष्ट्वा संजातजातिस्मृतिर्विहितानशनो मृत्वा तत्रैव राजपुरे नृपो भविष्यसि । तत्र राजपाट्यां गतः श्रीपार्श्वजिनं दृष्ट्वा बोधं लप्स्यसे । इति श्रुत्वा स कुष्ठी द्विजो मुदितः । क्रमेण कुर्कुटो भूत्वा नृपो जातः । स चैषोऽहं । प्रभुं दृष्ट्वाहं जातिस्मृतिं प्राप्तः " । ततः प्रभुं नत्वा प्रभोः कायोत्सर्गस्थाने चैत्यं विधायोत्सवेन श्रीपार्श्वनाथप्रतिमां स्थापयामास । तस्य चैत्यस्य कुर्कुटेश्वर इत्याख्या विस्तृता । तत्र कुर्कुटेश्वरं नगरमपि निवासितं ।

एकदा नाथो विहरन्नगरासन्नवर्तिनं तापसाश्रममागात् । तत्राहर्पतिरस्तं गतः । तत्रोपकूपे न्यग्रोधमूले प्रभुर्निशि कायेन मनसाऽपि निष्प्रकंपः प्रतिमया तस्थौ । इतश्च मेघमाली सुराधमः प्राग्भववैरव्यतिकरं निजमवधिना ज्ञात्वा पूर्ववैरं स्मृत्वा क्रुधा ज्वलन् श्रीपार्श्वनाथमुपद्रोतुं समागात् । स सुराधमः पापात्मा दुष्टो धृष्टो हृष्टः पुष्टः श्रीपार्श्वनाथप्रभोरग्रे प्राप्तः । तेन गर्जन्तो गजा जंगमाः शैला इव विकृताः । तैर्दूरादेत्य प्रभुः स्वशुंडया चुक्षुभे । तैर्भीष्मैः प्रभुर्नाक्षोभि । तेऽप्यदृश्यतां प्राप्ता हीणा भीता इवागमन् । पश्चात्प्रभोरग्रे दंष्ट्राककचभीषणान् तीक्ष्णनखकुद्दालान् अग्निप्रदीप्तदृशो बहून् व्याघ्रान् स विचक्रे । ततो महीं पुच्छैरास्फोटय प्रभोरग्रे दूरादेत्य

पूत्कारशब्दं चक्रुः । तथापि प्रभुमक्षोभ्यं विदित्वा स्फुरध्ध्यानप्रदीपानुभावाद् दूरं ययुः । ततस्तेन चित्रका त्रिपसर्पा वृश्चिकाश्च विकृतात्मना विकृताः । तैरपि भगवान्न चुक्षुभे । तिलतुषमात्रमपि न क्षुब्धः । ततो बह्वीभिर्वाद्यं वादयन्तीभिर्गानं कुर्वन्तीभिः किंनरीभिरनेकहावभावकामचेष्टाभिर्भगवान् न चालितः । ततोऽपि प्रभुर्न क्षुब्धः । बह्वीभिर्वात्याभिः कथमपि मन्दरो यथा न चलति तद्वत्प्रभुर्न चलितः । ततस्तेन पापात्मना प्रभोः शिरसि महती रजोवृष्टिर्विदधे । तया रजोवृष्ट्यापि भगवान् मनागपि न चलितः । ततो महतादरेण तेन दुष्टात्मना प्रेता वेताला विकीर्णकेशविकृताकृतिमर्त्यमुंडप्रालंबभृद्विकृताकारा विकृताः । तैरपि भगवान् न दुःख्यभवत् । तैरपि न क्षुब्धः प्रभुः । ततो बाढामर्षो जातः । तदनु स पापो भगवन्तं नीरे निमज्जयितुमंबरे घनं विचक्रे । कालजिह्वासदृशी विद्युदद्युतत् । तर्जितैर्गर्जितैः सर्वदिशोऽपूरयत् । जगदिदमाकुलमभूत् । तदा मुशलाकारधाराभिर्घनो वर्षितुं प्रवृत्तः । रोदस्येकजला जज्ञे । जन्तवो जलैः प्लाविताः । तदा च प्रभोर्जानुकटीकंठदघ्नं नीरमभवत् । क्रमान्नीरं नासाग्रमाययौ । तथापि भगवान्निजध्यानान्नाचलत् । भवांभोधिपतद्विश्वाधारस्तंभ इव स्थितः । तदा धरणोरगेन्द्रस्यासनकंपोऽभवत् । ततो भगवन्तं सोपसर्गं ज्ञात्वा स्वदेवीभिः सहाययौ । तत्र प्रभुं नत्वा प्रभोः पादयोरधोंऽभोजं न्यधात् । प्रभोः शिरसि धरणश्छत्रं सप्तभिः फणैरूर्ध्वं विचक्रे । तदा च भगवान् ध्यानसमाधिसुखलीलात्मांबुजे स्थितो राजहंस इव शुशुभे । विभोरग्रे धरणदेव्यो भक्तिनिर्भरा वेणुवीणामृदंगादिवाद्यपूर्वं संगीतं नाट्यं च चक्रुः । धरणस्तु भक्तिमान् कमठश्चोपसर्गकृत्, तयोस्तुल्या मनोवृत्तिः प्रभोरभूत् । एवं सत्यप्यमर्षेण वर्षन्तं मेघमालिनं निरीक्ष्य धरणः कोपात्साक्षेपमिदमब्रवीत्—"भो दुर्मते स्वस्यानर्थाय किमेतदारेभे । अहं भगवतो भृत्यः । अतः परं न सहिष्ये । काष्ठान्तर्दह्यमानोऽहं भगवतः प्रसादादिन्द्रत्वं प्राप्तः । त्वमपि पापान्निपे-

धितः। तत्र कोऽपराधः कृतः?। नाथे निष्कारणबान्धवेऽस्मिन्निष्कारणारिः कथं भवसि?। त्रिजगत्तारणक्षमोऽयं भगवान् जलैर्न निमज्यते। नूनमगाधे भवाम्भोधौ त्वमेव त्रुडिष्यसि"। इति धरणोरगेन्द्रेण मेघमाली हक्कितः। तदा मेघमाली भीतस्तं तथास्थितं भगवन्तं दृष्ट्वा पार्श्वे नागेन्द्रसेवितं च निरीक्ष्य जलं संहृत्य प्रभोः पादयोः पतितः। योजितकरसंपुटो मेघमाली प्रभुं क्षमयित्वा भक्त्या नत्वा पश्चात्तापपरो निजं स्थानं ययौ। धरणेन्द्रोऽपि भगवन्तं निरुपद्रवं ज्ञात्वा विभुं स्तुत्वा तस्य चरणौ नत्वा स्वकीये भवनेऽगात्।

अथ प्रभो रात्रिर्व्यतिचक्रमे। तदा भगवतो व्रतवासरात्त्र्यशीतिदिनेषु व्यतीतेषु चतुरशीतितमे दिने विशाखास्थे निशाकरे चैत्रकृष्णचतुर्थ्यां घनघातिकर्मचतुष्टये क्षयं गते कृताष्टमतपसः शुक्लध्यानं ध्यायतः श्रीपार्श्वजगत्पतेः पूर्वाह्णे केवलज्ञानमुत्पन्नं। तदा लोकमलोकं च त्रिकालविषयं ज्ञानं सर्वं जानाति स्म ददर्श च। ततः सुराणामसुराणां चासनानि चकंपिरे। तदा हृष्टाः सुराः सर्वे स्वस्वकृत्यानि चक्रिरे।

तथाहि—वायुकुमाराः क्ष्मामेकयोजनप्रमाणाममार्जयन्। मेघकुमाराः सुगन्धांबुवृष्टिभिः तां क्ष्मामेकयोजनप्रमाणामसिञ्चन्। तदनु व्यन्तराः स्वर्णरत्नैर्भूमिपीठं बबन्धुः। तत्र विचित्रपुष्पाण्यधोवृन्तानि किरन्ति स्म। ततो रत्नमाणिक्यकाञ्चनैस्तोरणानि चतुर्दिशं तद्भूतिशोभायै विचक्रुः। ततो वैमानिका ज्योतिष्का भुवनेशाः सुरा मणिरत्नहेमकपिशीर्षैरुपशोभितान् रत्नरूप्यमयांस्त्रीन् वप्रान् व्यधुः। ततो वप्रचतुर्द्वारे वाप्यः स्वर्णाब्जैरलंकृता व्यन्तरैः कृताः। द्वितीयस्य प्राकारस्यान्तरे चैशानकोणे स्वामिविश्रामहेतवे देवच्छन्दं तन्निपा विचक्रुः। व्यन्तरैस्तत्र समवसरणे सप्तविंशतिधन्वोच्चैरशोकतरुर्निकुर्वितः। तस्याधो त्रिविधै रत्नैस्ते पीठं

विदधिरे । तस्योपरि मणिमयं प्रतिच्छन्दकं व्यधुः । तन्मध्ये पूर्वदिग्भाग रत्नमयं सिंहासनं व्यधुः । छत्रत्रयं तत्र दध्रे । यक्षाभ्यां च चामरद्वयं विदध्रे । तत्र द्वारे पुरः स्वर्णांबुजस्थितं धर्मचक्रं चक्रुः । तत्रान्यदपि यत्कृत्यं तत्सर्वं व्यन्तरा व्यधुः । तथाहि—

**वारसजोयणमुसहे, ओसरणं आसि नेमिजिणं जाव। दो दो गाउ ऊणं, पासे पणवीस चउवीसे ॥१॥**

ततस्तु सुरसंचारितस्वर्णपद्मन्यस्तपदः क्रमात्समवसरणं सुरकोटिवृतो ययौ । तत्र प्रविश्याशोकतरोः प्रदक्षिणां प्रभुश्चक्रे । तत्र "नमो तित्थस्स" इति पदेन तीर्थं नत्वा प्राङ्मुखः सिंहासनमशिश्रियत् । तत्र द्राक् प्रभोः प्रतिरूपाणि रूपाणि दिक्ष्वन्यासु तिसृष्वपि तादृशान्यानि व्यन्तराश्चक्रुः । तदा वासवः प्रभोः शरीरस्य महोऽसह्यं ज्ञात्वाङ्गमध्यात्तेज ईषदीषद् गृहीत्वा भामंडलं चकार । तद्भामंडलं प्रभोः शिरसः पृष्ठे रेजे । प्रभो पुरो रत्नमयो ध्वजो रराज । तदा जलदवद्गंभीरध्वनिर्दिवि दुन्दुभिर्गर्जारवं करोति । तत्र द्वादश पर्षदो यथास्थानमुपविशन्ति । तथाहि—

**साधुवैमानिकीसाध्व्यः स्युराग्नेय्यां विभोः क्रमात्। नैर्ऋत्यां भवनपतिज्योतिर्व्यन्तरयोषितः ॥१॥**
**वायव्या दिशि भवनज्योतिर्व्यन्तरनाकिनः। वैमानिका नरा नार्यः स्युरैशान्यामनुक्रमात् ॥२॥**

त्रयोऽपि पर्षदश्चतुष्कद्वारैः प्रविश्य प्राच्यादिषु दिक्षु नतिं कृत्वा यथास्थानमुपविशन्ति । तदादौ साधुसाध्वीनामभावात्तत्र न कोऽप्युपविशति । तिर्यङ्नरामराः कोटिशस्तत्र मान्ति स्म । न कस्याप्याबाधा भवेत् । वप्रस्य द्वितीयस्यान्तस्त्यक्तविग्रहास्तिर्यञ्चस्तिष्ठन्ति । उक्तं च—

सारंगी सिंहशावं स्पृशति सुतधिया केकिकान्ता भुजंगं
मार्जारी हंसबालं प्रणयपरवशान्नन्दिनी व्याघ्रपोतम्।
वैराण्याजन्मजातान्यपि गलितमुदा जन्तवोऽन्ये त्यजन्ति
श्रित्वा साम्यैकभावं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥१॥

त्रैलोक्यनाथस्य श्रीपार्श्वनाथस्य चेदृश वैभवमुद्यानपालकमुखाच्छ्रुत्वाऽश्वसेननरेश्वरो रोमाञ्चितवपुर्जज्ञे । तस्मै धनपालकायागलभान्याभरणानि पारितोपिकं ददौ । ततस्तोपितो वामादेव्यै प्रभावत्यै च तद्वैभवं सर्वं निवेद्य हस्त्यश्वरथसंवाहं कारयित्वा भूपतिर्वामादेव्यादिसहितो महर्ध्या श्रीपार्श्वनाथं जिनेन्द्रं प्रभुं वन्दितुं ययौ । नृपतिः पञ्चाभिगमपूर्वकं त्रिः प्रदाक्षिणीकृत्य प्रभुं भक्त्या नत्वा एवमस्तवीत । तद्यथा—

एकः पुरुपसिंहस्त्वं मोहमत्तेभनिग्रहात्। इतीव विदधे नाथ सिंहासनमिदं सुरः ॥१॥
रागद्वेपमहाशत्रुजयोच्छ्रयशशी इव। रेजाते चामरे चोभे पक्षयोरुभयोस्तत्र ॥२॥
ज्ञानदर्शनचारित्रराज्यं त्वय्येकतां गतम्। अतस्तेषामिवैषा ते मूर्ध्नि च्छत्रत्रयी स्थिता ॥३॥
चतुर्धा देशतो धर्मं चतुर्मुखे तव ध्वनिः। दिवश्चतुर्दिशं जातः कपायानिव धर्षितुम् ॥४॥

मन्दरादीनि पुष्पाणि पञ्चधा देशनाभुवि । किरन्ति तव पञ्चाक्षजयतोषादिवामरैः ॥५॥

शाखाशिखरस्तालपद्रादिग्गतैः शंसतीव ते । षण्णां जीवनिकायानां रक्षां ककेल्लिरुल्लसन् ॥६॥

दग्धससभयैधस्त्वात् ससार्चि.सममप्यदः । धत्ते भामंडलं नाथ त्वत्संगादिव शैत्यताम् ॥७॥

भूत्वा (म्यां) दुन्दुभिरप्युच्चैर्ध्वनन्नष्टासु दिक्ष्वसौ । अष्टकर्मरिपुव्रातविजयं शंसतीव ते ॥८॥

प्रातिहार्यश्रियं मूर्तामन्तरंगां गुणश्रियम् । इत्थं दृष्ट्वा मनो नाथ कस्य न स्यात्त्वयि स्थिरम् ॥९॥

इत्थं जगन्नाथं श्रीपार्श्वनाथ स्तुत्या स्तुत्वा श्रीमानश्वसेननरेश्वर उदारधीः पर्युपासना कुर्वन् सपरिच्छदो यथास्थानं निविष्टः । ततः श्रीपार्श्वनाथजिनेन्द्रो योजनगामिन्याऽमृतस्राविण्या सर्वजीवानुगया गिरा माधुर्यदेशना व्यधात्। यतः—

द्राक्षा संकुचिता भीता सिता धत्ते तृणं मुखे । क्षीरं नीरवहं नित्यं श्रीजिनानां गिरः पुरः ॥१॥

अथ भगवतो व्याख्यानस्वरूपं व्याख्यायते । तथाहि—

अहो भव्याः श्रयन्त्वन्तर्मुखीभावं मनोदृशा । निरीक्ष्यासारमुज्झित्वा कुरुध्वं सारसंग्रहम् ॥१॥

यतः—

क्रोधवाडवदुर्दर्शे मानपर्वतदुर्गमे । मायाप्रपञ्चनक्राढ्ये लोभावर्तभयंकरे ॥ २॥

जन्ममृत्युजरारोगशोकदुःखजलैर्भृते । इन्द्रियेच्छामहावातोद्धतचिन्तोर्मिसंकुले ॥३॥
अस्मिन्नपारे संसारे पारावारे शरीरिणाम् । महारत्नमिवानर्घ्यं मानुष्यमतिदुर्लभम् ॥४॥
जंबुद्वीपो भवेदाद्यो द्वितीयो धातकी स्मृतः । पुष्करवरद्वीपार्धं सार्धं द्वीपद्वयं भवेत्[1] ॥५॥
महाविदेहान् पञ्चैव पञ्चैव भरतानि च । पञ्चैरावतकानीह एताः स्युः कर्मभूमयः ॥६॥
तत्रापि विजयानां स्याच्छतं षष्ट्याधिकं तथा । भरतैरावतक्षेत्रदशकं सर्वसंख्यया ॥७॥
इत्येवं कर्मक्षेत्राणां स्यात्सप्तत्यधिकं शतम् । प्रतिक्षेत्रं च तत्राप्यनार्याणां खंडपञ्चकम् ॥८॥
षष्ठं खंडं भवत्यार्यं प्रायो म्लेच्छाद्यधिष्ठितम् । तत्राप्यनार्यका देशा धर्मसामग्र्यभावतः ॥९॥
तत्रापि सुकुलोत्पत्तिर्दीर्घमायुररोगता । धर्मेच्छा सुगुरोर्योगः सामग्री [ग्रन्थः] पञ्च दुर्लभा ॥१०॥
प्रमादपञ्चकस्तंभमोहशोकादिकारणैः । लब्ध्वाऽप्यधन्या मानुष्यं न लभन्ते हितं श्रुतम् ॥११॥
हितं श्रुत्वापि कस्यापि मतिर्धर्मे प्रजायते । न हि शुक्तिषु सर्वासु मेघांभो मौक्तिकं भवेत् ॥१२॥

१ जंबूद्वीपमिति द्वीपं धातकीखंडद्वीपकम् । पुष्करवरद्वीपार्धसार्धं द्वीपद्वयं भवेत् ॥ इति प्रत्यन्तरपाठः ।

अतो धर्मः सदा सेव्यो हेतुरूपः फलार्थिभिः। दानशीलतपोभावभेदात्वेष चतुर्विधः ॥१३॥
तत्र तावत्त्रिधा तज्ज्ञैर्दानधर्मः प्रकीर्तितः। ज्ञानदानाभयदानधर्मोपष्टंभदानतः ॥१४॥
सम्यग्ज्ञानेन वेत्त्यात्मा पुण्यपापे ततस्तयोः। प्रवृत्तिं च निवृत्तिं च कृत्वा मोक्षे सुखं व्रजेत् ॥१५॥
विनाशः शेषदानानां कुतोऽपि क्वापि दृश्यते। ज्ञानदाने पुनर्वृद्धिः सिद्धिस्तस्य परस्य च ॥१६॥
याति रागगणो ज्ञानादर्कात्तम इव ध्रुवम्। तेनान्यो नोपकारोऽस्ति ज्ञानदानसमो भुवि ॥१७॥
किं चाथ बहुधा ज्ञानदानात्त्रैलोक्यपूजितः। सर्वज्ञो भवतीत्यत्र धनमित्रनिदर्शनम् ॥१८॥

अत्र भगवता त्रिधा दानं प्ररूपितं ज्ञानदानं १ अभयदानं २ धर्मोपष्टंभदानं ३। तत्र भगवान् ज्ञानदानमाहात्म्योपरि धनमित्रनिदर्शनं प्रकाशयति। तथाहि—

## अथ धनमित्रकथा।

अथ तत्र मगधाभिधे देशे राजपुरं पुरं वर्तते। तत्र जयन्तो नाम पार्थिवो जयति। तस्य राज्ञः कमलावती राज्ञी राजते। तयोश्चन्द्रसेनविजयनामानावसानगुणशालिनौ सुतौ स्तः। किं तु प्राक्कर्मदोषेण परस्परकृतामर्षौ तेजसोऽसहिष्णू तौ दिनान्निर्गमयतः।

१ अतो न क्वापि दृश्यते इति पाठांतरं.

एवं कालो याति । अन्येद्युर्नृपमास्थानस्थितं वेत्री व्यजिज्ञपत्—' उभौ नरौ द्वारस्थौ भवद्दर्शनमभिलषतः ' । तदा राज्ञोक्तं—'ममागच्छतां' । नृपादेशात्तौ तत्रागतौ । नृपं नत्वा नृपाग्रे लेखं मुमुचतुः । राजा तं समुद्वेष्ट्य स्वयं वाचयामास—" स्वस्ति श्रीमगधेश्वरं श्रीविजयरत्नं श्रीजयन्तनामानं सकलमहानृपतिशिरोमणिवरं गंगोपान्तभुवः स्वामी कुरुदेवः पञ्चांगं नत्वा विज्ञपयति—, युष्मत्पादांबुजद्वन्द्वस्मरणकरणानुभावान्नः सातमस्ति । किं तु सीमालदेशपतिः सेवालनृपो मदीयदेशे विप्लवं करोति । अतः परं त्वमेव शरणं प्रमाणं " । भूपाल इति वाचयित्वा स्फुरत्कोपारुणेक्षणो भटसामन्तानुवाच—" अरे भटाः पश्यत पश्यत । सुप्तस्य सिंहस्य शिरःकंडूयनं कर्तुं शशकः समुद्यतोऽस्ति । सेवालो मूढः किं कथं कर्तुमुपस्थितोऽस्ति ? । तस्माद्भो भटाः शीघ्रं शस्त्रसंनद्धा भवन्तु " । तदा कुमाराभ्यामुभाभ्यां नृपो विज्ञप्तः—'कस्योपरि समारंभः ? ' । नृपेणोक्तं–'सेवालो नृप उपप्लवं करोति, तस्योपरि समारंभः ' । पुत्राभ्यामुक्तं–" आम तात शृगालोपरि सिंहस्य कः पराक्रमः ? । यतः—

यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः । तदपि न कुप्यति सिंहोऽसदृशपुरुषेषु कः कोपः॥१॥"

नृपेणोक्तं—" स सेवालः सेवालवद् दुर्जनोऽस्ति दुःसाध्यश्चास्ति । कथं ?

यद्यपि मृगमदचन्दनकुंकुमकर्पूरवेष्टितो लशुनः । तदपि न मुञ्चति गन्धं प्रकृतिगुणा जातिदोषेण ॥१॥"

पुत्राभ्यां विज्ञप्तं—" आम तात ममादिश्यतां । तदरिं मदर्पं वयं हन्मः । सेवके सति प्रभोः कः प्रयासः " । तन्निशम्यामात्येनोक्तं–' गजेन्द्र राजपुत्राभ्यां साधूक्तं । एवं जल्पितुं चान्यः को वेत्ति ? ' । ततो मुदितेन राज्ञा प्रत्यर्थिनिग्रहे ज्येष्ठसुतः

समादिष्टः । तदाऽमर्ष[illegible] गन्तुमुद्यतः । तदा सभा सक्षोभा सजाता । नृपेणोक्तं—" वत्स भवान् किं कथं कुपितः? ज्येष्ठे सति कनिष्ठस्योत्थापनं नैव युज्यते । उत्तमाः सन्मानमपि नेच्छन्ति । ज्येष्ठसहोदरः पितृतुल्यः । तस्मिन् सति दीयमानं राज्यमपि ( कनिष्ठः ) नेच्छति " । राज्ञेति प्रज्ञापितोऽपि नोपशाम्यति । ततो मंत्रिभिः सामगिरा भणितः—" भोः चन्द्रसेन त्वं दक्षोऽपि पितुर्वचो न मन्यसे । तव दुर्विनीतत्वं नैव घटते " । इत्यादिवचनैश्चन्द्रसेनः प्रसन्नो जातः । ज्येष्ठो विजयकुमारः सैन्यदुर्द्धरः सेवालं जेतुं प्रतस्थे । स्वदेशस्य सीमसन्धिं गत्वा दूतमुखात्सेवालस्येति कथितं—' भो याहि निजं स्थानं, अहं समागतोऽस्मि ' । दूतवचनं श्रुत्वा भृकुटीभीषणः सेवालोऽप्यवदत्—' युद्धसज्जो भव, वाचां फल्गुवल्गितैः किं ? मम भुजबलनिर्णयं पश्य ' । इत्यमर्षवशात्सैन्यद्वये मिलिते तयोः संग्रामोऽजनि । भवितव्यतावशात्कुमारस्याखिलं सैन्यं भग्नं । पिता जयन्तराजस्तच्छ्रुत्वा स्वयं गन्तुमना जातः । तदा लघुपुत्रचन्द्रसेनेन विज्ञप्तं—' तात मामधुना प्रेषय ' । ततोऽमात्यैः कथितं—' पुरापि कुमारो हठात्प्रतिषिद्धः, सम्प्रत्यादेशः खलूचितः ' । नृपेण तत्प्रतिपद्य कुमारः सविशेषबलान्वितः प्रहितः । चन्द्रसेनोऽपि कुमारो नित्यप्रयाणकैः शत्रुजयाय चलितः । अकस्मात्तत्र गत्वा युद्धं कृत्वा तमग्रहीत् । नृपांगजः सेवालं ससांगश्रिया सहादाय स्वनगरं ययौ । राज्ञा महद्धर्या स प्रवेशितः । तं रिपुं संमान्य नृपः पूर्वस्थितावस्थापयत् । यतः—

" सन्तो गृहागतं दीनं शत्रुमप्यनुगृह्णते । "

चन्द्रसेनकुमारं बुद्धिपराक्रमादिगुणैर्ज्येष्ठं मत्वा राजा प्रसन्नः सन् युवराजपदेऽयोजयत् । विजयोऽत्यन्तपराभवाल्लज्जितो

निशि निर्गत्य चलितः । देशान्तरं क्रान्त्वा बहुमहीं भ्रमन् शून्यमेकं पुरं प्राप्य निशि शून्यात्मा भग्नाजीर्णदेवकुले सुष्वाप । प्रातस्ततः स्थानाच्चलितः । यतः—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ १ ॥

स एकाकी दुःखी जातः । यदुक्तं—

जिणइ दिनि वित्त न अप्पणे, तिण दिन मित्त न कोय । सूरह कमलइ मित्त पुण, जल विण वयरी सोय ॥१॥

एकाकी तत्रेतस्ततो भ्रमन् उड्डीयाणपुरं प्राप्तः । तत्र कीर्तिधरो मुनिः कायोत्सर्गे स्थितोऽस्ति । तं दृष्ट्वोल्लसितानन्दकन्दः सहसा संजातः । स हृदि दध्यौ—“ अहो मे भाग्योदयादत्र साधुदर्शनं जातं । यतः—

देवस्य दर्शनात्तुष्टिराशीर्वादाद् गुरोः पुनः । प्रभोश्च दानसन्मानाद्धर्षः कस्य न जायते ॥ १ ॥

तदेनं प्रणम्यात्मानं निर्मलं करोमि ” । इति शुद्धधिया तं मुनीश्वरं त्रिः प्रदक्षिणीकृत्य वन्दते । मुनिनापि धर्मलाभाशिषं दत्वा संतोषितः । सोऽपि विनयेन योजितकरकमलो भावेन यथास्थानं स्थितः । मुनिनापि धर्मदेशना प्रारब्धा । तथाहि—

आर्यदेशकुलरूपबलायुर्बुद्धिबन्धुरमवाप्य नरत्वम् ।
धर्मकर्म न करोति जडो यः पोतमुज्झति पयोधिगतः सः ॥ १ ॥

धर्मो मोहमहारात्रिव्याकुलानां दिनोदयः। शुष्यतः सौख्यवृक्षस्य धर्म एव घनाघनः ॥ २॥

भव्यैराराधितः सम्यग्दाता यः सुखसंपदाम्। उच्चाटनं च विपदां दुर्गतौ पतदंगिनाम् ॥ ३॥

अबन्धूनामसौ बन्धुरसखीनां पुनः सखा। अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥ ४॥

सम्यग्धर्मस्तु सर्वज्ञादिष्टो जीवदयामयः। गृहस्थयतिभेदेन यथाशक्त्या तमाश्रय ॥ ५॥

विजय इत्यादिदेशनामंत्रैर्ध्वस्तमोहमहाविषः सन् सद्धर्मचेतना प्राप्य व्रतमग्रहीत्। मुनीश्वरस्तस्य दीक्षां दत्वा धर्मशिक्षामेवं दत्तवान्–"अहो विजयराजर्षे त्वमेकमना हितं शृणु। भो मुने जिनेन रागद्वेषादयो ये शत्रवो हठेन निगृहीतास्तान् ये पुष्णन्ति तेषां जिनः कथं प्रसीदति ? अतः कारणात्त एव रागद्वेषादयः शत्रवो विजेतव्याः। पुनरपि शृणु शास्त्रोक्तं—

अजीर्णं तपसः क्रोधो ज्ञानाजीर्णमहंकृतिः। परतातिः क्रियाजीर्णं जित्वा त्रीन् निर्वृतो भव ॥ १॥

तथा च—

क्षान्त्या क्रोधो मृदुत्वेन मानो मायार्जवेन च। लोभश्चानीहया जेया कषाया इति संवरः ॥ २॥

अज्ञानाज्जायते दुःखं सज्ज्ञानाच्च सुखं पुनः। अभ्यस्यं यत्तदा तेन स्वात्मा ज्ञानमयो भवेत् ॥ ३॥

धीरः सचेतनो मौनी यो मार्गे यात्यसंगतः। बलिष्ठैरपि मोहाद्यैः स शिवं यात्यगंजितः ॥ ४॥

इति तत्त्वोपदेशाख्यं मयान्नं परिवेषितम्। तव दीक्षामये पात्रे तद्भुक्त्वा त्वं सुखी भव ॥५॥"

पुनरपि गुरुर्जगौ—"हे महानुभाव यथा रोहिण्या व्रीहिपञ्चकं प्राप्य वृद्ध्यानीतं, तदा भवतापि महाव्रतपञ्चकं प्राप्य वृद्धया नेतव्यं"। अथ तत्त्वामृतास्वादो विजयो जगौ—'प्रभो का रोहिणी ? तया कथं व्रीहिपञ्चकं वृद्ध्यानीतं ?'। गुरुरुवाच—'तत्संबन्धं शृणु। तथाहि—

## ।अथ रोहिणीकथा।

हस्तिनागपुरे दत्तः श्रेष्ठी वसति। तस्य श्रीदत्ता भार्या। तयोश्चत्वारः पुत्राः सन्ति गंगदत्तदेवदत्तजिनदत्तवासवदत्ताख्याः। उज्झिताभक्षिकारक्षिकारोहिणीनामानश्चतस्रः स्नुषाः सन्ति। अथान्यदा दत्तश्रेष्ठी स्वगृहकर्मनियोगाय चतस्रः पुत्रवधूः परीक्षितुं ममारेभे। अथान्यदा स श्रेष्ठी वधूनां पितृवर्गं स्वजनांश्च संमील्य भक्त्या भक्तादिसत्कारेण भोजनादिकं दत्वा यथौचित्यं न्यवीविशत्। तत्समक्षं ज्येष्ठानुक्रमतो वधूः समाकार्य स व्रीहिपञ्चकं दत्वा प्रत्येकमिदमादिशत्—'हे वध्वोऽमी पञ्च व्रीहयो धार्याः। यदा मया याच्यन्ते तदा मम देयाः'। इत्युक्त्वाऽखिलं जनं विससर्ज। तदा ज्येष्ठया चिन्तितं—"वृद्धो ग्रथिलो यदित्थं द्रव्यव्ययं कृत्वा स्वजनान् भोजयित्वा स्वजनसमक्षं पञ्चामी व्रीहयो दत्ताः। किं तेषां विडंबना ?"। इति चिन्तयित्वा व्रीहयो बहिस्त्यक्ताः। द्वितीयया चिन्तितं—'किं करोमि ?' क्वाहं स्थापयामि ?' इति संचिन्त्य भक्षिताः। तृतीयया चिन्तितं—"यत्तु वृद्धेन पुरुषेणाडंबरपूर्वकं स्वजनसमक्षं व्रीहयोऽमी दत्तास्तत्केनचित् कारणेन भाव्यं'। इति विमृश्य शुद्धवस्त्रेण बध्वा पेटिकामध्ये मुक्त्वा

यत्नेन स्थापिताः, प्रतिदिनं संभालयति । चतुर्थ्या रोहण्या स्वबन्धूना समर्प्य प्रातरेव वापयित्वा वृद्धिं नीताः बहवः संजाताः । अथ पञ्चमे वर्षे चिन्तयति श्रेष्ठी—"पञ्च वर्षाणि जातानि । मया वधूनां व्रीहयो दत्ताः । विलोकयामि, किं कृतं ?" इति विमृश्य स्वजनान् संमिल्य भक्त्या भोजयित्वा स्वजनसमक्षं व्रीहयो वधूनां पार्श्वे याचिताः । प्रथममुज्झितां वधूं प्रोचे—"वत्से तव स्मरति ? इतोऽतीते पञ्चमे वर्षे तव मया पञ्च व्रीहयो दत्ता अभूवन्" । वध्वा प्रोक्तं—'सत्यं, दत्ता अभूवन्'। श्वसुरेणोक्तं—'ते मम दीयन्तां' । उज्झिता ततः स्थानाद् गृहमध्ये गत्वाऽन्यान् पञ्च व्रीहीन् समानीय ददौ । तदनु श्वसुरेणोक्ता—'वत्से त एवैते न वा ?' । तया कुलीनत्वाद्यथास्थितं सत्यमुक्तं—'आम तात ते न, अन्ये एते' । 'तत्कथं वत्से ?' । 'ते तु तदैव मया त्यक्ताः, एते अन्ये एव' । तदा श्वशुरेण क्रोधवशादुक्तं—

"दानानुसारिणी कीर्तिर्लक्ष्मीः पुण्यानुसारिणी । प्रज्ञानुसारिणी विद्या बुद्धिः कर्मानुसारिणी ॥१॥

इत्युक्त्वा सोज्झिता स्वालये भस्मच्छारपुंजादौ नियोजिता । सोज्झितापि तत्कार्यं कुर्वन्ती दुःखिनी जाता । तदनु द्वितीया वधूः श्रेष्ठिना समुल्लापिता—'वत्से त्वमपि व्रीहीन् देहि' । सापि गृहमध्यादन्यान् शालिकणानानीय ददौ । श्रेष्ठिनोक्तं—"हे पुत्रि अमी व्रीहयस्ते एवान्ये वा ? सत्यं वद । यतः—

एकत्रासत्यजं पापं पापं निःशेषमन्यतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥१॥"

ततस्तया सत्यमुक्तं—'आम तातान्ये एते व्रीहयः' । 'तत्कथं' ? इति पृष्टे साऽब्रवीत्—"यदा पूज्यैर्मम व्रीहयो दत्तास्तदा

मया चिन्तितं, क्वाहं मुञ्चेयं ? पतिष्यन्ति अमी कणाः इति विचिन्त्य मया भक्षिताः " । ततः श्रेष्ठिना विमृश्य स्वजनसमक्षं स्वभवने खंडनं पीषणं रन्धनं परिवेषणादिकं कार्यं ददे। सापि तत्कार्यं कुर्वन्ती क्षणमात्रमपि सुखं न प्राप । तृतीया रक्षिकानाम्नी वधूः श्रेष्ठिना समुल्लापिता—'वत्से शालिकणान्मम देहि' । ततः सा सहर्षं स्ववेश्मनि समेत्य स्वभूषणपेटिकामध्याच्छालिकणानादाय श्वशुरस्य प्रदत्तवती । श्वशुरोऽवदत्—'ते एवान्ये वा ? ' । तयोक्तं–'ते एव, नान्ये, मया स्वाभरणपेटिकायां स्थापिता अभूवन्' । ततस्तेन सा द्रव्यस्वामिनी कृता । यत्किंचिद् गृहे रत्नस्वर्णादिकं वस्त्वस्ति तत्स्वामिनी जाता सा सुखिनी बभूव । जनैः प्रशंसिता । ततस्तुरीया रोहिणी वधूः समालापिता—'पुत्रिके मम त्वं पञ्च व्रीहिकणान् प्रदेहि ' । ततस्तया प्रणम्योक्तं—' आम तात शकटानि दीयतां ' । श्रेष्ठिनोक्तं—' तत्कथं ? ' तया वध्वोक्तं—"आम तात श्रूयतां–यदा मम पञ्च व्रीहिकणाः प्रदत्तास्तदा मया चिन्तितं मम श्वशुरेण बहुजनसमक्षं व्रीहयो दत्तास्तत्केनचित् कारणेन भाव्यं इति विमृश्य मया बन्धोः करे दत्वा प्रोक्तं—अमी कणा वापयितव्या इति । तेनापि कौटुंबिककरे दत्ताः । तेन चोप्ताः । क्रमेण वर्षं वर्षं प्रत्युप्ता बहवो जाताः कोष्ठागारे क्षिप्ताः । तस्माच्छकटानि देयानि " । ततस्तुष्टेन श्रेष्ठिना शकटानि दत्तानि । ते शालयः समानीताः । सर्वैरपि प्रशंसिता ' धन्येयं स्नुषा, यस्या ईदृशी शुभा मतिः ' । ततः श्रेष्ठिना सा गृहस्वामिनी कृता—"अस्या आज्ञया सर्वकृत्यानि कर्तव्यानि, इयं मद्गृहस्वामिनी"। ततः सा सुखिनी जाता । अथोपनयमाह—यः श्रेष्ठी स सद्गुरुः । ये तु पञ्च व्रीहयस्ते तु पञ्च महाव्रतानि। ये पञ्च महाव्रतानि गृहीत्वा त्यजन्ति ते उज्झितावद् दुःखं प्राप्नुवंति, असारे संसारे परिभ्रमणं कुर्वन्ति। ये तु व्रतानि गृहीत्वा विराधयन्ति, तेऽपि द्वितीयस्नुषावत्कष्टं प्राप्नुवन्ति । ये तु गुर्वाज्ञया पञ्च महाव्रतानि गृहीत्वा प्रतिपालयन्ति, महाव्रतेषु निरतिचारयत्नं कुर्वन्ति ते

[illegible]

त्वयापि व्रतपञ्चकं गृहीत्वा परां वृद्धिं प्रापयितव्यं "। विजयोऽपि तथैव प्रतिपद्य श्रुताध्ययनतत्परः सम्यक् संयमं पालयन् गुरुणा साकं विहरति। कालेन तं योग्यं ज्ञात्वा गुरुः स्वपदे स्थापयित्वा संमेतगिरिं समारुह्यानशनं गृहीत्वा मोक्षपदं जगाम।

अथ विजयसूरिराचार्यः स्वशिष्याणां वाचनाध्यापनादिना समुद्युक्तो भुवि विहरन्नुच्चैर्महतीं प्रतिष्ठां प्राप। एवं बहुकाले गते श्रमधर्मेण विविधोत्तरप्रदानेन भृशं श्रान्तो मनस्येवं चिन्तयति—" अमी मुनयो धन्याः यस्माज्जडाः सन्ति। ये परप्रश्नशास्त्रार्थार्तिरहिताः सुखेनासते, अतः कारणान्मूर्खत्वं रुचिरं। यतः—

> मूर्खत्वं हि सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा
> निश्चिन्तो बहुभोजनोऽत्रपमना रात्रौ दिवा शायकः।
> कार्याकार्यविचारणान्धबधिरो मानापमाने समः।
> प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥

अहं चेत्पठितोऽस्मि तदाहं शास्त्रार्थोत्तरप्रदानेन दुःखवानस्मि। तदा तेनाचार्येण ज्ञानावरणं कर्म बद्धं। स कालेनाप्रतिक्रान्तो मृत्वा सौधर्मे सुरोऽजनि। तत्रायुः प्रतिपाल्य ततश्च्युत्वा पद्मपुरे धनश्रेष्ठिसुतोऽभवत्। जयदेव इत्यभिधानं तस्याभवत्। स कुमारत्वे लेखशालायां पठनाय मुक्तः। पंडितः पाठयति परमक्षरमात्रमपि किञ्चिन्नायाति। किं करोति ?। जनकः खेदं धत्ते चिन्तयति च—

"अजातमृतमूर्खेभ्यो मृताऽजाता वरं सुताः। यतस्ते स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥१॥"

देवानां पूजादिकमुपयाचते, विविधौषधानि करोति, परंतु किमपि नायाति। यौवनं प्राप्तः। लोका वदन्ति—'अयं मूर्खः'। वैराग्यात्स विमलचन्द्राचार्यपार्श्वे प्रव्रज्यां जग्राह। स क्रमेण चारित्रं पालयति, योगोद्वहनं करोति तत्रापि किंचित्पठनं नायाति। द्वादश वर्षाण्याचाम्लादि तपः करोति, तथापि किञ्चिदक्षरमात्रमपि नायाति। गुरुणा प्रोक्तं—" भोः साधो तव पूर्वार्जितं कर्म मकटीभूतं खेदं मा कुरु ' रे जीव मा रुष मा तुष ' एवं पठ "। तदपि नायाति। ' मासतुस मासतुस ' एवं स पुनः पुनः पठति। लोका वदन्ति—" अयं मासतुसनामा ऋषिः ' एवं नाम प्रदत्तं। स मासतुसर्षिरीहापोहं कुर्वन्नाचाम्लानि कुर्वन् शुक्लध्यानं ध्यायन् केवलज्ञानं प्राप्तः। तत्रासन्नसुरैर्दुन्दुभिध्यानपूर्वकं स्वर्णपद्मरचना कृता। तत्रासीनः केवली धर्ममादिशत्—"भो जना मया पूर्वभवे सच्छास्त्राध्यापनव्याख्यावाचनैरधीयानेषु ( शिष्येषु ) सत्सु भग्नमनसा ज्ञानावरणीयं कर्म बद्धं। अस्मिन् भवे तत्कर्म पूर्वार्जितं ममोदयं प्राप्तं—" हसंतो हेलया कम्मं रोअंतो नवि छुट्टए "। एतस्य कर्मणः क्षये केवलज्ञानं समुत्पन्नं "। इत्थं तस्योपदेशेन भव्यजन्तवः प्रबुद्धाः। स केवली पृथिव्यां विहरन् बहून् प्रतिबोधयन् शत्रुञ्जयपर्वते सिद्धः। इत्थं ज्ञात्वा ज्ञानं प्राप्य जलस्थतैलबिन्दुवत्सर्वत्र विस्तारणीयं।

द्वितीयमभयदानं। मार्यमाणो जीवो रक्ष्यते तदभयदानं। त्रिभुवनैश्वर्यदानादभयदानमतिरिच्यते। भयभीतानां प्राणिनामभयं यत्प्रदीयते तदप्यभयदानं। यतः—

हेमधेनुधरादीनां दातारः सुलभा भुवि। दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥१॥

जीवितव्याभयं प्राप्य दीनदीनोऽपि संमदात्। मन्यते स्वं त्रिलोकीशं दृष्टान्तोऽत्र वसन्तकः ॥२॥

अथ वसन्तककथा।

श्रीवसन्तपुरे महाबलवान् तेजस्वी प्रतापी मेघवाहननामा नृपती राज्य करोति। तस्य प्रियकरा पट्टराज्ञी अस्ति। अन्या अपि पञ्चशतमिता राज्ञ्यः सन्ति। स भूपतिस्ताभी राज्ञीभिः सह वैषयिकं सुखं राज्यसुखं चानुभवन् सुखेन कालं निनाय। लोका अपि मुदिताशयाः सुखेन वसन्ति। दानपुण्यादिकं कुर्वन्ति। एकदा तत्र यामिन्यां कोऽपि चौरः सलोप्त्रकस्तलारक्षकैर्दृष्टः। स तु तैर्बद्धः। आस्थानस्थितस्य नृपतेः पुरः समानीतः। नृपस्तं तस्करं निरीक्ष्य प्रसन्नया वाचा शिथिलं बन्धं विधाप्य विस्मितमानसः प्रोचे—"वद रे तव को देशः? का जातिः? एवंविधे नवे वयसि किमिदं विरुद्धं कर्मारब्धं"? । तच्छ्रुत्वा तस्करः पदे पदे स्खलद्वाक्य एवं जगाद—"नाथ रम्यपुरे नगरे वसुदत्तः श्रेष्ठी वसति। तस्याहं वसन्ताख्योऽङ्गजः। पित्रा लालितः पालितः पाठितः परिणायितश्च। परं दुष्कर्मवशतो द्यूतव्यसनवानहं जातः। पितृभिः स्वजनैर्जनैर्निवारितः शिक्ष्यमाणोऽपि द्यूतव्यसनं नाहं मुञ्चे। लोका अपि मां निवारयन्ति—'तवोत्तमकुलीनस्य द्यूतव्यसनं न युक्तं'। लोका ईर्ष्यां कुर्वन्ति। यतः—

यद्यपि न भवति हानिः परकीयां चरति रासभो द्राक्षाम्।
असमञ्जसं च दृष्ट्वा तथापि खलु खिद्यते चेतः ॥१॥

ततः पित्रा राजद्वारे गत्वा कृष्णाक्षरविधिं कृत्वाऽहं गृहान्निष्कासितः। यतः—

द्वेष्योऽपि संमतः श्रेष्ठस्तस्यार्तस्य यथौषधम्। त्याज्यो दुष्टः प्रियोऽप्यासीद्दष्टोऽङ्गुष्ठ इवाहिना ॥ १ ॥

अथाहं निरंकुशतया सर्वत्र भ्रमामि, चौर्यं करोमि, द्यूतं रमे, भिक्षां प्रतिगृहं याचे, शून्ये देवकुले शये, पापकर्माणि कुर्वन्नत्रागतः चौर्यार्थं रात्रावद्य प्रवृत्तः तत्र भृत्यैर्दृष्टः अत्रानीतः इत्थमात्मीयवृत्तान्तो मया कथितः। अथ नाथ यथोचितं कुरु"। तदा राज्ञा चिन्तितं–'नृपैश्चौरो न मोक्तव्यः' इति विमृश्य नृपेण तलारक्षकस्योक्तं–'एतस्य शूलारोपणं कुरु'। तावत्तलारक्षकेण स चालितः। इतश्च नृपस्य वामपक्षासनासीना प्रियंकरा पट्टराज्ञी तं कांदिशिकं दीनं शरण्यरहितं चौरं वीक्ष्य नृपं विज्ञपयामास–"नाथाद्यायं मम समर्प्यतां यथाऽहमेकदिवसं मनोरथमस्य पूरयामि, आगामिकदिवसे प्रातः तवाग्रे ढौकयामि।" अनुल्लंघ्यवाक्यत्वान्नृपेण राज्याः स चौरः समर्पितः। राज्या बन्धनमुच्छेद्य निजावासमानीतः। परिवारजनाः पट्टराज्याज्ञया तं शतपाकाद्यैस्तैलैः सादरमभ्यंग्य स्नानपीठे विन्यस्य सुवर्णकलशाहितैः पुष्पवासितैः स्वच्छैः सलिलैरुष्णैः स्नपयामासुः। ततः सुकुमालसूक्ष्मवस्त्रेण लूहितांगं कृत्वा कदलीगर्भसंकाशं दिव्यनेपथ्यं परिधाप्य कृष्णागरुधूमेन शिरोरुहान् धूपयन्ति। सचन्दनरसेनांगं विलिप्य यथास्थानमाभरणानि निवेशयमासुः। बाह्वोर्वीरवलयेऽङ्गुलिषूर्मिकाः कर्णयोः कुंडले मूर्ध्नि मुकुटं कंठे च हारार्धहारादीन्निवेशयन्ति। ततो विशदासने समुपवेश्य स्वर्णाधारस्थसुस्थालकचोलाद्यममंडयन्। पश्चाद्बहुवर्णकं पक्वान्नं घृतपूरादिकं शालिदालिघृतशाकादिकं दध्योदनमखिलं परिवेष्य राज्ञी सगौरवं स्वयं पार्श्वस्थिता भोजनं तमकारयत्। ततः कर्पूरमिश्रं ताम्बूलभक्षणं कारयति। तदनु पर्यंकेऽस्य निषण्णस्य पुरश्चित्रकथाकाव्यरसविनोदान् देव्यचीकरत्। अथापराह्णसमये राज्यादेशेन किंकरैर्वरतुरंगममारोप्य पट्टसूत्रमयीं वल्गां करपल्लवे दधानः शिरस्यातपत्रं बिभ्राणो विश्वग् यत्नात् शतसंख्यामितैर्भटैः परिवृतः पञ्चशब्दवादित्रनिर्घोषपुरःसरं सर्वत्र नगरमध्ये मन्दं मन्दं

संचरन् नरैः पुरजनैर्वीक्ष्यमाणः कौतुकानि सर्वत्र विलोकयन् दिवसात्यये मन्दिरे समानीतः । पल्यंके तूलिकाशीतरक्षोशीर्षादिकै-
र्निर्मापितसद्प्रीतिः शर्वरीं लीलयाऽतिवाहयति । प्रातः शाल्यवेषं कारयित्वा राज्ञः समर्पितः । नृपस्तलारक्षकस्य तं न्यधाय यावत्सम-
र्पयति, तावत् द्वितीयया राज्ञ्या तथैव याचितस्तथैव मज्जितस्तथैव भोजितस्तथैव लालितः । क्रमेणान्याभी राज्ञीभिः सापत्न्यभा-
वसंजातस्पर्धैर्कदिनं क्रमान्नृपं विज्ञप्य याचित्वा भूरितद्रव्यव्ययाधिकाधिकैस्तस्य तस्करस्य विविधोत्सवैर्मनस ईप्सितं पूरितं ।
अथ तस्य नृपस्य पश्चात्तनीतमा राज्ञी शीलवती नाम कुलव्रतं पालयन्ती अल्पस्थितिपरिवारा स्वस्यैव कर्मणो दोषं मन्यमानाऽस्ति ।
विवाहानन्तरं राजा या दृष्ट्या दृष्टापि नास्ति । सा साहसमवलंब्य भूपं व्यजिज्ञपत्—"स्वामिन् प्राणवल्लभ प्राणाधार मया कदापि
किंचिद्याचितं नास्ति । अथ किंचिद्भवदाज्ञयाऽहं याचे"। राज्ञा प्रोक्तं—'याचस्व' । सोवाच—'चौरोऽयं मम देयः, कदापि न मारणीयः,
अभयदानं देयं । नृपस्तदाकर्ण्य तस्या गुणगौरवं आत्मा तत्तर्न मेने । शृणु प्रिये—' मयायं मुक्तस्त्वद्वाक्यात् ।' सापि तं स्वगृहे
नीत्वा संस्कारस्नानभोजनं कारयित्वाऽल्पवस्त्राणि परिधाप्याभयं ददौ । स तु राज्यलाभादधिकं तदा मेने । तस्मिन्नहोरात्रे गते
शीलवती तं धर्मवचनं कृत्वा विससर्ज । सोऽपि सिंहासनोपविष्टस्य राज्ञः प्रणामार्थमागतः । मुदितः सन्नृपं प्रणमति । राजापि
विस्मितस्तं पप्रच्छ—" भद्र रे मर्त्य, किं कारणं, अद्य किं मुदितः ? एतावद्दिवसान् यावद्विषण्णवदनच्छायो मषीलिप्त इवाभवः ।
अद्य तु मन्ये गोऽपि मुदितो दृश्यसे ।" सोऽप्याह—" श्रूयतां नाथ तव कर्णप्रविष्टैः शूलारोपाक्षरैः सर्वं शून्यं ममाभवत् । जलं
विषसन्निभं, अन्नमपि विषसन्निभं, पल्यंकः शल्यसंकाशः, तुरगो रासभाकारः । सर्वमप्येवमभवत् । मरणशंकया दुःखदायकम-
भूत् । अथ श्रीशीलवतीप्रार्थनया श्रीमद्राजपादैः सुप्रत्ययैर्यदभयदानं दत्तं तत्प्रभावादहं सर्वं पूर्णं सुखं पश्यामि ।" तदा राज्ञ्या

नृपस्योक्तं—'स्वामिन् श्रीमुखेनास्याभयं देयं।' राज्ञोक्तं—'दत्तमभयं, किमप्यन्यन्निवेदय'। साऽवोचत्—'त्वत्प्रसादेन सर्वमेवास्ति, किमपि मम न्यूनं न।' राज्ञा चिन्तितं—"अहो एतस्या गांभीर्यं अहो निर्लोभतागुणः अहो वचनमाधुर्यं नूनमस्याः प्रभावेण मम राज्यं प्रवर्धते।" इति तोषात्सा पट्टराज्ञीपदे स्थापिता। पत्युः प्रसादमवाप्य सद्गुणजलेन कश्मलं क्षालयामास। सा सर्वत्र विख्याता जाता। स वसन्तकोऽपि तत्रैव राजसेवां करोति। सदाचाररतो वासरानत्यवाहयत्। सा शीलवती राज्ञी राज्यसुखं भुञ्जाना गृहिधर्मरता नवमग्रैवेयकेऽभयदानप्रसादाद्देवत्वं प्राप्य चैकत्रिंशत्सागरोपमायुर्भुक्त्वा महाविदेहक्षेत्रे सिद्धा। वसन्तकोऽपि गुरुयोगात्प्रपन्नाणुव्रतं सम्यक् पालयित्वा दिवं ययौ। इदमभयदानमाहात्म्यं ज्ञात्वाऽभयदानं देयं।

भगवान् श्रीपार्श्वनाथो भव्यजीवान् प्रतिबोधयति—भो भविकाः श्रूयतां–साधूनामन्नोपाश्रयभैषज्यवस्त्रपात्रपानीयदानतो भवकोटिसञ्चितं पातकं प्रक्षिप्य चक्रवर्तितीर्थंकरपदवीं प्राप्नोति। तच्च दानं पात्रे दत्तं नृणां बहुफलदायकं भवेत्। उक्तं च—

खलोऽपि गवि दुग्धं स्याद्दुग्धमप्युरगे विषम्। पात्रापात्रविचारेण तत्पात्रे दानमुत्तमम् ॥ १॥

पात्रं तु साधव एव। सप्तविंशतिगुणसहिताः पञ्चमहाव्रतपालका अष्टप्रवचनमातॄणां धारका एव साधवः। यत उक्तं सिद्धान्ते—

उत्तमपत्तं साहू मज्झिमपत्तं च सावया भणिया। अविरयसम्मद्दिट्ठी जहन्नपत्तं मुणेयव्वं ॥ १॥

अतः कारणात्साधवः पात्राणि। तेषां दानं देयं। साधर्मिकाणामपि दानं देयं। सिध्धान्तेऽप्युक्तं–"तहारूवं समणं माहणं फासुं एं एसणिज्जण्णं असणं पाणं खाइमं साइमं वा पडिलाभेमाणे आउयवज्जाओ सत्तकम्मपयडीओ निविडबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरंति जीवा अत्थेगइआ जीवा तेणेव भवग्गहणेण सिज्झंति मुज्झंति जाव सव्वदुक्खाणमंतं करेंति अत्थेगइया जीवा

दोगणं भवग्गहणेणं सिज्झंति जाव सव्वदुक्खाणमंतं करेंति एवं जाव तेरस भवा नाइक्कमंति जहन्नहाउ सहस्सामी"। मुग्धत्वेनापि दानं दत्तं पात्रे निष्फलं स्यात्। अत्रार्थे निदर्शनं कथ्यते। तथाहि—

महाविदेहक्षेत्रे पुष्कलावतीविजये जयपुरनगरे जयशेखरो नृपती राज्यं करोति। तत्र व्यवहारितनयाश्चत्वारोऽपि मित्रत्वेन सन्ति। आद्यश्चन्द्रः, तथा द्वितीयो भानुः, तृतीयो भीमः, तुर्यः कृष्णः। ते मिथः परस्परमेकीभूताः परममित्ररूपाः परमेष्टा अन्योन्यं हसन्ति क्रीडन्ति च। उक्तं च—

क्षीरेणात्मगतोदकाय सकला दत्ता निजा ये गुणाः क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः।
गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥१॥
ददाति प्रतिगृह्णाति गुह्यमाख्याति वक्ति यः। भुंक्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥२॥

पित्रोपार्जितां लक्ष्मीं ते विलसन्ति। एकदा चन्द्रोऽचिन्तयत—"खलु वयं सद्भाग्याः बाल्यभावे मातुस्तन्यं पितुर्धनं भुज्यते गतं। यौवने तु यः स्वभुजोपार्जितं वित्तं भुंक्ते ददाति च स उत्तमः, अधमो मूलहरः। तस्माद्धनोपार्जनोपायः कार्य एव। आयाभावे व्ययः न क्रियते। उक्तं च—

अनायव्ययकर्ता च अनाथकलहप्रियः। आतुरः सर्वभक्षी च नरः शीघ्रं विनश्यति ॥१॥

इति विमृश्यान्येषां त्रयाणां मित्राणां स्वाभिप्रायं कथयति। तैः सर्वैर्विमृष्टं—'यानपात्रेण जलधिव्यापारः क्रियते'। इति

विमृश्य स्वपितॄणामुक्तं । तैरुक्तं—'गृहे धनं प्रचुरमस्ति, यथेच्छं भुञ्जीत' । पुत्रैरुक्तं—'निश्चयेन वयं गमिष्यामः आज्ञां ददतु' । पुनः पितृभिरुक्तं—"यूयं मुग्धाः जना धूर्ताः, विषमाः परदेशाः, अब्धिव्यापारो विशेषदुष्करः" । इत्यादिभिर्युक्तिभिर्गाढं वारिता अपि ते समुद्रगमनोत्सुका बभूवुः । भांडैः प्रवहणं भृत्वाऽपशकुनैर्वारिता अपि चेलुः । दिनत्रयं जलवर्त्मनि गताः । तारम्यभरि गर्जितं विद्युद्दंडो महावातोत्पातश्च बभूव । तदा सहसा प्रवहणं भग्नं । प्रवहणस्था लोका जलधौ दिशो दिशं त्रुटिताः । केऽपि फलकाधारेण गताः । चन्द्रस्तु फलकाधारं प्राप्य सप्तमेऽह्नि जलधेस्तटं प्राप । चित्ते चिन्तयामास—"हा मया सर्वो जनः कष्टे क्षिप्तः । पितृभिः स्वजनलोकैर्वारितं कार्यं हठात् कृतं यत्तत्फलं सांप्रतं दृष्टं । अथ मम जीवितेन किं ?" इति ध्यात्वा वस्त्रपाशेन तरावात्मीयकंठं बध्वा तरौ लंबितः । अथ कोऽपि विप्रः पाशं छुरिकया छित्त्वाऽब्रवीत्—"भोः सात्त्विक त्वया आत्मघातपातकं न कार्यं, शास्त्रे महद् दूषणं कथितं' इति कथयित्वा गतः । ततोऽन्यत्र पर्वतान्तरे गत्वा तथैव गलपाशः प्रारब्धः । तत्र केनापि साधुना कायोत्सर्गस्थितेनोक्तं—'मा साहसं कुरु' । ततश्चन्द्रेण विलोकितं । पादपान्तरितो मुनिर्दृष्टः । मुनिं नत्वा प्रोक्तं—'नाथ मम मन्दभाग्यस्य जीवितेन किं ?' । साधुरब्रवीत्—"आत्मघातपातकेन जीवा दुर्गतिं यान्ति, नरो जीवन् भद्रं प्राप्नोति । मदीयोऽत्र दृष्टान्तः तं शृणु—श्रीमंगलपुरे राजा नीतिविच्चन्द्रसेनाख्यो राज्यं करोति । तस्य भानुमंत्री प्रधानः । तद्भार्या सरस्वती । तयोः परस्परमत्यन्तप्रीतिः । अन्यदा पल्यंके सा रुदन्ती भानुमंत्रिणा दृष्टा । तेन पृष्टं—'प्रिये किं रोदिषि ?' । साऽवदत्—'नाथ न किंचन' । पुनराग्रहेण पृष्टा साऽब्रोचत्—"स्वप्नेऽद्य स्वामिन्नन्यस्त्रिया सह विलासं कुर्वंस्त्वं दृष्टोऽसि । तेन कारणेनाहं रोदनं कुर्वे" । तच्छ्रुत्वा सचिवो दध्यौ—'या स्वप्नेऽपि सपत्नीं वीक्ष्य दुःखं बिभर्ति सा प्रत्यक्षं दृष्ट्वा कीदृग्

भवति ?' इति' विमृश्योक्तं—"प्रिये अस्मिन् भवे त्वमेव भार्या। अथ च त्वयि जीवन्त्यामहं जीवामि, त्वयि च म्रियमाणायां प्राणत्यागं करोम्यहं"। एवं तयोः स्नेहप्रकर्षः प्रसिद्धिमगमत्। अन्यदा नृपः प्रधानयुक्तः कटकयात्रया दूरं गतः। एकस्मिन् दिने दंपतिविषये स्नेहवार्ताप्रस्तावे भानुमंत्री स्नेहस्वरूपं राज्ञः पुरोऽशंसत्। अन्यदा नृपेण परीक्षार्थमेकं नरं जयपुरे प्रैषीत्। तेन तत्र नृपादेशादलीका भानुमंत्रिणो विपत्तिवार्ता सरस्वत्यग्रे सदुःखं विनिर्मिता। तन्निशम्य सरस्वती सहसा संजातहृदयस्फोटा पञ्चत्वं प्राप्ता। स नरः कटके गत्वा भूपतेरकथयत्। वज्रघातसमं वाक्यं नृपः श्रुत्वा दध्यौ—"मया स्त्रीघातपातकं मुधा कृतं। तथा च सचिवो यावदिमां वार्तां न शृणोति तावत्सचिवस्य प्राणरक्षोपायं करोमि" इति निश्चित्य सचिवोत्तारके नृपो गतः। अमात्योऽपि सभ्रमान्नृपमुवाच—'किमिदं स्वामिन् भृत्यान्ते स्वयमागतः?'। नृपोऽवोचत्—'अहं तवान्तिके किंचिद्याचितुं समागतोऽस्मि'। मंत्री आह—'स्वामिन् समादिश्यतां'। ततो नृपतिर्जगौ—"मया स्नेहपरीक्षार्थं तव मृतिस्तव भार्याग्रे कथापिता। तेन सा विपन्ना। अथ मदभ्यर्थनया त्वया मृतिर्न कार्या"। तच्छ्रुत्वा सचिवस्य मूर्छा समागता। नृपेण शीतलोपचारैः सज्जीकृतः। सचिवेनोक्तं—"स्वामिन् मदीया वाग् याति। यत उक्तं—

अलसायंते वि सज्जणेण जे अक्खरा समुल्लविया। ते पत्थरटंकणकिरयव्व नहु अन्नहा हुंति ॥ १ ॥

अतः कारणान्मया मृतिः कार्या"। राज्ञा बह्वाग्रहेण मृत्यो रक्षितः भानुमंत्रिणा विवाहनियमः कृतः। कियत्कालानन्तरं स्वनगरे स्वं गृहं गत्वा स्वजनैर्गृहीतानि प्रियास्थीनि सदाऽर्चति। तस्या गुणान् स्मारं स्मारं प्रलपति। स्वदेहेऽपि माया त्यक्ता। एकदाऽचिन्तयत्—'गंगाया गत्वा प्रियास्थीनि प्रवाहयामि' इति विमृश्य मंत्री गंगातटं गतः। तत्र प्रियास्थीनि प्रवाहयन् सरस्वत्या नाम गृह्णन् विलपति

रोदिति। तत्रासन्ना वाराणसीवरनृपांगजा सरस्वती तं विलपन्तमशृणोत्। तं दृष्ट्वा मूर्छिता सा भुवि पतिता। ततः सखीभिर्गत्वा राज्ञोऽग्रे निवेदितं। राजापि तत्रागात् सपरिच्छदः। कन्यापि शीतलगात्रचन्दनैर्लब्धचेतना जाता। कन्यायै पृष्टं–'तव किं जातं ?'। तयोक्तं—"आम तातायं मम पूर्वभवभर्ता। अन्ये पुरुषा सर्वेऽपि मे बान्धवाः। अयं मे वरः। एनं वृणोमि।" ततो राज्ञा कन्या विवाहिता। तया सह मंत्री भोगान् भुनक्ति। एकदा नृपतिस्तस्य राज्यं दत्वा प्रव्रज्यां जगृहे। भानुर्नृपो राज्यं पालयति। अन्यदा तस्या दाहज्वरस्य पीडा जाता। बहुभिरुपायैर्न शशाम। सा मृता। भानू राजा तस्या वियोगेन वैराग्येण व्रतं जग्राह। चारित्रं पालयति। सोऽहं। अतः कारणाज्जीवन्नरो भद्रशतानि पश्यति। महानुभाव धर्मं कुरु।" चन्द्रेणोक्तं—'भगवन्मम स्तोकेन बहुतरं शिक्षय'। तदा साधुना पञ्चपरमेष्ठिनमस्कारः पाठितः। तेन शिक्षितः। साधुनोक्तं—'अयं नित्यं स्मरणीयः सम्यक्त्वं पालनीयं'। अथ चन्द्रस्तं मुनिं नत्वा प्रीतः पुष्पपुरं ययौ। तत्र महर्द्धिको जातः। चन्द्रो भावेन नित्यं पञ्चपरमेष्ठिमंत्रं स्मरति। ततो विधिवशात्ते त्रयोऽपि सुहृदश्चिरात्मिलिताः। चन्द्रो भानुर्भीमः कृष्णश्च चत्वारोऽपि निजं निजं वृत्तान्तं कथयन्ति। नमस्कारस्य माहात्म्यं ते त्रयोऽपि श्रुत्वा नमस्कारं शिक्षन्ते स्म। ते सर्वेऽपि व्यापारं कुर्वन्तो महर्द्धयो जाताः। चत्वारोऽपि विमृशन्ति—'ऋध्धिर्जाता, अतः स्वनगरे यामः, इति निश्चित्य प्रवहणेनोदधिमुल्लंघ्य एकत्र सरसि भोजनं कर्तुं स्थिताः। तत्र भोजनं पाचितं तस्मिन्नवसरे षण्मासोपवासी साधुरेको नगरे गोचरीं कर्तुं याति। तदा ते तं साधुमपश्यन्। तैः साधुर्निमंत्रितः–'भगवन् पादाववधारयतु'। ततश्चन्द्रेण भावपूर्वकं मुनीश्वरः प्रतिलाभितः। अन्यैस्त्रिभिरप्यनुमोदना कृता। तत्र चतुर्भिरपि भोगकर्मफलमर्जितं। ते तु चत्वारोऽपि क्रमेण स्वनगरं जयपुरं क्षेमेण प्राप्ताः। तत्र स्वजनाः सर्वेऽपि मिलिताः। महावर्धापनोत्सवो

जातः। चिरकालं ऋद्धिसुखं भुक्त्वा चत्वारोपि द्वादशकल्पे दानप्रभावाद्देवा जाताः। ते चत्वारोऽपि देवजीवा आयुःक्षये च्युत्वा चतुर्षु देशेषु राजानो जाताः। परमर्द्धिवन्तो बभूवुः। तेषां पूर्वभवस्नेहादन्योऽन्यं परमप्रीतिर्जाता। ते चत्वारोऽपि एकस्मिन् देशे एकत्र तिष्ठन्ति। राज्यसुखं भुक्त्वा पर्यन्ते व्रतं प्रतिपाल्य सिद्धाः॥

अहो भव्यास्तत्त्वज्ञानं विना विद्या गुणाय न, शमवर्जिता तपस्यापि गुणाय लाभाय नो भवेत्। मनःस्थैर्यं विना तीर्थयात्रापि नो लाभाय। यदाहुः—

प्रणिहन्ति क्षणार्धेन साम्यमालंब्य कर्म तत्। यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः॥१॥
वीतरागं हृदि ध्यायन् वीतरागो यथा भवेत्। मुक्त्वाऽखिलमपध्यानं भ्रामरं ध्यानमाश्रय॥२॥
स्थाने याने जनेऽरण्ये सुखे दुःखे तथा मनः। अभ्यस्यं वीतरागत्वे लयलीनं यथा भवेत्॥३॥
इन्द्रियाणां मनो नाथो मनोनाथो हि मारुतः। मारुतस्य लयो नाथो लयनाथो निरञ्जनः॥४॥
बद्धमाबध्यते मुक्तमग्रहं स्यात्ततो बुधैः। वारणीयं धृतोन्मुक्तरज्जुबध्धोक्षवन्मनः॥५॥
द्युतिः पुष्पे घृतं दुग्धे तेजः काये यथा स्थितम्। ज्ञानं जीवे तथा किंतु व्यक्तीस्यात्परिकर्मणा॥६॥

इत्थ दानस्य माहात्म्यं वर्णितं। द्वितीयं धर्मांगं शीलं। यदाहुः—

शौचानां परमं शौचं गुणानां परमो गुणः। प्रभावमहिमा धाम शीलमेकं जगत्त्रये ॥१॥

जवो हि सप्तेः परमं विभूषणं भर्तांगनायाः कृशता तपस्विनः।

द्विजस्य विद्येव मुनेस्तथा क्षमा शीलं हि सर्वस्य जनस्य भूषणम् ॥२॥

तस्य शीलस्य नवमिता वाटिकाः सन्ति। तद्यथा

वसहि १ कह २ निसिज्जि ३ दिय ४ कुट्टिंतर ५ पुव्वकीलीय ६ पणीए ७।

अइमायाहार ८ विभूसणाइ ९ नव बंभचेरगुत्ती य ॥१॥

अस्या व्याख्या—वसतिरुपाश्रयः यस्मिन् गृहेऽङ्गनाऽवस्थितिं करोति। अथवा गृहासन्ना स्त्रीवसतिः सैवोपाश्रयः ताज्य एव। कथा स्त्रिया सहालापस्त्याज्यः। निसिज्जा यत्र शयनासनेऽङ्गनोपविष्टा भवति तदेव शयनासनं घटिकाद्वयं यावत्त्याज्यं। इंदिय स्त्रीणामंगोपांगानि इन्द्रियाणि च न विलोकनीयानि। श्रीमदुत्तराध्यनेऽप्युक्तमस्ति—"चित्तभित्तिं न निज्जाए नारिं वा सुअलंकिअं" इत्याद्युक्तत्वात्। स्त्रिया सहालपनं त्याज्यं। अंगोपांगेन्द्रियसन्मुखविलोकनं ब्रह्मचारिणा त्याज्यं। कुड्यन्तरे भित्तेरन्तरं त्याज्यं, यत्र गृहे दंपती शयाते कंकणादिरावो हावभावविलासहास्यादिरावः श्रूयते तत्र गृहे भित्त्यन्तरे ब्रह्मचारिणा न स्थातव्यं। पुव्वकीलीआ पूर्वक्रीडितं पूर्वं क्रीडा कृता भवति सा न स्मरणीया। पणीए अत्यन्तसरसाहारस्त्याज्यः। अइमायाहार अतिमात्राहारो बहुः

वारंवारं पुनः पुनः न भक्षणीयं । विभूसणाइ विभूषणां स्वच्छवरं स्नानं मज्जनं तैलमर्दनं अंगशोभाकरणं ब्रह्मचारिणा त्याज्यं। इमा नवमिता वाटिकाः ताः संरक्षणीयाः निरतिचारेण ब्रह्मचर्यं पालनीयमिति ॥

पुंसा स्वदारसंतोषव्रतं पालनीयं, स्त्रिया स्वपुरुषसंतोषव्रतं पालनीयमेव ।

विषयव्याकुलैः शीलं खंडितं मनसापि यः । ते यान्ति नरकं घोरं यथा मणिरथो नृपः ॥ १ ॥

सती मदनरेखेव पालयत्यमलं व्रतम् । यः स धन्येषु रेखासो भवेत्सुगतिभाजनम् ॥ २ ॥

॥ अथ मणिरथनृपमदनरेखयोः संबन्धः ॥

अस्त्यत्र भरतेऽवन्तीदेशे सुदर्शननाम्ना पुरं श्रियो निवासस्थानं। तत्र मणिरथो राजा राज्यं करोति । स पापिष्ठो लंपटः। तद्भ्राता युगबाहुर्युवराजः शुभमना दयावान् दानवान् गुणवान् उत्तमः । तस्य मदनरेखा नाम सद्गुणशालिनी सती साध्वी भार्याऽस्ति। सा रूपवती सती जिनधर्मरता ज्ञातनवतत्त्वा द्वादशव्रतरताऽस्ति । सा स्वपतिभक्ता पौषधप्रतिक्रमणादिकं करोति। स्वपतिना सह संसारसुखं भुनक्ति । तयोश्चन्द्रयशा नामाङ्गजोऽस्ति । अथान्यदा तां मदनरेखां जवनिकान्तरितां सालंकारां सुभगां मणिरथनृपोऽपश्यत् " अहो केयं सुरांगनावद्राजते ? ईदृशी विद्युल्लतावद्राजमाना मम भार्या नास्ति । एषा ध्रुवं मया ग्राह्या प्रथमं प्रलोभये "। ततोऽसौ नृपः पुष्पतांबूलवस्त्रालंकारादिकं तस्याः प्रहिणोति । सा निर्विकल्पा ज्येष्ठस्यायं प्रसाद इति ज्ञात्वा नृपप्रेषितं सर्वमपि गृह्णाति। एकदा राज्ञा दूती प्रहिता । सा तां मदनरेखामित्यवोचत्—" भद्रे तव गुणग्रामे रक्तो राजा

वदत्येनं त्वं मां भर्तारं प्रतिपद्य राज्यस्वामिनी भव।" तन्निशम्य राज्ञी ज्ञातोदन्ता तां दूतीमेवं जगाद—"भो दूतिके नेदं कार्यमुत्तमानां। शास्त्रेऽप्युक्तमस्ति—

अणंता उ पावरासीओ जया उदयमागया। तया इत्थित्तणं पत्ता सम्मं जाणेइ गोयमा ॥१॥

इत्थित्तणेण य पत्ते जइ सीलगुणो नहु। पप्भंतस्स तं जम्मं ता जाणह कंजियं कुहिअं ॥२॥

तस्मात्कारणात् स्त्रीणां गुणः शीलमेवेति। किं च सत्पुरुषा मृत्युमपि अंगीकुर्वते, परंतु लोकद्वयविरुद्धं शीलखंडनं कथमपि नाचरन्ति। यतः—

जीवघातादलीकोक्तात् परद्रव्यापहारतः। परस्त्रीकामनेनापि व्रजन्ति नरकं नराः ॥१॥

तस्मान्महाराज संतोषं कुरु। कदाग्रहं मुञ्च। इयं तृष्णा न कार्येन"। इत्यादि तस्या गदितं दूती राज्ञे न्यवेदयत्। तथापि नृपस्य कामतृष्णा सदुपदेशजलैर्न शशाम। एकदा नृपो मनसि दध्यौ—"भ्रातरि युगबाहौ जीवति सत्येषा नान्यमिच्छति, तस्मात्तं हत्वा बलादिमां गृह्णामि'। इति निश्चित्य स नृपो भ्रातर हन्तुकामः प्रस्तावं वीक्षते। अहो महाकाममोहविडंबनां विलोकयन्तु—

न हि पश्यति जारयन्धः कामान्धो नैव पश्यति। न पश्यति मदोन्मत्तो अर्थी दोषं न पश्यति ॥१॥

तथा च—

दूधे सींच्यो लींबडो थांणो कीड गुलेण। तो ही न ठंडइ कडुपणो, जाते हिं निर्गे गुणेण ॥१॥

एकदा मदनरेखया स्वप्ने चन्द्रो दृष्टः । तया भर्तुः कथितं । सोऽप्याख्यत्—'चन्द्राभसुतसंभवो भविष्यति' । तस्य गर्भानुभावेन तृतीये मासि दोहदो जज्ञे—जिनेन्द्रार्चनं करोमि, अर्हतां च कथां शृणोमि । सा संपूर्णदोहदा गर्भं वहते । अन्यदा वसन्तर्तुरागतः, तस्मिन् समये नागपुन्नागमालिकापाटलाकुन्दमुचुकुन्दएलालवंगकंकोलद्राक्षाखर्जूरिकाकदलीलवलीजातीशतपत्रराजादनीसहकारचंपकप्रभृतयस्तरवो भृशं कुसुमिताः । बहवस्तत्रालिगणाः क्रीडन्ति । पिकशुकादयः पक्षिणस्तत्र वसन्ति हसन्ति जल्पन्ति तल्पन्ति कल्पन्ति । तस्मिन् वसन्ते युगबाहुः प्रियायुतः क्रीडार्थं तत्र वने ययौ । नागरजना अपि बहवस्तत्र क्रीडां कुर्वन्ति । जलक्रीडान्दोलनाद्यैः खाद्यस्वाद्यपानाशनादिभिर्व्यग्रस्य युवराजस्य दिनं क्षण इवाभवत् । रात्रौ तत्रैव कदलीगृहे सुष्वाप । परिवारस्तु कोऽपि पुरेऽगात् कोऽपि तत्रैव स्थितः । अथ मणिरथो नृपः स्वचित्ते दध्यौ—'अद्य युगबाहुः स्वल्पपरिवारो वने स्थितोऽस्ति, तस्मादयमवसरः' । इति विमृश्य नृपतिः खड्गकरस्तत्र वने गत्वा यामिकान् पप्रच्छ—'भो युगबाहुः कुत्रास्ते ?' । तैरुक्तं—'स्वामिन् अस्मिन् कदलीगृहेऽस्ति' । नृपेणोक्तं—'वने मद्भ्रातरं कोऽपि शत्रुः परिभविष्यतीति अधृत्याऽहमायातः' । तदा ससंभ्रमं युगबाहुः समुत्तस्थौ । नृपसमीपे समागत्य नृपं प्रणमति । राज्ञाऽभाणि—'एहि पुरं यावः, निशायामात्मनोऽत्रावस्थानं न युक्तं' । ततो युगबाहुः प्रस्थातुमारेभे । "अयं ज्येष्ठभ्राता प्रभुः पितुः स्थानीयः हितकारकः अनुल्लंघ्याज्ञ एव" इति चिन्तयन् पुरसन्मुखं चचाल । ततः पापधिया राज्ञाऽपयशोभयमवगणय्यासिना स्कन्धे युगबाहुर्हतः । स मूर्छन् भुवि पपात । अहो अक्षत्रमक्षत्रमिथं । मदनरेखया कूजितं—'धावत धावत शीघ्रं शीघ्रं' । तदा खड्गोद्यतकरा भटाः शीघ्रं किमेतदिति जल्पन्तः समाययुः । तदा मणिरथनृपेणोक्तं—'मा बिभीत मा बिभीत भोः प्रमादेन मत्करात् खड्गोऽपतत्

किं करोमि ?' इति लोकलज्जया व्यलपद् । यथास्थितं ज्ञात्वा बलान्नृपेण पुरीं नीतः । चन्द्रयशाः पुत्रो हाहारवं कुर्वन् वैद्यानादाय जग्मिवान् । स्वपितुर्यत्नात् घातकर्मचिकित्साद्यकारयत् । तदा युगबाहोर्बहुरक्तनिर्गमाद्वाचा स्थिता, नेत्रयुग्मं निमिलितं, निश्चेष्टितमंगं बभूव । तदा मदनरेखा भर्तुः प्राणान्तिका दशां ज्ञात्वा कर्णान्तिके स्थित्वा मृदुस्वरेणेति जगाद—" अहो महानुभाव त्वमधुना स्वहिताय भव, इयं ते धीर वेलाऽस्ति । मदुक्तं शृणु, तद्यथा—खेदं मनागपि मनसि मा कार्षीः, निजकर्मपरिणामोऽपराध्यति न कोऽपि चापरः । यत उच्यते—

यद्येन विहितं कर्म भवेऽन्यस्मिन्निहापि वा । वेदितव्यं हि तत्तेन निमित्तं हि परो भवेत् ॥ १ ॥

अतः कारणात् कायेन मनसा गिरा च धर्मपाथेयं गृहाण । यद् दुष्कृतं कृतं भवति तत्संप्रति गर्ह । मित्रममित्रं स्वजनमरिजनं क्षमयस्व मैत्रीभावं कुरु । यत्त्वया दुःखे ये स्थापितास्तान् सर्वान् अधुना क्षामय । जीवितं यौवनं लक्ष्मी रूपं प्रियसमागमः, इदं सर्वमपि जलधितरंगवच्चञ्चलं, व्याधिजन्मजरामृत्युग्रस्तानां प्राणिनां जिनोदितं धर्मं विना कोऽपि शरणं नास्ति । कस्यापि प्रतिबन्धं मा कुरु । जन्तुरेक एवोत्पद्यते, एक एव विपद्यते, एक एव सुखान्यनुभवति, स एव हि दुःखान्यनुभवति । वपुर्धनधान्यादिकं कुटुंबं च सर्वमेतदनित्यं । वसारुधिरमांसास्थियकृद्विण्मूत्रपूरिते शरीरे मूर्छा न कार्या । इदं वपुर्लालितं पालितं क्षालितं कदाचिन्नात्मीयं भवति । धीरेण कातरेण चापि निश्चयेन मर्तव्यं । यतः—

मृत्योर्बिभेति यो बालः स स्यात्सुकृतवर्जितः । पंडितस्तु सदा वेत्ति मृत्यु प्रियतमातिथिम् ॥ १ ॥

तस्मात्तथैव म्रियते यथा पुनर्नो म्रियते । ततः कारणान्मनसि चिन्तनीयं—अरिहंता सरणं हुज्ज, सिद्धा सरणं हुज्ज, साहवो सरणं हुज्ज, केवलिभासिओ धम्मो सरणं हुज्ज। अष्टादशानां पापस्थानकानां प्रतिक्रमणं कुरुष्व। परमेष्ठिनमस्क्रियां कुरु। ऋषभादितीर्थंकरानखिलांश्च भरतैरावतविदेहार्हतोऽपि नमस्कुरु। यतः—

**तीर्थकृद्भ्यो नमस्कारो देहभाजां भवच्छिदे। भवति क्रियमाणः सन् बोधिलाभाय चोच्चकैः ॥१॥**

सिद्धानां नमस्कारं कुरु, यथा कर्मक्षयो भवति—

**सिद्धेभ्यश्च नमस्कारो भगवद्भ्यो विधीयते। कर्मेन्धोऽदाहि यैर्ध्यानाग्निना भवसहस्रजम् ॥१॥**

आचार्या धर्माचार्यास्तेषां नमस्कारं कुरु। उपाध्यायानां नमस्कारं कुरु । जिनकल्पिकस्थविरकल्पिकजंघाचारणविद्याचारणादिसाधूनां नमस्कारं कुरु । एभिः पञ्चनमस्कारैर्जन्तुर्मोक्षं याति । तथा ध्रुवं वैमानिको भवेत् । चतुर्विधाहारमपि यावज्जीवं परित्यज्यानशनं गृहाण"। इति तस्या वाक्यामृतैर्विध्यातक्रोधपात्रको हृष्टः सन् शीर्षेऽञ्जलिं बध्वा युगबाहुः सर्वं प्रतिपन्नवान् । स शुभध्यानो निपद्य पञ्चमे ब्रह्मदेवलोके दशसागरोपमायुः सुरोऽभवत् । ततश्चन्द्रयशाः सुतो भृशं क्रन्दितुमारेभे। तदा मदनरेखा मनसि दध्यौ—"धिग्मे रूपं, मन्दभाग्याहं, यन्मदीयं रूपमीदृक्पुरुषरत्नस्यानर्थमूलं बभूव। येन पापिना मन्निमित्तं निजभ्राता हतः, अयमपि पापिष्ठो मां बलाद्ग्रहीष्यति। तदत्र मे स्थातुं न युज्यते। तस्मात्क्वचिदन्यत्र गत्वा पारत्र्यं कार्यं कुर्वेऽहं । अन्यथा मे पुत्रमप्येष पापो हनिष्यति"। इति मंत्रयित्वा ततः स्थानान्निशीथे पूर्वस्यां दिशि महाटव्यां बहिर्निरगात् । रात्रिर्गता। द्वितीये-

किं करोमि ?' इति लोकलज्जया न्यलपद् । यथास्थितं ज्ञात्वा बलान्नृपेण पुरीं नीतः । चन्द्रयशाः पुत्रो हाहारवं कुर्वन् वैद्यानादाय जग्मिवान् । स्वपितुर्यत्नात् घातकर्मचिकित्सामकारयत् । तदा युगबाहोर्बहुरक्तनिर्गमाद्वाचा स्थिता, नेत्रयुग्मं निमिलितं, निश्चेष्टितमंगं बभूव । तदा मदनरेखा भर्तुः प्राणान्तिकां दशां ज्ञात्वा कर्णान्तिके स्थित्वा मृदुस्वरेणेति जगाद—" अहो महानुभाव त्वमधुना स्वहिताय भव, इयं ते धीर वेलाऽस्ति । मदुक्तं शृणु, तद्यथा—खेदं मनागपि मनसि मा कार्षीः, निजकर्मपरिणामोऽपराध्यति न कोऽपि चापरः । यत उच्यते—

यद्येन विहितं कर्म भवेऽन्यस्मिन्निहापि वा । वेदितव्यं हि तत्तेन निमित्तं हि परो भवेत् ॥१॥

अतः कारणा [illegible] र्भे । मित्रममित्रं स्वजनमरिजनं क्षमयस्व [illegible] प्रियसम [illegible] नारि [illegible]

तिष्ठति । तन्मम प्रज्ञप्तिविद्यया कथितं । तस्मात्प्रसन्नमना भूत्वा मम राज्यमलंकुरु । तच्छ्रुत्वा मदनरेखया चिन्तितं—" अहह मम कर्मणां वैचित्र्यं यदन्यान्यव्यसनश्रेणी मम पुरः प्रादुर्भवति । अहं शीलरक्षणार्थं इयद् दूरं समागता, तथापि तस्यैव भंग इहापि समुपस्थितः । तच्छीलं मया नियमाद्रक्षितव्यं निश्चयेन " । इति संकल्प्य साऽजल्पत्—" अहो महानुभाव प्रथमं तावन्मम नंदीश्वरे जिनान् वन्दापय, मुनीन् वन्दापय, पश्चात्तव प्रियं करिष्ये " । ततस्तुष्टेन तेनासौ नन्दीश्वरद्वीपे क्षणेन नीता । तत्रैषा स्थितिः—

चत्वारोऽञ्जनशैलेषु दधिमुखेषु षोडश। द्वात्रिंशच्च रतिकराभिधानेषु जिनालयाः ॥ १ ॥

एवं द्विपञ्चाशज्जिनालयाः प्रासादाः—

योजनानां शतं दीर्घाः पञ्चाशद्विस्तृताश्च ते। द्विसप्तत्युच्छ्रिताः सर्वे द्विपञ्चाशद्भवन्त्यमी ॥ २ ॥

विमानादवतीर्य ताभ्यां ऋषभचन्द्राननवारिषेणवर्धमाननामानः शाश्वतार्हतां श्रीजिनप्रतिमा भक्त्या पूजिता वन्दिताः । तद्वन्दनावसाने मणिचूडमुनीश्वरं तावुभावपि नमस्कृत्य निषीदतुः । तदा स ज्ञानवान्मुनिर्ज्ञानेन मदनरेखाया व्यतिकरं ज्ञात्वा सद्धर्मदेशनया मणिप्रभं प्रत्यबोधयत् । ततो मणिप्रभखेचरेण मदनरेखा राज्ञी क्षामिता । मणिप्रभेणोक्तं—' अथ त्वमद्य वासरान्मम यामिरसि, ब्रूहि, किं तवेप्सितं करोमि ? ' । मदनरेखया प्रोक्तं—' बान्धव त्वया ममैतत्तीर्थदर्शनात्सर्वं शुभं कृतं ' । पश्चात्स मुनिः पृष्टः—' भगवन्मम पुत्रस्य व्यतिकरं कथयतु ' । मुनिरुवाच—" भद्रे द्वौ राजपुत्रौ प्रागास्तां । धर्मं कृत्वा तौ सुरौ जातौ । तौ तत-

ऽह्नि मध्यंदिने सरः प्राप्य जलं पपौ। तत्र वनफलैः प्राणवृत्तिं चकार। मार्गश्रमार्दिता श्रमखेदच्छेदार्थं एकस्मिन् कदलीगृहे सुष्वाप। तत्र पतिमरणजदुःखात् पुत्रविरहजदुःखात् मार्गश्रमाच्च निद्रा समागता। निशायामपि तत्रैव सुष्वाप। तस्यां रजन्यां व्याघ्रसिंहचित्रकशिवारवैरुत्त्रस्ता सा भूयो भूयो नमस्कारमचिन्तयत्। तत्रैवार्धरात्रौ तीव्रोदरव्यथा जाता। सर्वलक्षणसंपूर्णं सूर्यवत्तेजस्विनं कृच्छ्रेण पुत्रं सुषुवे। प्रातः कंबलरत्नेन वेष्टयित्वा श्रीयुगबाहुनामांकितमुद्रिकां बालस्य करे कृत्वा सरसि स्वचीवराणि क्षालयितुं ययौ। तत्र नीरमध्ये करी क्रीडति। तेनागत्य सा मदनरेखाऽम्बरे चो(प्रो)च्छालिता। अथ नन्दीश्वरद्वीपप्रस्थितो युवा खेचरस्तां राज्ञीं पतन्तीं वीक्ष्य रूपमोहितस्तां जगृहे। सा रुदन्ती वैताढ्यं नीता। सा धीरत्वमवलंब्यावदत्—"भो महासत्त्वाद्य यामिन्यां वने सुतं प्रसूताऽहं। तं बालकं कदलीगृहे मुक्त्वा सरोवरेऽहं प्रविष्टा। तत्र जले हस्तिनोत्क्षिप्ताऽम्बरेऽहं पतन्ती वीक्ष्य त्वया जगृहे। ततः स बालः केनापि श्वापदेन हनिष्यते। किं वाहाररहितः स्वयमेव मरिष्यति। तस्माद् भोः सद्य ममापत्यदानेन प्रसादं कुरु। ■ एवेहानीयतां, किं वा सत्वरं त्वं मां तत्र नय"। तच्छ्रुत्वा विद्याधरः प्राह—"भद्रे चेत्त्वं मां भर्तारं प्रतिपद्यसे तदा तवादेशकारी भवाम्यहं। अन्यच्च त्वं शृणु। वैताढ्ये खेचरश्रेणिस्वामी रत्नावहे पुरे मणिचूडाभिधो राजा, तस्याहं पुत्रो मणिप्रभाह्वः। स मम पिता निर्विण्णकामभोगः सन् मां राज्ये संस्थाप्य चारणश्रमणान्तिके दीक्षामग्रहीत्। स मत्पिता साधुः गतवासरे क्रमेण विहरन्नन्दीश्वरद्वीपे चैत्यानि वन्दितुं ययौ। तं मुनीश्वरं चैत्यानि च वन्दितुं सांप्रतं गतोऽभूवं। भद्रे मया पश्चाद्वलमानेन पथि त्वमीक्षिता। अथ च त्वं मां भर्तारं प्रतिपद्य राज्यस्वामिनी भव। अन्यच्च तवांगजस्तुरगापहृतेन मिथिलापतिना पद्मरथनृपेण वने ददृशे। तं बालकं गृहीत्वा स्वप्रियायाः पुष्पमालायाः समर्पितः। तत्र स्वसुतत्वेन लाल्यमानः सुखी

तिष्ठति । तन्मम प्रज्ञप्तिविद्यया कथितं । तस्मात्प्रसन्नमना भूत्वा मम राज्यमलंकुरु । तच्छ्रुत्वा मदनरेखया चिन्तितं—" अह-मम कर्मणां वैचित्र्यं यदन्यान्यव्यसनश्रेणी मम पुरः प्रादुर्भवति । अहं शीलरक्षणार्थं इयद् दूरं समागता, तथापि तस्यैव भंग इहापि समुपस्थितः । तच्छीलं मया नियमाद्रक्षितव्यं निश्चयेन " । इति संकल्प्य साऽजल्पत्—" अहो महानुभाव प्रथमं तावन्मम नंदीश्वरे जिनान् वन्दापय, मुनीन् वन्दापय, पश्चात्तव प्रियं करिष्ये " । ततस्तुष्टेन तेनासौ नन्दीश्वरद्वीपे क्षणेन नीता । तत्रैषा स्थितिः—

चत्वारोऽञ्जनशैलेषु दधिमुखेषु षोडश । द्वात्रिंशच्च रतिकराभिधानेषु जिनालयाः ॥ १ ॥

एवं द्विपञ्चाशज्जिनालयाः प्रासादाः—

योजनानां शतं दीर्घाः पञ्चाशद्विस्तृताश्च ते । द्विसप्तत्युच्छ्रिताः सर्वे द्विपञ्चाशद्भवन्त्यमी ॥ २ ॥

विमानादवतीर्य ताभ्यां ऋषभचन्द्राननवारिषेणवर्धमाननामानः शाश्वतार्हतां श्रीजिनप्रतिमा भक्त्या पूजिता वन्दिताः । तद्वन्दनानन्तरं मणिचूडमुनीश्वरं तावुभावपि नमस्कृत्य निषीदतुः । तदा स ज्ञानवान्मुनिर्ज्ञानेन मदनरेखाया व्यतिकरं ज्ञात्वा सद्धर्मदेशनया मणिप्रभं प्रत्यबोधयत् । ततो मणिप्रभखेचरेण मदनरेखा राज्ञी क्षामिता । मणिप्रभेणोक्तं—' अथ त्वमद्य वासरान्मम यामिर्वर्तसे, ब्रूहि, किं तवेप्सितं करोमि ? ' । मदनरेखया प्रोक्तं—' बान्धव त्वया ममैतत्तीर्थदर्शनात्सर्वं शुभं कृतं ' । पश्चात्स मुनिः पृष्टः—' भगवन्मम पुत्रस्य व्यतिकरं कथयतु ' । मुनिरुवाच—" भद्रे द्वौ राजपुत्रौ आस्तां । धर्मं कृत्वा तौ सुरौ जातौ । तौ तत-

श्रुतौ। तयोरेको मिथिलापतिः पद्मरथनृपोऽजनि। द्वितीयस्ते सुतोऽभवत्। अश्वापहृतेन पद्मरथेन तत्रांगजो गृहीत्वा स्वप्रियायाः पुष्पमालायाः समर्पितः। पद्मरथो नृपस्तुष्टः। पूर्वभवस्नेहान्मिथिलायां महोत्सवोऽकारि। तव पुत्रः सुखेन तिष्ठति।"

इतश्च जितसूर्यशशिप्रभं रत्नौघनिर्मितं किंकिणीध्वानमुखरं उच्छलत्तूर्यनिनादं देवैः कृतजयजयारावं विमानमेकं समागतं। ततस्तेजःप्रसरभासुरः प्रवरभूषणभूषितो देवैर्गीयमानगुणो देवश्चैको निर्ययौ। स सुरो मदनरेखायास्तिस्रः प्रदक्षिणा दत्वा पादयोर्निपत्य पश्चान्मुनिं नत्वा निषण्णवान्। तद्देवकृतमसंबद्धं दृष्ट्वा मणिप्रभो विद्याधर उवाच—"देवानामपि यद्येषा नीतिस्तदा कस्य किं ब्रूमः? चतुर्ज्ञानधरं चारुचारित्रभूषितं मुनिपुंगवं हित्वा प्राक् स्त्रीमात्रस्य प्रणामः कृतः"। अथ यावत्सुरः किञ्चिद्वक्ति तावन्मुनिर्जगौ—"मैवं ब्रूहि, सुरोऽयमुपालंभयोग्यो न। यतः कारणान्मणिरथो राजा मदनरेखासक्तो युगबाहुं सहोदरं जघान। मृत्युकाले मदनरेखया स्वभर्ता युगबाहुर्निपुणकोमलवाक्यैर्जैनेन्द्रं धर्मं ग्राहितः। तद्धर्मप्रभावात् पञ्चमे कल्पे इन्द्रसामानिकः सुरोऽभूत्। सुरस्येयं मदनरेखा धर्माचार्या। तस्मादनेन सुरेणापि इयं प्राग्वन्दिता। यतः—

**यो येन स्थाप्यते धर्मे यतिना गृहिणापि वा। स एव तस्य सद्धर्मदानाद्धर्मगुरुर्भवेत् ॥१॥**

किंच—

**सम्यक्त्वं ददता दत्तं शिवसौख्यं सनातनम्। एतद्दानोपकारस्योपकारः कोऽपि नो समः ॥२॥**

इत्यादि मुनिनाख्याते श्रीजिनधर्मस्य सामर्थ्यमद्भुतं विभावयन् विद्याधरोऽमरं क्षमयते। तदा देवो मदनरेखां प्राह—

'भद्रे पद, अहं किं तवाभीष्टं करोमि ?'। साप्याह—"जन्मजरामृत्युरोगशोकादिविवर्जितं मोक्षसौख्यं ममाभीष्टमस्ति । तद्दातुं जिनधर्मं विना केनापि नो शक्यते । तथापि मां शीघ्रं मिथिलापुर्यां नय। तत्र पुत्रमुखं निरीक्ष्य धर्मकर्मणि यतिष्ये"। ततः सा सुरेण तत्क्षणान्मिथिलापुर्यां नीता । यत्र श्रीमल्लिनाथस्य जन्म दीक्षा केवलं चाभूत्, तत्र तीर्थभूमिबुध्ध्याऽर्हच्चैत्येषु प्रणम्यासन्नोपाश्रये साध्वीर्दृष्ट्वा प्रणेमतुः । ताभिर्धर्मोपदेशो दत्तः—"यत् दुर्लभमिदं मानुष्यं प्राप्य धर्माधर्मफलं प्रत्यक्षं ज्ञात्वा धर्मकार्ये सदुद्यमो विधीयते"। इत्यादिदेशनाप्रान्ते सुरः प्रोवाच—'हे सुन्दरि त्वमेहि, राजमन्दिरे याव, तत्र तव तनयं दर्शये'। ततः साऽब्रवीत्—"अधुना भवहेतुना स्नेहेनालं । भवे भ्रमतां जन्तूनां पुत्रादिपरिवारः प्रचुरो जातः । अहं दीक्षां ग्रहीष्ये । एतासां साध्वीनां चरणाः शरणं मम"। इत्युक्ते सुरः साध्वीस्तां च नत्वा दिवि गतः । मदनरेखापि साध्वीनां समीपे दीक्षामग्रहीत् । सुव्रताख्या संजाता । इयं दुष्करं तपस्तपति, निरतिचारं चारित्रं पालयति । अथ तस्य बालस्य प्रभावात्सर्वेऽपि पार्थिवा नताः, तस्मात्पद्मरथो नृपस्तस्य बालस्य नमिरिति नाम निर्ममे । धात्रीभिर्लाल्यमानः पाल्यमानः समये कलां गृह्णन् श्वेतपक्षशशांकवद्वृद्धिं प्राप्तः यौवनस्थोऽभूत् । पित्रा सुकुलजातानामष्टोत्तरसहस्रमितानां कन्यानां पाणिग्रहणं कारितः । अथ पद्मरथो नृपः तं नमिं राज्ययोग्यं ज्ञात्वा राज्ये न्यस्य दीक्षां गृहीत्वा क्षीणकर्मा शिवं गतः । नमिर्नमितान्यभूपाल उन्नतिं प्राप ।

इतश्च यस्यां रात्रौ मणिरथो युगबाहुमवधीद् तस्यां निशायामेवाहिना दष्टः स मृत्वा तुर्यावनौ पंकप्रभायां गतः । तदा मंत्रिसामन्तैः युगबाहुसुतश्चन्द्रयशा राज्ये स्थापितः । स महीं पालयते । एकस्मिन् दिने नमे राज्ञो राज्यप्रधानो धवलः करी दृढमालानस्तंभमुन्मूल्य विन्ध्याटवीं प्रति प्रास्थात् । स करी सुदर्शनपुरसमीपे व्रजन् मनुष्यैर्दृष्ट्वा चन्द्रयशसो राज्ञो निवेदितः। राजाप्यैरावताभं

तमिभं बलात्स्वपुरमानयत् । तज्ज्ञात्वा चरपुरुषैर्नमिभूभुजः कथितं । तदा नमिराजेन दूतः प्रहितः। स गत्वोवाच–'नमी राजा स्वकीयं गजं याचते' । तदा चन्द्रयशा जगाद—"तव स्वामी किं ग्रहग्रथिलोऽस्ति ? यो निजं गजं याचते । मम परमेश्वरेण दत्तः । यतः—

न श्रीः कुलक्रमायाता शासने लिखितापि वा । खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ १ ॥

इत्याद्युक्त्वाऽपमान्य नृपो दूतं व्यसर्जयत् । सोऽपि गत्वा नमेः सर्वं सविशेषं व्यजिज्ञपत् । तदा नमिः कुपितः प्रयाणभेरीभांकारनादेन सर्वबलेन सुदर्शनपुरोपरि चलितः । तदा चन्द्रयशा नृपः सोत्साहं नमिनृपं प्रति संग्रामार्थं चलितः । परं त्वपशकुनैर्वारितः । तदा मंत्रिभिर्विज्ञप्तः—'राजेन्द्र गोपुराणि पिधायात्र तिष्ठ । पश्चाद्यथोचितं करिष्यामः' । सोऽपि राजा तथाऽकरोत् । नमिनृपतिरेत्य विष्वग् नगरमवेष्टयत् । तत्रैव व्यतिकरो जनन्या सुव्रतार्यया ज्ञातः । मनसि चिन्तितं—"अपरिज्ञातपरमार्थाविमायुभौ जनक्षयकरं संग्रामं विधायाधोगतिं मा प्रयातां" । इति निश्चित्य गुरुणीं समापृच्छ्य सुसाध्वीपरिवारपरिवृता सुदर्शनपुरे नमिनृपान्तिके समागच्छत् । तत्राभ्युत्थानं विधाय परमासने निवेश्य नमिभूभुजा भक्त्या मदनरेखा वन्दिता । राज्ञि भूमौ निविष्टे साध्वी देशनां विधाय रहस्यमिदमब्रवीत्—"राजन् राज्यश्रीरसारा, जीवघातेन जीवो ध्रुवं नरके प्रयाति, संग्रामान्निवर्तस्व । अन्यच्च ज्येष्ठभ्रात्रा सह कथं विग्रहः ?" । नमिराजेन पृष्टं—'कथं ममासौ ज्येष्ठभ्राता ?' । ततः साध्व्या सर्वं यथातथं ख्यातं । प्रत्ययार्थं मुद्रिकारत्नकंबले कथिते । पुष्पमालया पृष्ट्या ते तु दर्शिते । तथापि मानेन नमिनृपतिः संग्रामान्न व्यरमत् । ततः साध्वी चन्द्रयशःपार्श्वं गता । तेन राज्ञा सत्वरमुपलक्षिता, अभ्युत्थायासनं दत्वा नत्वा नृपो निविष्टवान् । अन्तःपुरपरिवारजनस्तां ननाम । 'भगवति किमेतदुग्रं व्रतं गृहीतं' ? सा निजं वृत्तान्तं यथावस्थितमकथयत् । राज्ञा प्रोक्तं—'मे सहोदरः स्वमल्लचितः कुत्रास्ते ?' ।

आर्यया गदितं—'येन त्वं रोधितोऽसि स नमिनृपः तव सहोदरो बाह्येऽस्ति'। ततो हर्षाकुलश्चन्द्रयशा नृपो नमिनृपमिलनार्थं संमुखं गतः। नमिर्दृष्टः। सोऽपि तस्य संमुखमाययौ। नमिर्ज्येष्ठबन्धुपादयोः पतितः। अन्योऽन्यं स्नेहेन मिलितौ। महोत्सवेन नगरं प्रवेश्य नमिं चन्द्रयशा नृपोऽश्रुपूर्णेक्षणोऽवदत्—"वत्स पितुरेवं मृतिं दृष्ट्वा राज्ये मम रतिर्नास्ति। परं राज्यधूर्धराभावादियत्कालमहं स्थितः"। इत्यादिवाक्यैः संबोध्य नमिं राज्ये स्थापयित्वा प्राव्राजीत्। नमिः सूर्यवत्प्रतापवान् शुशुभेतरां। सुखेन बहुकालो ययौ।

अन्यदा नमिराजस्य महादाहज्वरस्तनौ प्रादुरभूत्। तदुपशमनार्थं भेषजान्यकरोत्, तथापि न शशाम। ततस्तस्योपशान्तये राज्यः स्वयं चन्दनानि घर्षयन्ति। तदा बाहुवलयश्रेणिरणत्काररवैर्नृपस्य कर्णाघातेनारतिर्भृशं जायते। ततो राज्यः कंकणानि करादुत्तारयामासुः। एकैकं कंकणं करे मंगलाय दधुः। अथ नृपोऽमात्यमपृच्छत्—'देव्यः किं चन्दनं न घर्षयन्ति? यत्कारणात्कंकणशब्दो न श्रूयते'। ततो मंत्रिजनोऽवादीत्—"स्वामिन् ताः सर्वा अपि राज्यश्चन्दनं घर्षयन्त्यः सन्ति। करस्थैकैकं वलयं, तेन ध्वनिर्न श्रूयते"। तच्छ्रुत्वा नृपः संजातसंबोधविछिन्नमोहो हृदि दध्यौ—"अहो भूरिसंयोगा दुःखदायकाः सन्ति, भूरिभिः कंकणैर्दुःखं, स्वल्पैः स्वल्पतरैः सुखं। यावदस्यैव दृष्टान्तादेकाकित्वे महत्सुखं। विस्तारः सर्वक्लेशाय संक्षेपास्तु सुखावहाः। अतः कारणादेकाकित्वं सुखावहं। यदि चाद्य निशायां मे दाहः कथमपि शाम्यति तदाहं सर्वसंगं परित्यज्यैकाकीभूय चारित्रं गृह्णामि" इति चिन्तयन्नमिनृपः सुप्तः। निद्रा समागात्। निशान्ते मन्दरोपरि श्वेतगजारूढमात्मानं स्वप्ने पश्यति। प्रातः शंखतूर्यरवेण प्रतिबुद्धः नमिरामयः सन् दध्यौ—"अहो मया कीदृशोयं स्वप्नः शुभो दृष्टः। यतः—

गोवृषे पर्वताग्रे च प्रासादे सफले द्रुमे । आरोहणं गजेन्द्रेऽपि स्वप्नशास्त्रे प्रशस्यते ॥१॥

पूर्वं मयेदृशः शैलराजो दृष्टोऽस्ति "। इति चिन्तयतस्तस्य शुभाध्यवसायाज्जातिस्मरणमभूत् । " पूर्वं मनुष्यभवे श्रामण्यं कृत्वा दशमे प्राणते कल्पे सुरोऽहमभूवं । ततोऽर्हज्जन्ममहोत्सवेऽहं मन्दरगिरौ समेतोऽभूवं। तदा मया मेरुर्दृष्टः "। ततो बुद्धः स्वयमेव स्वकीये साम्राज्ये सुतं न्यस्य देवतादत्तलिंगः सन् प्रव्रज्यां प्रपन्नवान् । तदा शक्रो विप्रवेशधरस्तं पुर्या निर्यान्तमालोक्य परीक्षितुं समाययौ । शक्रस्तं वदति—" भो महाराज तवेदं जीवदयाव्रतं किं ? त्वद्व्रतग्रहणे चैषा पुरी क्रन्दति, तदयुक्तं परबाधाकरं व्रतं "। ततो मुनिर्ब्रूते- " मम व्रतममीषां दुःखकारणं न किंतु स्वस्य कार्यहानिः दुःखस्य कारणं । ततोऽहमपि स्वकीयं कार्यं कुर्वे। ममान्यचिन्तया किं ? "। पुनर्हरिराह—' तवान्तःपुराणि गृहाणि च दह्यमानानि त्वं कथमुपेक्षसे ? ' । मुनिराह—' अहं सुखेनास्मि । मिथिलायां दह्यमानायां किमपि मे न दह्यते ' । पुनराह हरिः—' भोः पुर्यां दुर्गमं प्राकारं नानायंत्रयुतं कारयित्वा परिव्रज ' । राजर्षिः पुनराह— ' भो भद्र संयमो मम नगरं, शमाख्यः प्राकारः, नयाख्यो यंत्रोऽस्ति मम' । पुनः शक्रोऽब्रवीत्–' भोः क्षत्रिय लोकानां निवासाय मनोहरान् प्रासादान् कारयित्वा परिव्रज ' । मुनिः प्रोचे–'मम मन्दिरं निश्चलं मुक्तिपुरे कृतमस्ति, ममान्यैः गृहैः किं ? ' । हरिः प्राह—' प्रथमं पुर्यां चौरनिग्रहं कृत्वा पश्चात्परिव्रजेः' । ऋषिरुवाच–'भो महानुभाव मया रागाद्याश्चौरा निगृहीताः' । वासवः प्राह– 'ये चोद्धता नृपास्त्वया निर्जिता न भवन्ति तान्निर्जित्य प्रव्रज्यां कुरु' । ऋषिरुवाच–'अन्येषां सुभटानां किं ? कर्मणां जयः स परमो जय एव' । वासवोऽब्रवीत्–'गृहवासात्परो धर्मो नास्ति, यत्र दीनानां दानं दीयते' । ऋषिरुवाच–'गृहिधर्मः सावद्यः सर्षपतुल्यः, मुनिधर्मो निरवद्यो महामेरुगिरिवदुच्चः' ।हरिः प्राह—" हस्तगतान् भोगान् कथं त्यजसि ? प्रथममतिदुर्लभान् भोगान् भुक्त्वा

प्रव्रज्यां कुरु "। मुनिरूचे—" दृष्टिनिपाहितुल्याः शल्योपमा बहुवारान् भुक्तास्तथाप्यसंतुष्टस्य जीवस्य नो श्रातः "। शक्रणत्यादि भणितोऽपि नमिर्व्रतान्न चलति। ततः शक्रः साक्षाद् भूत्वा नमिं नत्वेदमब्रवीत्—"त्वं धन्यः, त्वं कृतपुण्यः, त्वं महानुभावः, तवैव गोत्रं श्लाघ्यं येन त्वया संसारस्तृणवत्त्यक्तः"। इत्येवं स्तुत्वा नत्वा वन्दित्वा त्रिः प्रदक्षिणां कृत्वा देदीप्यमानकुंडलो हरिः देवलोके जगाम। तदनु नमिराजर्षिः प्रत्येकबुद्धो निरतिचारं चारुचारित्रं प्रतिपाल्य कर्मक्षयं कृत्वा केवलं प्राप्य सिद्धिं गतः। मदनरेखापि चारित्रं प्रतिपाल्य मोक्षं गता। ते धन्या ये मदनरेखावच्छीलं पालयन्ति। ते च मुक्तिं प्राप्नुवन्ति। तेऽपि धन्या ये नमिराजर्षिवद्राज्यं त्यक्त्वा चारित्रं गृहीत्वा पालयन्ति। तेऽपि च सिद्धिगतिं प्राप्नुवन्ति।

अधुना तप उच्यते—अनन्तकालनिचितानि निकाचितान्यपि कर्मेन्धनानि तपोऽग्निना दह्यंते। यतः—

कान्तारं न यथेतरो ज्वलयितुं दक्षो दवाग्निं विना, दावाग्निं न यथा परः शमयितुं शक्तो विनाऽम्भोधरम्।
निष्णातः पवनं विना निरसितुं नान्यो यथांभोधरं, कर्मौघं तपसा विना किमपरं हन्तुं समर्थं तथा॥ १॥

यस्माद्विघ्नपरंपरा विघटते दास्यं सुराः कुर्वते. कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम्॥२॥

अहो महानुभावाः तत्तपस्तप्यतां, यत्तपःप्रभावात्सनत्कुमारः प्राज्यं राज्यं परित्यज्य लब्धीः प्राप्तवान्। तदाख्यायते। तथाहि—

## अथ सनत्कुमारकथा।

अस्मिन्नेव भरतक्षेत्रे कुरुजंगलदेशे महार्द्धिभरसंपूर्णं हस्तिनागपुरं पुरं वर्तते । तत्राशेषविक्रमाक्रान्तारिगणो वीरसेनाभिधो राजास्ति । तस्य सहधर्मचारिणी सहदेव्यभिधाना पट्टराज्ञी समस्ति । सा शीलालंकृतगात्रा पवित्रपुण्यपात्रा । तस्याश्चतुर्दशस्वप्नसूचितः सर्वशुभलक्षणसंपूर्णः श्रीमान् सनत्कुमारः सुतः समजनि । तस्य शूरराजसुतः कालिन्दीकुक्षिसंभवो महेन्द्रसेनाख्यः पांशुक्रीडितः सखास्ति । स सनत्कुमारो मित्रेण सह स्तोकैर्दिनैः सकलाः कला ग्राहितः । कुमारः शिष्टजनोचितान् विविधान् विनोदान् कुर्वन् सर्वेषां प्रीतयेऽजनि । अथास्य यौवनारंभेऽन्यदा वसन्तर्तुः समागतः । सनत्कुमारो मित्रेण सह नागरजनैश्च समं वने गत्वा नानावसन्तक्रीडाभिश्चिरं चिक्रीड । अथासन्नसरसि कुमारः समित्रो जलक्रीडां करोति । अथेभः कोऽपि तत्र समागतः । स्वशुंडेनापि कुमारं समित्रं स्वस्कन्धे कृत्वा नभसि समुड्डीनः । कुमारो हस्तिस्कन्धसमारूढः पृथिव्यां नानाविधकौतुकानि विलोकयति । क्रमेण करी वैताढ्ये दक्षिणश्रेण्यां रथनूपुरनगरसमीपवने गत्वा कुमारं मुमोच । स करी नगरे गतः । तत्र राज्ञोऽग्रे निवेदितं–'स्वामिन्मया सनत्कुमारः समानीतः' । तत्र कमलवेगनृपतिः सपरिकरो वने गत्वा सनत्कुमारं प्रणम्य प्रोक्तवान्–"स्वामिन् मम मदनकलाभिधाना सुतास्ति । तां च यौवनावस्थां ज्ञात्वा मयैको नैमित्तिकः पृष्टः अस्याः को वरो भावीति । तदा नैमित्तिकेनोक्तं–एतस्याः सनत्कुमारश्चक्री भर्ता भविष्यति । तस्मान्मया युष्मदाकारणार्थं विद्याधरः प्रेषितः, भव्यं जातं । नगरमध्ये समागच्छतु"। तदा चक्रवर्ती महोत्सवपूर्वकं नगरमध्ये समागात् । तत्र नृपेण कन्यायाः पाणिग्रहणं कारितं । अन्यैरपि विद्याधरैः स्वस्वकन्या दत्ताः । पञ्च-

शतकन्याः परिणीताः। तत्रोत्तरश्रेणीविद्याधराणां पञ्चशतकन्याः परिणीताः। तत्रस्थविद्याधरनृपैस्तस्याभिषेकः कृतः। वयं तवाज्ञाकारिणः स्म इत्यवोचन्। कियद्दिनानि तत्र स्थित्वा चतुरंगचमूयुतो व्योमगताश्वभविमानारूढः स्वनगरे समागतः। तत्र पुत्रविरहजनितदुःखतप्तं पितरं ननाम। तत्र पितरौ परमानन्दनन्दिनौ जातौ। नागरा अपि मुदं प्राप्ताः। अन्यदा चक्रादीनि चतुर्दश महारत्नानि समुत्पन्नानि। क्रमेण सर्वं भरतं साधितं। नव निधयः समुत्पन्नाः। विश्वविख्यातः सुप्रसिद्धो दीप्ततेजा महांश्चक्रवर्ती संजातः। चक्रवर्तिसंबन्धिनो महाभोगानुदारान् भुञ्जानस्य तस्य कालो याति॥

अन्यदा देवलोके सौधर्मेन्द्रः सभासीनो नाटकं प्रेक्षमाणोऽस्ति। अत्रांतरे संगमाख्यो देव ईशानदेवलोकतः सौधर्मेन्द्रसमीपे समागतः। तद्देहप्रभया सभास्थिताः सर्वे सुरा निष्प्रभा जाताः यथा सूर्योदये चन्द्रादिग्रहाः सर्वे निस्तेजसो भवन्ति। स देवो देवसंबन्धि कार्यं कृत्वा स्वं विमानं गतः। तदा तैर्विस्मितैर्देवैर्देवेन्द्रः पृष्टः–'अयं देवः केन कारणेनातीव तीव्रतेजा दृश्यते?'। सुरेन्द्रेणोक्तं–"अहो देवाः श्रूयतां अनेन प्राग्भवे आचाम्लवर्धमानाख्यं तपः कृतं तेनेदृशं तेजः समजनि"। पुनर्देवैः पृष्टं–'स्वामिन्मनुष्यलोके कोऽप्यधिकरूपवानस्ति?'। तत इन्द्रोऽवदत्–"मनुष्यलोकेऽधुना कुरुवंशविभूषणो हस्तिनागपुरे सनत्कुमारश्चक्रवर्ती राज्यं करोति। सोऽधिकरूपवानस्ति। देवेभ्योऽप्यतिरिच्यते"। तन्निशम्य सुराः सर्वेऽपि विस्मयं प्राप्ताः। जयविजयौ द्वौ देवौ तद्वचोऽश्रद्दधानौ विप्ररूपेण भुवमागतौ। चक्रवर्तिभवनद्वारे वेत्रिमुक्तद्वारौ तौ प्रविश्य चक्रवर्तितनुरूपं विलोकयन्तौ मुदमापतुः–'यदिन्द्रेणोक्तं तत्सर्वं सत्यं'। ताभ्यां तैलाभ्यंगविधिं कुर्वन् नृपो दृष्टः। तदा चक्रिणा पृष्टं–'युवां कौ? किमिहागमनकारणं?'। तावूचतुः–"नरेन्द्र आवां विप्रौ। जगत्त्रये तव रूपमधिकतरं वर्ण्यते। तद् द्रष्टुं

नृपोऽथ निस्मितो दिव्यकटकांगदभूषितं सम्यगालोकनात् बाहुयुग्मं विच्छायमैक्षत । हारार्धहाराद्यैर्भूषितं वक्षःस्थलं रजश्छन्नार्कबिम्बनिःश्रीकं सोऽपश्यत् । एवं सर्वमप्यंगं निष्प्रभं दृष्ट्वाऽचिन्तयत्—" अहो संसारः कीदृशः ? एवंविधं मदीयं सुन्दर रूपं निच्छायं जातं । अहो कस्य शरणं । न कोऽपि कस्य केनापि रक्षितुं शक्यते । ते महात्मानो ये सर्वसंगं त्यक्त्वा वने गत्वा परिव्रज्य चारित्रमाचरन्ति" । इति ध्यात्वा महसोत्पन्नवैराग्यो निःसंगो विनयंधरगुर्वन्तिके नृपः प्राव्राजीद् । ततः स्त्रीरत्नमुख्यानि चतुर्दश रत्नानि नरेन्द्रा आभियोगिकदेवाः स्कन्धावारजना अपि तस्य मार्गानुलग्नाः षण्मासान् यावदभ्रमन् । तेन चक्ररूपिणा ते न वीक्षिताः । अगन्धनकुले जाता नागाः किं वान्तमिच्छन्ति । तथैव तेन वान्ताहारवत्सर्वं त्यक्तं । अथ स पूज्यः षष्ठभक्तान्ते गोचरचर्यया भ्रमन् चीनकूरमजातक्रं लब्धवान् । तदेवाशनं भुक्त्वा महान् स पुनः षष्ठोपवासं विदधे । तद्दिनादारभ्य दुष्टव्याधयोऽभवन् । तद्यथा—

शुष्ककच्छू ज्वरः कासः श्वास अन्नारुचिस्तथा । अक्षिदुःखं तुन्ददुःखं सप्तैतेऽत्यन्तदारुणाः ॥ १ ॥

अन्येऽपि बहवो रोगाः प्रादुर्बभूवुः । सप्त वर्षशतानि तानधिसह्य दीप्तोग्रतपांसि तपति । तस्य तपस्तपतः कफश्लेष्मविप्रुण्मलामर्शसर्वौषधिनखश्वेदः संभिन्नश्रोतोलब्धिश्च एवंविधाः सप्त लब्धयोऽभवन् । तथापि स महामुनीश्वरो रोगप्रतीकारं न चक्रे । अथ सौधर्मेन्द्रः सभायां साधुवर्णनं कुर्वन् वैद्यरूपं निर्माय मुनिपार्श्वे समागात् । मुनिं वदति—"भगवन्ननु जानीहि । अहं तव व्याधिप्रतिक्रियां कुर्वे । त्वं निरपेक्षोऽसि तथाप्यहं तव व्याधिनाशं करोमि" । मुनिराह—' भो वैद्य द्रव्यव्याधिरस्ति भावव्याधिरस्ति, त्वं कस्य प्रतीकारं करिष्यसि ? ' । वैद्येनोक्तं—' द्रव्यव्याधिभावव्याधिभेदौ नाहं जाने' । मुनिरूचे—' द्रव्यव्याधिः

प्रकटो दृश्यते, भावव्याधिस्तु कर्म, तस्य त्वं प्रतिक्रियां करिष्यसि ?' । शक्रेणोक्तं—'स्वामिन् कर्मव्याधिरुल्बणः, तं छेत्तुं न शक्नोमि' । मुनिर्निजांगुलिं श्लेष्मणा लिप्त्वा स्वर्णवर्णां विधाय दर्शयामास—' भो वैद्यराज मम कर्माणि मयैव भोक्तव्यानि, अतः किं प्रतिक्रियां करोमि ?' ततः प्रशंसापर इन्द्रस्त्रिप्रदक्षिणां दत्वा स्वस्वरूपं प्रकटं कृत्वा मुनिं भूयो भूयोऽभिवन्द्य स्वास्पदं ययौ । श्रीमान् सनत्कुमारमुनीन्द्रोऽपि कर्मक्षयं कृत्वायुः परिपूर्य सनत्कुमाराख्यं तृतीयकल्पं जगाम । तत्रायुः पूर्णं भुक्त्वा महाविदेहे सिद्धः । ईदृशं तपोमाहात्म्यं विज्ञाय कर्मनिर्मूलनोद्यमपरैर्महात्मभिर्यथाशक्त्या तपः कार्यं ॥

अधुना भावना प्रतन्यते—धर्मस्य मित्रं भावः । कर्मेन्धनानलो भावः । सत्कृत्यान्नेषु घृतं भाव एव । सुकृतलेशोऽपि भावान्नृणां सर्वार्थसिद्धिदः । यतः—

**निच्चुण्णो तंबोलो पासेण विणा ण होइ जह रंगो । तह दाणसीलतवभूयणाओ अहलाओ भावविण ॥१॥**

भावभ्रष्टानां नराणां तु सर्वत्र भ्रष्टता भवेत् । भावेनैकदिनमपि चारित्रं पालितं सद्गतये भवति । तत्र पुंडरीककंडरीकनिदर्शनं कथ्यमानं श्रूयतां । तथाहि—

## अथ पुंडरीककंडरीककथा ॥

अस्मिन्नेव जंबूद्वीपे महाविदेहक्षेत्रे पुष्कलावत्यां विजये श्रीपुंडरीकिणी नगर्यस्ति । तत्र नयश्रियः पात्रं महापद्माभिधो राजास्ति । तस्य शीलविनयविवेकौदार्यचारुचातुर्यवती पद्मावती नाम प्रियास्ति । तस्य नृपस्य शस्त्रशास्त्रविशारदौ पुंडरीककंडरी-

काभिधौ तनयौ बभूवतुः । नृपो न्यायेन राज्यं प्रजां च पालयति । अन्यदा बहिर्नलिनीवनोद्याने बहुसाधुपरिवारपरिवृताः श्रीसुव्रताचार्यगुरवः समवसृताः । महापद्मो नृपस्तदागमनं ज्ञात्वा तत्र वने गत्वा गुरुं नत्वा भूभागे समुपविष्टः । गुरुर्धर्ममादिशत्—

चत्तारि परमंगानि दुल्लहाणी य जंतुणो । माणुसत्तं सुई सध्धा संजमे मह वीरियं ॥ १ ॥

इत्यादि गुरूपदिष्टां धर्मदेशनां श्रुत्वा महीपतिर्जातश्रद्धः पुंडरीकज्येष्ठपुत्रस्य राज्यभारं न्यस्य स्वयं व्रतमग्रहीत् । स चतुर्दश पूर्वाणि समधीत्य विविधैस्तपोभिः श्रामण्यं पर्यपालयत् । मासमेकं संलेखनां कृत्वा प्रान्ते देहं हित्वा सर्वदुःखपरिक्षीणो निर्वाणपदमासदत् । अथ कियता कालेन त एव स्थविरास्तत्रैव विहारं कुर्वन्तश्चेयुः । पुंडरीको भूपतिः स्थविरागमनं ज्ञात्वा सानुजः सपरिच्छदो वन्दितुं गतः । गुरुं भक्त्या वन्दते । गुरुणा सविस्तरा धर्मदेशना दत्ता । पुंडरीकोऽपि तां धर्मदेशनां विभावयन् लघुकर्मतया संजातसंवेगः पुरीं प्राविशत् । निजामात्यानाकार्य कंडरीकं पुरस्कृत्य सहर्षमिदमब्रवीत्—" वत्स मया भोगा भुक्ताः । अक्षतं राज्यं च पालितं । राजानो वशीकृताः । क्षोणिमंडलं साधितं । देवगुरवोऽपि पूजिताः । गृहिधर्मो निषेवितः । स्वजनाः सत्कृताः । अर्थिनः सफलीकृता । यशोऽर्जितं । अधुना मम तारुण्यं याति । जरा निकटं समभ्येति । मृत्युरासन्नतामेति । पुनर्जीवानां पुनर्जन्म पुनर्मृत्युः पुनर्दिवसः पुनर्निशा । एवं संसारो विडंबनाप्रायः । मया च गुरुवचः श्रुतं । अहं संसाराद्विरक्तोऽस्मि । तस्मात्त्वमिदं राज्यं गृहाण । नीत्या राज्यं प्रजां च पालय । अहं च सुगुरोः पार्श्वे गत्वा सर्वार्थसिद्धिकरीं दीक्षां ग्रहीष्ये " । कंडरीको जगौ—

" भ्रातस्त्वं किं मां भवसमुद्रे पातयसि ? । मयापि धर्मः श्रुतः । अहं प्रव्रज्यां गृहीत्वा जन्म सफलीकरिष्ये " । पुंडरीको जगाद— " भ्रातश्चारित्रं दुष्करमस्ति । सर्वभूतेषु समता दया च पाल्या । सर्वदा सत्यं भाषितव्यं । तृणमात्रस्याप्यदत्तस्य विवर्जनं कार्यं । ब्रह्मव्रतं सदा धार्यं । सर्वदापि परिग्रहस्त्याज्यः । रात्रौ चतुर्विधाहारविवर्जनं कार्यं । द्विचत्वारिंशद्दोषविवर्जित आहारो ग्राह्यः । अशुद्ध्यमानमाहारं गृह्णन् चारित्रभ्रष्टत्वं भवति । चतुर्दशविधोपकरणानि धार्याणि । सिध्धान्तेऽप्युक्तं—

पत्तं १ पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिया ४ । पडलाइं ५ रयत्ताणं ६ गुच्छओ ७ पायनिज्जोगो ॥

तिन्नेव य पच्छाणं १० रयहरणं ११ चेव होइ मुहपत्ती १२ ।

एसो दुवालसविहो उवही जिणकप्पियाणं तु ॥ २ ॥

एए चेव दुवालस मत्तयरेगं चोलपट्टो अ । एसो चउदसरूवो उवही पुण थेरकप्पंमि ॥ ३ ॥

साधुना संनिधौ संचयस्त्याज्य एव । गृहस्थस्य संस्तवो न कार्यः कदापि हि । पुष्टा रागादयोऽरयो जेतव्याः । खड्गधारोपमं व्रतं वर्तते । त्वं बालोऽसि । इदं व्रतं भुजाभ्यामब्धितरणसन्निभं चास्ति । परीषहाः सोढुमशक्याः । अधुना गृहिव्रतासक्तो राज्यं पालय । समतिक्रान्तयौवनः परिव्रज्यां त्वमाश्रयेः " । इत्यादियुक्तिभिरुक्तोऽपि कदाग्रहं नामुञ्चत् । अथ कंडरीको नृपेण प्रधानैश्च वार्यमाणोऽपि व्रतमग्रहीत् । राज्ञा भ्रातुर्निःक्रमणोत्सवोऽकारि । ' यावद्राज्यधरः कोऽपि स्यात्तावदिमो स्थीयतां ' मंत्रिभि-

रित्याद्युक्तो राजा भावनां भावयति । कंडरीकोऽपि साधुभिः सह विहारं कुर्वन् चारित्रं प्रतिपालयति । एवं बहुकालो ययौ । एकदा पुष्पावतीपुरीवनासन्ने स्थविराः समवसृताः । तत्र पुरीजनाः केचिद्वन्दनार्थं समागताः । तदा कंडरीको निर्व्यंजनं ध्यानमकार्षीत् । तदा वसन्तक्रीडार्थं केचिन्नागराः क्रीडन्ति नृत्यन्ति हसन्ति जल्पन्ति तल्पन्ति गायन्ति वादयन्ति । एवं च वसन्ते विलसन्ति तदा तस्य व्रतविघातकृच्चारित्रावरणीयाख्यं कर्कशं कर्म समुदीर्णं—" एते जना धन्याः, ये गृहे स्थिताः संसारसुखं भुञ्जन्ति नृत्यन्ति गायन्ति स्रक्चन्दनवनितादीनां सुखं गृह्णन्ति इच्छाहारं भुञ्जन्ति । अहं तु प्रव्रज्यां गृहीत्वा नरकोपमे दुःखे स्थितोऽस्मि । क्षणमात्रमपि मम सुखं नास्ति । तुच्छाहारः सोऽपि शीतलः । कदन्न ज्वालिताहारभोजनं परीषहसहनं नरकोपमं दुःखं केन भोक्तुं शक्यते ? । अनया दुःखदायिन्या दीक्षयाऽलं । राज्यमेव समाश्रयामि " । इति विचिन्त्य भग्नमना भावभ्रष्टः समजनि । तं तथाविधं ज्ञात्वा साधवोऽपि तत्यजुः । गुरुणाप्युपेक्षितः । अन्यदैकस्मिन्नवसरे द्रव्यलिंगोपकरणान्वितः स्वनगरीबहिरुद्यानसीमनि गत्वा तस्थौ । तरुशाखायां पात्रकं मालंब्य हरितावनौ निविश्योद्यानपालकैर्भूपमाकारयामास । उद्यानपालकेन गत्वा नृपस्योक्तं—' स्वामिन् एकाकी कंडरीक इहायतः ' । तदा स संभ्रान्तश्चमूवृतो भूपतिस्तत्राययौ । तं भग्नपरिणामं विदित्वा तं वन्दित्वाऽब्रवीत्—" त्वं पूज्यः, त्वं महानुभावः, त्वं धन्यः, येन त्वया तारुण्ये वयसि व्रतं गृहीतं । चारित्रं शुद्धं प्रतिपालयसि " । इत्यादिकोमलवाक्यैः प्रेरितो लज्जितः ततः स्थानाद्गतः । मनसा भग्नचारित्रो वेलया क्रियां न करोति । यतः

यद्यपि मृगमदचन्दनकुंकुमकर्पूरवेष्टितो लसुनः । तदपि न मुञ्चति गन्धं प्रकृतिगुणा जातिदोषेण ॥१॥

नृपेण प्रेरितोऽपि स तथैव भ्रष्टो जातः पुनरपि वर्षानन्तरं तथैव तत्रागात्। नृपोऽपि तथैव समागत्य तमब्रवीत्—" महानुभाव संयममेरुमारुह्य किमात्मानं पातयसि ? राज्यादिसंपदस्तु सुलभाः, जिनधर्मस्तु दुर्लभः "। कंडरीकः प्राह—" अमूभिर्वचोयुक्तिभिर्मम प्रयोजनं नास्ति। अथ दीक्षयाऽलं। मयेदं दुष्करं सोढुं न शक्यते "। नृपः प्राह—' इदं राज्यं गृहाण, मदीयं चेप्सितं जातं '। नृपः पुनराह—' भो नरेन्द्रा भो अमात्या अस्यैव राज्याभिषेकः कार्यः, अहं परिव्रज्यां ग्रहीष्ये '। इत्युक्त्वा पुंडरीकनृपतिः कंडरीकस्य साधुलिंगान्यग्रहीत्। स्वयमेव दीक्षां गृह्णाति। कंडरीकोऽथ कृष्णास्यैः पौरामात्यादिभिः सह पुरीं प्रविश्य गृहान्तर्गत्वा समुपाविशत्। ' सिंहवन्निष्क्रम्य जंबूकोऽधुना जातः '। सामन्तमुख्या इति विचिन्त्य तं हसन्ति निन्दन्ति तं न नमन्ति। ततः कंडरीकनृपतिर्दध्यौ—'प्रथमं भोजनं कृत्वा पश्चात् दुष्टानाममीषां निग्रहं करिष्ये'। सोऽचिरात्सर्वान्नानां पाकमकारयत्। क्रमेण वारंवारं सर्वान्नैर्भोजनं स तथाऽकरोद्यथा भृत्यैर्भुजयोर्धृत्वा शय्यां नीतः। मध्यनिशि विशूचिका जज्ञे। शूलं कर्कशमुत्पन्नं। वातो रुद्धः। स तीव्रवेदनया प्रलापं कर्तुमुद्यतः। तदा केनापि तस्य प्रतिक्रिया नो चक्रे। तदनु तेन चिन्तितं—' यद्येषा रात्रिर्विभाति तदा मंत्रिवैद्यादीन् संहरामि '। इत्थं रौद्रध्यानमयमानसो मृत्वा सप्तमावनौ नारको जज्ञे। अथ पुंडरीको राजर्षिश्चिन्तयति—'धन्योऽहं, येन मयाऽयं साधुधर्मः प्राप्तः। गुरुसमीपे गत्वा चारित्रं पालयिष्ये'। इति चिन्तयन् क्षुत्तृट्तापादिदुःखादचलमानसो मार्गातिगमनात् गलद्रक्तपदः श्रमात् श्रान्त एकस्मिन् ग्रामे स उपाश्रयमयाचत। तत्र तृणसंस्तारके प्रशस्तलेश्यः स उपविश्येदं चेतसि धर्मध्यानं भावयामास—"कदाहं गुरुसमीपे गत्वाऽशेषकर्मनिर्मूलनक्षमां यथोचि(दि)तां परिव्रज्यां पालयिष्यामि"। इति चिन्तयन् यावत्तरं व्याकुलो जातः। तदा मस्तकेऽञ्जलिं बद्ध्वा स्पष्टाक्षरैरिदं बभाण—"नमोऽर्हद्भ्यो भगवद्भ्यः। नमो मे धर्माचार्येभ्यः। अहमव-

लोऽग्रस्थः त्वत्पादान्ते हिंसामलीकमदत्तं मैथुनं परिग्रहं निशाभुक्तं क्रोधमानमायालोभं रागद्वेषकलहं चाभ्याख्यानं रतिमरतिं परनिन्दनं मायामृषां तथा मिथ्यात्वशल्यनामकं, अष्टादशेमानि पापस्थानानि त्यजामि। यद्यपीदं प्रियं कान्तं लालितं पालितं चिरकालं संभालितमिदं शरीरमन्तिमश्वासोच्छ्वासेन त्रिविधं त्रिविधेन व्युत्सृजामि"। इति भावांबुना धौतकलुषात्मा विपद्य सर्वार्थसिद्धाख्ये पञ्चमानुत्तरविमाने सुरोत्तमोऽभूत्। भो भविका इत्थं भावस्य माहात्म्यं ज्ञात्वा धर्मकृत्येषु भावप्रधानेन भाव्यं। इत्यादि श्रीपार्श्वजिनेन्द्रस्य देशनां श्रुत्वा बहवो जनाश्चारित्रं जगृहुः। केऽपि श्राद्धधर्मं जगृहुः। केऽपि सम्यक्त्वं प्रतिपेदिरे। केऽपि भद्रकतां ययुः। श्रीमदश्वसेननृपोऽपि प्रभोर्वदनपंकजजां देशनां निशम्य हस्तिसेनाय सूनवे राज्यं दत्वा दीक्षां जग्राह। वामादेवीप्रभावत्यौ भवतारिणीं वाणीं प्रभोः सकाशाच्छ्रुत्वा हृदि विभाव्य दीक्षां जगृहतुः। प्रभुणा तत्र दशगणधरस्थापना कृता। तेषां नामान्याह—

आर्यदत्त आर्यघोषो विशिष्टो ब्रह्मनामकः। सोमश्च श्रीधरो वीरसेनो भद्रयशा जयः ॥१॥

विजयश्चेति गणभृन्नामकर्मभृतो दश ॥

एतेषामुत्पादविगमध्रौव्यरूपां पदत्रयीं प्रभुराख्यत्। ते गणधरास्तदा द्वादशांगीमसूत्रयन्। अथ विभुः श्रीपार्श्वजिनेन्द्रः समुत्थाय तेषां मौलिषु शक्रोपढौकितानि रत्नस्थालस्थितानि दिव्यवासांसि न्यक्षिपत्। तत्र प्रभुणा दुन्दुभिध्वानपूर्वकं सुरेन्द्रसमक्षं चतुर्विधसंघस्थापना कृता। प्रभुस्तत्रोपविश्यानुशिष्टिं व्यधात्। तदनु प्रभुः प्रथमपौरुष्यां देशनां विसर्ज्य तत उत्थायेशानदिक्स्थिते देवकृते दिव्यदेवच्छन्दे गत्वा विश्रामसुखमनुबभूव ॥

श्रीहेमसोमसूरीश ऋद्धिवृद्धिसमृद्धिदः । पार्श्वनाथो जिनो वः स्तान्मनोवाञ्छितसिद्धये ॥ १ ॥

इति श्रीतपागच्छीयश्रीपूज्यश्रीहेमविमलसूरिसंतानीयश्रीहेमसोमसूरिविजयराज्ये पं० संघवीरगणिशिष्य पं० उदयवीरगणिविरचिते श्रीपार्श्वनाथगद्यबन्धलघुचरित्रे भगवद्विवाहदीक्षाकेवलज्ञानसमवसरणदेशनावर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

पार्श्वनाथचरित्रस्य सर्गः षष्ठस्ततो मुदा । पंडितोदयवीरेण गद्यबन्धेन निर्मितः ॥ १ ॥

# अथ सप्तमः सर्गः ।

पार्श्वनाथं प्रणम्याहं वन्द्यमानपुरन्दरम् । ऊचेऽहं सप्तमं सर्गं कथाकल्लोलसुन्दरम् ॥ १ ॥

अथ श्रीपार्श्वनाथप्रभोराद्यगणधरः श्रीआर्यदत्तो देशनां व्यधात् । तद्यथा—" भो भविका प्रथमं मनीषिणां यतिधर्मः शीघ्रमोक्षदायक एव । तत्राशक्ताः श्राद्धधर्मं प्रकुर्वन्तु । असारे संसारे धर्म एव साररूपः । गृहस्थः शीले तपसि क्रियायामशक्तः, तथापि तेन श्रद्धा कार्या " । तदाऽमात्येन पृष्टं—' भगवन् श्राद्धधर्मं कथयतु ' । तदा गणधरेणोक्तं । श्रूयताम्—

गृहस्थानां सम्यक्त्वमूलो द्वादशव्रतरूपो धर्मः । तत्रादौ धर्मस्य मूलं सम्यक्त्वं ।

या देवे देवताबुध्धिर्गुरौ च गुरुतामतिः। धर्मे च धर्मधीः शुध्धा सम्यक्त्वमिदमुच्यते ॥ १ ॥

सम्यक्त्वाद्विपरीतं मिथ्यात्वं त्याज्यं। सम्यक्त्वस्य पञ्चातिचाराः " संकाकंखविगिच्छा " शंका देवगुरुधर्माणां शंका सत्यं वा इदं वा १। आकांक्षाऽन्येषां हरिहरसूर्यादीनां प्रभावं दृष्ट्वा तस्य वा जिनधर्मस्यापि वांछां करोति, शंखेश्वरादीनां भोगं मनुते २। विचिकित्सा धर्मसंबन्धिफलसंदेहः, तथा देवगुरुधर्माणां निन्दा स तृतीयोऽतिचारः ३। अन्यदर्शनीयस्य प्रशंसा ४। अन्यदर्शनीयेन सह परिचयः, तस्य च संस्तवनं करोति ५। इदं सम्यक्त्वं पञ्चातिचाररहितं श्राद्धैः परिपालनीयं।

द्वादशव्रतमध्ये प्रथममणुव्रतं प्राणातिपातं परिपालनीयं। श्राद्धानां धर्मः सपादविश्वोऽस्ति।

जीवा सुहुमा थूला संकप्पारंभओ भवे दुविहा। सावराहनिरवराहा साविक्खा चेव निरविक्खा ॥ १ ॥

अस्या गाथाया व्याख्यानं गुरुमुखाज्ज्ञेयं। प्रथमाणुव्रतस्य प्राणातिपातस्य पञ्चातिचारास्त्याज्याः। " वहबंधछविच्छेए " वधो द्विपदचतुष्पदादीनां निर्दयत्वेन मुष्टियष्ट्यादिभिर्घातं करोति, स वधरूपोऽतिचारः १। बन्धः निबिडबन्धनेन द्विपदचतुष्पदादीनां बन्धः २। छविच्छेदः कर्णकंबलादिच्छेदनं पशूनां करोति ३। अतिभारः बहुभारारोपणं करोतीति तुर्योऽतिचारः ४। भक्तपानविच्छेदं करोतीति पञ्चमोतिचारः ५। द्वितीयं मृषावादमणुव्रतं, तस्यापि पञ्चातिचाराः "सहसारहस्सदारे"। सहसाकारेण कस्यापि कूटालीकं दीयते १। यदेकान्ते केनापि सहालोचनं क्रियते तस्य प्रकाशनं करोति २। मृषोपदेशः कूटोपदेशो दीयते ३। स्वकीयस्त्रिया गुह्यप्रकाशनं ४। कूटलेखलिखनं ५। तथा कन्यागोभूम्यलीकानि एतानि पञ्च कूटानि सुधीर्वर्जयेत्–कन्यालीकं १।

चतुष्पदालीकं २। भूम्यलीकं ३। न्यासापहरणं ४। कूटसाक्षिभरणं ५। तृतीयमदत्तादानमणुव्रतं, तस्यापि पञ्चातिचाराः "तेनाहडप्पओगे" इत्यादि। तस्करानीतं वस्तु गृह्णाति १। तस्करस्य प्रयोगमीलनं २। दाणचोरीकरणं ३। कूटतौल्यमानमापकरणं ४। सरसविरसवस्तुनोर्मेलनं क्रियते इति पञ्चमोऽतिचारः ५। तुर्यं स्थूलमैथुनव्रतं, तस्यापि पञ्चातिचाराः "अप्परिग्गहियाइत्तरेत्यादि"। भाटकं दत्वा दास्यादिकं सेवते १। वेश्यादिगमनं करोति २। कामक्रीडां प्रचुरामत्यासक्तः करोति ३। अन्यजनानां विवाहकरणं विवाहमीलनं [च] ४। कामभोगे तीव्राभिलापरूपः पञ्चमोऽतिचारः ५। पञ्चमं परिग्रहपरिमाणं अणुव्रतं। तस्यापि पञ्चातिचाराः 'धणधन्नखित्तवत्थु" इत्यादि। धनधान्यप्रमाणातिक्रमः १। क्षेत्रवास्तुप्रमाणातिक्रमः २। रूप्यस्वर्णप्रमाणातिक्रमः ३। रूप्यप्रमाणातिक्रमः ४। द्विपदचतुष्पदप्रमाणातिक्रमः ५। अथ त्रीणि गुणव्रतानि। तत्र प्रथमं गुणव्रतं दिग्विरतिव्रतं। तस्य पञ्चातिचाराः "गमणस्स य परिमाणे" इत्यादि। ऊर्ध्वदिशि प्रमाणातिक्रमः १। अधोदिशि प्रमाणातिक्रमः २। तिर्यग्दिशि प्रमाणातिक्रमः ३। क्षेत्रवृध्धिः, कार्योत्पन्ने चैकां दिशं संक्षिप्यान्यदिशो वृद्धिं करोति इति तुर्योऽतिचारः ४। दिक्परिमाणं न स्मारयति ५। द्वितीयं गुणव्रतं भोगोपभोगाख्यं। तत्र सकृदेव भुज्यते यः स भोगः अन्नशृंगारादिकः, पुनः पुनर्भोग्य उपभोगोऽङ्गनादिकः। एतस्य व्रतस्य भोजनतः पञ्चातिचाराः "सचित्ते पडिबद्धे"। सचित्ताहारस्य भक्षणं २। सचित्तप्रतिबद्धस्य भक्षणं २। अग्निवारिणाल्पपाचितं तद्भक्षणं ३। उलकोंचिकापृथुकपर्पटिकाभक्षणं ४। तुच्छौषधिभक्षणं ५। कर्मतः पञ्चदशकानि तु कर्मादानानि पूर्वं व्याख्यातानि सन्ति। अनर्थदंडाख्यं तृतीयं गुणव्रतं। तस्य पञ्चातिचाराः "कंदप्पे कुक्कुइए"। कंदर्पवचनं १। भंडवच्छरीरे कुचेष्टां करोति जनानां हास्यमुत्पादयति २। असंबद्धं जल्पति ३। अधिकरणं करोति ४। भोगोपभोगवस्तुषु तीव्राभिलापः ५। अथ चत्वारि शिक्षाव्रतानि व्याख्यायंते।

प्रथमं शिक्षाव्रतं सामायिकव्रताख्यं । तस्यातीचारपञ्चकं " तिविहे दुप्पणिहाणे० " । मनसापि दुःप्रणिधानं आर्तध्यानं रौद्रध्यानं विचिन्तयति १। वचसा सावद्यं जल्पति २ । कायेन सावद्यं करोति अप्रमार्जितभूम्यामुपविशति ३ । अनुपस्थापना ४ । चपलचित्ततया सामायिकं करोति विकथां वा करोति ५ । द्वितीयं देशावकाशिकाख्यं शिक्षाव्रतं । तस्यातिचारपञ्चकं "आणवणे पेसवणे० " । आनयनं १, प्रेषणं २, शब्दं करोति ३, रूपं दर्शयति ४, पुद्गलोत्क्षेपं करोति ५। दिग्विरतिव्रतं यावज्जीवप्रमाणं, देशावकाशिकं तद्दिनवेलाप्रमाणं । तृतीयं पौषधोपवासाभिधं । तस्यापि पञ्चातीचारास्त्याज्याः " संथारुच्चारविही " इत्यादि । अप्रतिलेखितदुःप्रतिलेखितशय्यासंस्तारकं करोति १ । अप्रमार्जितदुःप्रमार्जितभूम्यामुपवेशनं शय्यासंस्तारकं करोति २। अप्रतिलेखितदुःप्रतिलेखितभूम्यां नीत्यादिपरिष्ठापनं करोति ३। पौषधं शुद्धमनसा न पालयति ४ । निद्राविकथादिकं करोति ५ । द्वादशमतिथिसंविभागं शिक्षाव्रतं । तस्य पञ्चातीचारा ज्ञातव्याः "सचित्तेनिक्खिवणे०" अदेयबुद्ध्या शुद्धयमानमाहारादिकमशुद्धं करोति १ । देयबुद्ध्याऽशुद्धयमानमाहारादिकं शुद्धं करोति २। अचित्तं वस्तु सचित्तवस्तुना समाच्छाद्य मुञ्चति ३ । साधौ गृहमागते विलंबेन दानं ददाति ४। मत्सरेण दानं ददातीति पञ्चमोऽतिचारः ५ । श्राद्धेनामुना प्रकारेण सम्यक्त्वमूलद्वादशव्रतानि आनंदकामदेववत् पालनीयानि । तान्यपि सिद्धिदायकानि भवन्ति । यतः—

सम्यक्त्वोदारतेजा नवनवफलदावर्तरूपव्रतालि–सिद्धान्तोक्तैकविंशत्यमलगुणगतिश्राद्धधर्मस्तुरंगः ।
प्रापय्यान्तं भवाद्रेर्नयति शिवपुरं कामदेवादिवत्त–न्मिथ्यात्वाधिनिशंकादिकहयहरतो यत्नतो रक्षणीयः ।१।

गोलकल्पस्य गृहस्थस्य व्रतपालनं दुष्करं। व्रतपालनाशक्तानां गृहस्थानां जिनपूजाकरणं निश्चयेन युक्तं। जिनपूजया
ति। यतः—

यान्ति दुष्टदुरितानि दूरतः, कुर्वते सपदि संपदः पदम्।
भूषयन्ति भुवनानि कीर्तयः, पूजया विहितया जगद्गुरोः ॥१॥

श्राद्धैः श्रीजिनपूजा कार्यैव। रावणेन जिनपूजया तीर्थंकरगोत्रं समुपार्जितं। तथाहि—

## अथ रावणकथानकम्।

रे लक्ष्मीनिवासप्रकरे सिंहसेनो भूपतिर्न्यायेन राज्यं करोति। सिंहवती राज्ञी तस्य नृपस्य भार्याऽस्ति। न्यायेन
। तस्मिन्नेव नगरे बहुधनकोटीश्वरः प्रतिष्ठावान् कनकश्रेष्ठी नाम व्यवहारी वसति। देशान्तरव्यापारं करोति। तस्य
म्ना भार्यास्ति। सा जिनधर्मे दृढाशया। तयोर्दंपत्योः परस्परं सुखमनुभवतोः पुत्रद्वयं जातं। तयोः
—नाम निर्ममे। बालत्वे पंडितपार्श्वे पठितौ च तौ पंडितौ जातौ। वृद्धस्तु सुविनीतो मिष्टवक्ता सर्वेषां
वल्लभः। लघुस्तु दुर्विनीतः कटुभाषी सर्वेषामनिष्टः। यतः—

कटुकस्नेहे मधुरं किं न भाषसे। मधुरं वद कल्याणि लोको हि मधुरप्रियः ॥१॥

लोकैस्तयोः सुविनीतो दुर्विनीत इति नाम कथितं। सर्वत्र तन्नाम्ना प्रसिद्धौ जातौ। एकदा कनकश्रेष्ठी नानाविधवस्तुभिः पञ्चशतशकटानि भृत्वा भार्यापुत्रयुतो बहुपरिवारपरिवृतः सिंहलद्वीपं प्रति प्रस्थितः। क्षेमेण पथि गच्छन् त्रिंशद्योजनमायातः। तत्रैकं महद्वनमायातं। तत्र श्रीऋषभजिनचैत्यं सप्रभावमस्ति। विविधवृक्षवाटिकापरिकलितं मनोहरं देवक्रीडासदृशं। तत्रैकाम्रवृक्षाधः कनकश्रेष्ठी पट्टगृहं कृत्वा स्थितः। क्रमेण सर्वोऽपि सार्थस्तत्र स्थितः। तत्र श्रेष्ठी भोजनानन्तरं सुष्वाप। क्रयाणकचिन्तापरिकलितोऽस्ति। तदा चैकं शुकयुग्मं श्वेतवर्णं रक्तचंचुचरणयुतं पक्षोपरि रक्तचिह्नयुक्तं बहुप्रेमपरिपूर्णं सहकारवृक्षोपर्युपविष्टं मनुष्यवाचोक्तवंतं शृणोति। तद्वाक्येन रञ्जितः क्रयाणकचिन्तां मुक्त्वा पीयूषरसवद्वाक्यं शृणोति स्म। तथाहि—शुको वदति—'हे प्रिये अयं कनकश्रेष्ठी बहुभाग्याधिकोऽस्ति'। शुकी वक्ति—"स्वामिन् किं भाग्यं? अधुना क्रयाणकवस्तूनां लाभो न भवति। कथं भाग्याधिकः?" पुनः शुको वक्ति—"हे प्रिये अयं कनकश्रेष्ठी जिनबिंबतीर्थप्रभावनां करिष्यति, तस्मान्महाभाग्याधिकः"। शुकी वदति—'किं तीर्थं स्थापयिष्यति?'। शुकः कथयति—'वल्लभे चिटकपर्वते बदरी नाम तीर्थं प्रभावयिष्यति'। ततः श्रेष्ठी तत्कर्णपीयूषोपमं वाक्यं श्रुत्वा चिन्तयति—'अत्र वने को वक्ति?'। ततः श्रेष्ठी पट्टगृहान्निर्गत्य एकान्तदृष्ट्या पश्यति तदा तत्कीरयुग्मं दृष्ट्वा चिन्तयति—'नूनमेष कीरो ज्ञानवान् अस्ति'। स विशेषं विलोकयन् शृणोति। पुनः कीरी प्राह—"भोः पक्षिराज कीदृशं तीर्थं शैलमयं रत्नमयं वा स्वर्णमयं वा काष्ठमयं वा करिष्यति?"। पुनरपि शुकः प्राह—"हे प्रिये अयं श्रेष्ठी स्पर्शग्रावमयं जिनबिंबं कारयिष्यति। तत्प्रभावेण महद्यशो भावीति"। तत्समये कनकश्रेष्ठिसमीपे

द्वौ सुतौ समेतौ किरयुग्मं पश्यतः । दुर्विनीतेनोक्तं—' अनेन बाणेनाहत्य कीरं पातयामि, अथवा पाशेन गृहीत्वा क्रीडार्थं पञ्जरे प्रक्षिप्यते ' । तच्छ्रुत्वा वृद्धभ्रात्रोक्तं—' मैवं वद, एनं पक्षिणं फलभक्षणविप्रतारणया गृह्णामि ' । तदा चैकवंशे शाड्वलद्राक्षालुंब्युपरि पाशयुतो बद्धः । तदा स शनैः शनैः सहकारवृक्षोपरि चटितुमारब्धः । कीरस्तं दृष्ट्वोवाच—" अयमावयोर्ग्रहणार्थं वृक्षोपरि चटन्नस्ति । परमावां न ग्रहीष्यति । कस्मात् ? वामाक्ष्णा काणकोऽस्ति । वामभागे पीणिकनागोऽस्ति द्रुमकोटरमध्ये, तं स न पश्यति । अहमपि वामभागे स्थितोऽस्मि । तेनावां न ग्रहीष्यति " । शुक्योक्तं—" त्वमेव बुद्धिविशारदोऽसि । तत्र गुणनिष्पन्नं नाम । परं तु स्वामिन्मम द्राक्षाया दोहदोऽस्ति । द्राक्षाभक्षणं करोमि । ममानीय समर्पय । येनेच्छां पूरयामि " । शुकेनोक्तं—' भद्रे द्राक्षालुंबिपार्श्वे पाशः स्थितोऽस्ति । तेन हेतुना कथं गृह्णामि ? ' । शुक्या प्रोक्तं—' चेत् द्राक्षा नानयसि तदा मे प्राणत्यागो भावीति ' । कीरेणोक्तं स्वस्था भव । एष शुक्राक्षो यदा कोटरासन्नः समेष्यति तदा नागस्तस्य श्वासं भक्षयिष्यति, तदा च मृतप्रायो भविष्यति । तदा तव दोहदं पूरयिष्यामि ' । तदा तद्वाक्यं श्रुत्वा सा मौनमाधाय स्थिता । क्षणानन्तरं स दुर्विनीतकुमारो वृक्षमारुरोह । पीणिकस्तस्य श्वासपानाय समागतः । तत्समये तस्य श्वासः पीणिकनागेन भक्षितः । स तत्रैव तरुशाखायामवलंब्य मृतवत्स्थितः । नागोऽपि मानुषविषप्रयोगेणाचेतनो जातः । सोऽपि तत्रैव स्थितः । उभयोरप्यचैतन्यं जातं । तत्समये कीर उड्डीय चञ्चुघातेन पाशं छित्वा द्राक्षां गृहीत्वा कीरीं ददाति इच्छां पूरयति । परस्परं महता प्रेम्णा चंचुः शिरउपरि कृता । शुकः सुखं गृह्णाति । शुकः कीरीमाह्लादयति । अथ श्रेष्ठी मुखमूर्ध्वीकृत्यांगजं निरीक्षते । सुतोऽचेतनरूपो दृष्टः । विरहव्याकुलो जातः । श्रेष्ठी विलपति । करुणस्वरेण बाढं रोदितुं लग्नः । अहो संसारे कृत्रिमस्नेहः । यतः—

हे संकर मा सज्जसि, अह सज्जसि मा देहि माणुसं जम्मं ।
अह जम्मं मा पिम्मं, अह पिम्मं मा वियोगं च ॥ १ ॥
हा हा हीउ वज्जघडियं, घडियं वज्जेण वज्जसारित्थं ।
वल्लहविओगकाले, जं न हुओ खंडखंडेहिं ॥ २ ॥
पाणीतणे वियोग, कादव जिम फाटे हियो ।
तिमहीज माणस होय, साचा नेह पतीजीए ॥ ३ ॥

ततः श्रेष्ठी बहु बहु विलपन् ऊर्ध्ववदनं कृत्वा विहंगमं वदति—

जह तुम्ह सुई वल्लही, तह अहिओ महपुत्त । सुह विलसो तुम्हे विहु, मह बहु दुक्ख ज मित्त ॥ १ ॥

इत्यादिबहुविलपनेन कीरी कीरं वक्ति—" येन नरेण मम द्राक्षादोहदो पूरितः तस्य महादुःखमस्ति । स्वामिन् तस्य सुतजीवनोपायं कथय । परोपकाररसिक उपकारं कुरु " । शुको जल्पति—" हे प्राणप्रिये शाड्वलनालिकेरत्वचाया नागस्य चेद् धूम्रं ददाति तदैतस्य धामः शरीरे प्रविशति । पुत्रोऽपि जीवति महरानन्तरं नागोऽपि जीवति । एवं जीवनोपायो नान्यः " । तच्छ्रुत्वा श्रेष्ठी शीघ्रं स्त्रोचारकान्नालिकेरत्वचां समानीय धूम्रं कृत्वा पुत्रं सचेतनं कृतवान् । तदा स पुत्रः सावधानीभूय तरोरुत्तरितः । श्रेष्ठी

वारं वारं पुत्रमालिंगति । सहर्षं पुनः पुनश्चुंबति । सुतेनोक्तं—' आम तताद्य केन कारणेन वारंवारं समालिंगनादिकं स्नेहं करोषि ? ' । श्रेष्ठिना सकलोऽपि पूर्वभूतवृत्तान्तः पुत्रस्य निवेदितः । तच्छ्रुत्वा पुनः पुनः सहर्षं स्नेहदृष्ट्या कीरं पश्यति । स्नेहेन कथयति–" भोः सत्त्वाधिक परोपकारकारक मम प्राणदातः त्वमेवोत्तमोऽसि, त्वमेव मम प्राणाधारः, त्वयैव मम पुनर्जन्म दत्तं । अथाधुना मे वाक्यं श्रूयतां, भवता स्वेच्छया मद्दत्तानि फलानि नित्यमेव भक्ष्यन्तां । अस्य वाक्यस्य निश्चयं कुरु, येनाहमनृणीभवामि" । तद्वाक्यं शुकेन प्रतिपन्नं । तदा स कुमारः प्रतिदिनं मनोज्ञफलानि द्राक्षादाडिमफलादीनि कीरभक्षणार्थं वृक्षोपरि शुभपात्रे निवेशयति । कीरयुग्मं भक्षयति । स्वेच्छया क्रीडति । श्रेष्ठयादिजनाः सर्वेऽपि प्रीणयन्ति । अन्यदा श्रेष्ठिना क्रयाणकमूल्यदर्शनार्थं सिंहलद्वीपे भृत्याः प्रेषिताः । श्रेष्ठी तु तत्रैव वने निवसितः । एकदा कनकश्रेष्ठी शरीरचिन्तानिवारणार्थं वारिभृतां ताम्रमयीं झारीं गृहीत्वा गतः । तत्र वनमध्ये चैकस्मिन् प्रदेशे कृष्णोपलशिला पतितास्ति । तदुपरि ताम्रभाजनं मुक्त्वोत्सर्गार्थं समुपविष्टः । तदा ताम्रभाजनं सुवर्णमयं जातं । तद्दृष्ट्वा श्रेष्ठी विस्मितः ।सहर्षवदनो जातः । तत्र पाषाणे साभिज्ञानं कृत्वा स्वोत्तारकमन्मुखं चलितः । तदा पथि लघुपुत्रो दुर्विनीतो संमुखो मिलितः । हस्ते नीतभांडं स्वर्णमयं दृष्ट्वा सुतः पृच्छति—' आम तात कस्येदं भांडं ? ' । श्रेष्ठी वदति–'न चात्मीयं' । तदा स पुत्रः पश्चाद्वलितः । स्वनागभांडं क गतं ? सर्वत्र विलोकयति । अनुचरः पृष्टः । स वक्ति—'श्रेष्ठी ताम्रपात्रं गृहीत्वोत्सर्गे गतः ' । तदा स शंकितः, ' हुं ज्ञातं, औषध्या नागपात्रं स्वर्णीकृतं । अहमपि गवेपयामि ' । अन्यत्ताम्रभाजनं गृहीत्वा स तत्र पदानुसारेण जगाम । स्वबुद्ध्या चिन्तितवान्—किं करोमि ? ' । तदा चैको नवीनतरुर्दृष्टः । तत्पत्रजिघ्राहयिषयोपानत्सहितः दृषदुपरि चटितः । द्रुमशाखामवलंब्य करेण पत्राणि गृह्णाति । तावता दृषदधिष्ठायकेन भूमौ पातितः । तस्य दश-

नत्तुष्टयं पतितं। विषण्णो वदनाग्रे करं दत्वा पश्चाद्वलितः। मित्रा दन्तपातकारणं पृष्टः स मौनमाधाय स्थितः। अन्यदा श्रेष्ठिना शुकस्योक्तं—'भोः शुकराज रहःस्थाने समागच्छ, तत्र किञ्चित्प्रष्टव्यमस्ति'। तदा शुकेनोक्तं—'ओम्'। तदा वनमध्ये द्वावपि गतौ। निर्व्यजने श्रेष्ठिनोक्तं—"भोः कीर पंडित बुद्धिविशारद त्वया पुरा यदुक्तं तत्सर्वं सत्यं जातं। स स्पर्शपाषाणो मया प्राप्तः। अथ कथं तस्योपलस्य प्रतिमां कारयामि ?"। शुको वक्ति—"त्वं मम पूर्वभवमित्रं, तस्मात्तव कथयामि। पुण्याधिक श्रूयतां। एनमुपलं गृहीत्वा प्रभाते सार्थयुतः प्रयाणं कुरु। दिनसप्तकानन्तरं इमामटवीमुल्लंघ्य स्थीयतां। अहमपि मत्प्रियः सार्धं समेष्यामि। पश्चादहं यथायुक्तं कथयिष्यामि"। ततः श्रेष्ठी तत्सम्यग् ज्ञात्वा प्रत्यूषे सार्थयुतश्चचाल। शुकोऽपि सार्धं जगाम। दिनसप्तकैरटवीं समुल्लंघ्य सार्थो विश्रमितः। तदान्यवासरे रहसि श्रेष्ठिना शुकः पृष्टः—'भोः शुकराज परमप्राणवल्लभ तवाज्ञा कृता। अथ किं कार्यं ?' स वक्ति—"एषा वल्ली दृश्यते। अस्याः प्रभावात्तव कार्यं भविष्यति। कथं ? अस्या वल्ल्याः पत्राणि गृहीत्वा पिंडीकृत्य नेत्रोपरि पट्टो बन्धनीयः। तत्प्रभावेण पतत्त्री विहंगमो भवति। पश्चादुड्डीय चटकपर्वते याति। तत्र शाल्मलिकनाम्ना प्रौढतरुरस्ति षड्रसास्वादफलः षड्वर्णपुष्पः। तत्पुष्पं च एकदेशे धवलं, पुनरेकदेशे रक्तं पुनरेकदेशे पीतं, पुनरेकदेशे नीलं, एकदेशे श्यामं मेघवर्णं च, मध्यभागे पञ्चवर्णं। ईदृशं पुष्पं तद्वृक्षगुच्छं तद्वृक्षकाष्ठं इत्यादि पञ्चांगं समानेयं। पश्चान्मयं निवेदयिष्यामि"। एतच्छुकमुखाच्छ्रुत्वा श्रेष्ठिना चिन्तितं—'सुमुखं पुत्रं प्रेषयामि'। पुत्रमाहूय भणति—'भो भद्रैतत्कार्यं [illegible] कुरु'। तेनोक्तं—'प्रमाणं'। स पक्षीभूय चलितः। शुको मार्गं दर्शयितुं कियद्भूमिं गतः। मार्गे गच्छतस्तस्य शुकः शिक्षां [illegible]—"भोः मान्त्रिक तत्र मार्गे गच्छतो यत्र पर्वते चिर्भटीगन्ध समायाति तत्र स्थीयतां। भूमावतीर्य नयनयोर्भेषजं छोट-

नीय । ततस्तत्तरोः पूर्वोक्तं तद्ग्राह्यं । पञ्चाङ्गं गृहीत्वा शीघ्रं समागम्यतां " । शिक्षां दत्त्वा कीरः पश्चाद्वलितः । पश्चात्स गरुडपक्षिरूपेणोड्डीय देवदत्तास्मिन् शैले पञ्चाशद्योजनमाने गतः । गन्धानुमानसाभिज्ञानेन तं तरुं जानाति स्म । ' स एव निश्चयेन तरुः ' । तत उत्तीर्य नेत्रयोर्भेषजं छोटयति । ततो नररूपं जातं । भेषजं गृह्णाति । ततश्चेतसि चिन्तयति—' केनोपायेनाथ स्वस्थाने व्रजामि ' । इति विचिन्त्य चिन्तां प्रपन्नः स्वमुखे निःश्वासं मुञ्चति । तत्समयेऽकस्मात्तत्र शुकयुग्मं समेतं । कुमारः सहर्षो जातः । शुकयुग्मं दृष्ट्वा महर्षेणोवाच—' एहि भोः कीरराज अत्रोपविश ' । कीरस्तत्रोपविष्टः । कीरेण पृष्टं—' त्वं कः ? कुतः समागतः ? कथय ' इति पृष्टे कुमारः सहर्षोऽवदत् । तेन कुमारेण यथास्थितः पूर्ववृत्तान्तः सकलोऽपि शुकाग्रे निवेदितः । तदा तेन शुकेनोक्तं—' स शुको मद् भ्राता । तच्छरीरे शुकीशरीरे च कुशलमस्ति ? ' । कुमारेणोक्तं—' तत्र तयोः कुशलमस्ति ' । शुकेनोक्तं—' त्वया निःश्वासः कथं मुक्तः ? ' । कुमारोऽवक्—' निःश्वासकारणं मे श्रूयतां, शुकवचनादत्राहमागतः, अथ कथं यास्यामि ? ' । तदाशु शुकी समुड्डीय फलमेकमानीय शुकं प्रति ददाति—स्वामिन्नेतत्फलं प्राघूर्णिकाय देहि ' । शुकेन तस्मै फलं दत्तं । कुमारेण गृहीत्वा पृष्टं—एतस्य फलस्य कोऽनुभावः ? ' । शुकोऽवक्—' भो बन्धो श्रूयतां, ग्रीवायां फलबन्धनात् प्रहरेणैकेन शतयोजनानि नभोमार्गे गम्यते, इदं फलप्रयोजनं ' । ततः पुनरपि शुकी वदति—' स्वामिन् अयं वैदेशिको नरोऽपाथेयः, किंचित् शंबलं दीयते ' । शुकः प्राह—' यथारुचि ' । ततः सा शुकी समुड्डीय गिरिकोटरे रहःस्थाने रत्नभूमिं गत्वा चिन्तामणिरत्नं समानयत् । कुमाराय समर्पितं । इदं चिन्तामणिरत्नं, एतस्यानुभावाचिन्तितं कार्यं भवति ' । इत्याकर्ण्य तत्फलं ग्रीवायां बध्वा शुकमुत्कलाप्य तत्स्थानाच्चलितः । जनकसमीपे गतः । तच्चिन्तामणिरत्नं तत्फलं च

पितुरग्रे मुक्तं । प्रभावः कथितः । पितुः प्रमोदोऽजनि । पित्रा रत्नप्रभावात्सर्वेषां सार्थजनानामशनपानखादिमस्वादिमभोजनैर्भोजनं कारितं वस्त्राणि दत्तानि सर्वेऽपि संतोषिताः । दानं दत्तं कदापि न निष्फलं । यतः—

दारिद्र्यं न तमीक्षते न भजते दौर्भाग्यमालिंगति, नाकीर्तिर्न पराभवोऽभिलषते न व्याधिरास्कन्दति ।
दैन्यं नाद्रियते दुनोति न दरः क्लिश्यन्ति नैवापदः, पात्रे या वितरत्यनर्थदलनं दानं निदानं श्रियाम् ॥१॥

तेन श्रेष्ठिना बहुद्रव्यव्ययः कृतः । चिन्तामणिरत्नप्रभावात् मनोवाञ्छितं कार्यं सिध्यति । प्रतिदिनं सार्थजनान् पोषयति । दिनैकानन्तरं श्रेष्ठी शुकराजमपृच्छत्—'भोः कीरराज परोपकाररसिक मम जिनप्रतिमाकरणोपायं कथय' । शुकोऽवोचत्—"श्रेष्ठिन् त्वं एकाग्रमनसा शृणु । अस्मिन् गिरौ कन्दरासमीपे श्वेतपलाशोऽस्ति । तत्काष्ठं समानीय नररूपं विधाय तत्कंठे फलं धार्यतां । तच्छिरसि चिन्तामणिरत्नं स्थाप्यं । तदा स काष्ठनरोऽधिष्ठायकप्रभावात्प्रतिमां घटिष्यति । अन्यकाष्ठान्यानीय काष्ठमयं गृहं कपाटसहितं कारय । तन्मध्ये तं स्पर्शपाषाणं नय । तत्र प्रतिमा कार्या । पश्चात्काष्ठनरस्य शाल्मलिकतरोः कुसुमं फलं (च) देहि । कुसुमफलरसाभ्यां प्रस्तरशिलायाः प्रतिमाया आकारः कार्यः । तस्मिन् प्रस्तरे लोहं न लगति, ततः शाल्मलिकतरकाष्ठेन प्रतिमा घटितव्या । तस्य वृक्षस्य मञ्जर्या प्रतिमाया ओपो भविष्यति । रहसि स्थाने प्रतिमा कार्या । तस्मिन् समये वादित्रनिर्घोषादिना नाटकं कार्यं । तत्प्रभावेण तव महान् भाग्योदयो भविष्यति" । श्रेष्ठी तच्छ्रुत्वा मुदितः सन् तथैव जिनप्रतिमा कारयामास । स श्रीपार्श्वनाथबिंबं निर्माय पूजाप्रभावनादिमहोत्सवं चकार । स्नात्रगीतनृत्यादिकं करोति । तत्प्रभावेण धरणेन्द्रपद्मावतीवैरोट्यादिदेवास्तस्य श्रेष्ठिनः सान्निध्यं कुर्वन्ति । उपलस्य खंडा यत्नेन स्थापिताः । तां प्रतिमां गृहीत्वा श्रेष्ठी

सिंहलद्वीपसन्मुखं चलितः । तदा शुकेनोक्तं—'अथाहं मदीयस्थाने व्रजामि'। तदा श्रेष्ठिनोक्तं—" शुकराज त्वं मम प्राणेभ्योऽपि वल्लभः । त्वया मम बहूपकारः कृतः । त्वं कः ? देवो विद्याधरो वा ? तत्र स्वरूपं वक्तव्यं । क्व तव स्थानकं ? तत्सत्यं ममाग्रे निवेदय "। तदा शुकेनोक्तं—' मदीयं स्वरूपं कियता कालेन केवली गुरुः कथयिष्यति ' । इत्युक्त्वा शुकः शुकीयुक्तः स्वकीयं देवरूपं कृत्वा स्वस्थाने देवलोके जगाम । तत्र देवः शाश्वतजिनप्रासादेऽष्टाहिकामहोत्सवं कृत्वा स्वकीये विमाने सुखभाग्भूत् । श्रेष्ठिनो मार्गे गच्छतः सिंहलद्वीपसंमुखं क्रयाणकमूल्यदर्शनार्थं ये नराः पूर्वं प्रेषिता अभूवन् तेऽभ्येयुः । तैरुक्तं—' स्वामिन् उत्सुकेन समागन्तव्यं क्रयाणकविक्रयेण बहुलाभो भविष्यति ' । इति श्रुत्वा मुदितः सन् अविच्छिन्नप्रयाणैः सिंहलद्वीपे गत्वा क्रयाणकविक्रयः कृतः । तत्र बहुद्रव्यप्राप्तिर्जाता । श्रेष्ठिनोपलखंडप्रभावात्तत्र बहुतरं हाटकं कृतं । पश्चाद्वलितः शतयोजनानन्तरं चटकपर्वतोऽस्ति । तत्र स्थित्वा कनकश्रेष्ठी स्वनाम्ना कनकपुरं नगरं वासयति । तत्र नवीनो दुर्गः कारितः नवीनावासाः कारिताः । तत्र निवसति । सार्थजनेनाऽपि तत्र निवासश्चक्रे । अन्या अपि पञ्चविंशतिग्रामा वासिताः । श्रेष्ठी तत्र नगरे महोत्तुंगतोरणं चतुरशीतिमंडपैरलंकृतं प्रासादं मनोहरं कारयति । तत्र महोत्सवपूर्वकं शुभमुहूर्ते सिद्धियोगे श्रीपार्श्वनाथबिंबं स्थापयामास । तत्र प्रतिदिनं स्नात्रादिकं कारयति । नाटकं कारयति ।

इतश्चैकदा वैताढ्याधिपतिर्मणिचूडविद्याधरेश्वरोऽष्टापदतीर्थे शाश्वतजिनयात्राकृते निर्गतः । नन्दीश्वरद्वीपे जिनान्नमस्कृत्य सिंहलद्वीपे समागतः । तत्रापि जिनमभिनम्य पश्चाद्वलितः । चटकपर्वते तद्ग्रामोपरि विमानेन गच्छतस्तस्य विमानं न चलति । तदा तेन विद्याधरनृपेण चिन्तितं—' केन हेतुना मदीयं विमानं न चलति ? '। तदा तेन प्रज्ञप्तीविद्याधिष्ठायिकायाः

पृष्टं—मातम विमानं कथं न चलति ? तदा तयोक्तं—'भो नृपात्र नवीनपार्श्वजिनबिंबवन्दनं विना कथं तव विमानं चलति ?' तदा तच्छ्रुत्वा विमानादुत्तीर्य जिनपूजनवन्दनकृतेऽध उत्तरितः। तदा पवित्रीभूय जिनपूजनं चक्रे। तस्यांगुलिकायां स्वर्णमुद्राऽस्ति। स्पर्शोपलजिनबिंबस्पर्शनात् मुद्रा षोडशवर्णिका जाता। तेन विमृष्टं—'इयं मुद्रा चतुर्दशवर्णिका षोडशवर्णमया जाता तज्जिनदलप्रभावः'। एवं विचार्य तां जिनप्रतिमां गृहीत्वा चलितः। तद्दृष्ट्वा जनाः सर्वे पृष्ठे धाविताः। युद्धमारब्धं। तत्समयेऽकस्मात्सिंहलाधीशो राजा रावणः समागतः। मासं यावद्युद्धं कृत्वा रावणेन विद्याधराः सर्वे त्रासिताः। रावणस्तज्जिनबिंबं लात्वा लंकायां जगाम। तत्र प्रासादे श्रीपार्श्वजिनभक्तिं पूजां नाटकादिकं प्रत्यहं करोति। पञ्चाशद्वर्षाणि जातानि। एकदा रावणः श्रीपार्श्वजिनाग्रे स्वयं नृत्यं करोति। मन्दोदरी गायति नृत्यति च। तत्समये रावणस्य करे वाद्यतंत्री त्रुटिता। रावणेन स्वकरात् स्नसा कर्षिता, तया तंत्री संधिता। भावान्नृत्यं न भग्नं। तत्र जिनपूजाभक्तिप्रभावाद्रावणेन तीर्थंकरगोत्रमुपार्जितं। जिनभक्तिप्रभावात् पद्मावतीवैरोट्याजितबलादिदेव्यो रावणस्य करपीडां निवारयन्ति। तस्यां निशायां प्रतिमाधिष्ठायकेन रावणस्य स्वप्नं दत्तं—'मां मत्स्थाने मुञ्च'। तदा रावणस्य बदरी नाम दासी अस्ति। सा त्वापन्नसत्त्वास्ति। गर्भस्य त्रयोविंशतिवर्षाणि जातानि सन्ति। रावणेन तस्यै प्रोक्तं—'एतद्बिंबं चटकपर्वते मुञ्च'। सा श्रीजिनबिंबं गृहीत्वा प्रासादे प्रतिमां संस्थाप्य प्रत्यहं जिनभक्तिं करोति। तत्प्रभावात्तस्याः सुतप्रसवोऽभवत्। तस्याभिधानं केदार इति दत्तं। स जन्मवैराग्यवान् जातः। यौवनं प्राप्तः। रावणेन तस्य केदारस्य भाग्योदयाच्चटकपर्वतस्य राज्यं दत्तं। पञ्चविंशतिग्रामाणामधीशो जातः। कनकश्रेष्ठी प्रधानो जातः। बहूनि पुण्यानि करोति। तदा श्रीरामचन्द्रेण रावणो विनाशितः। जिन-

भक्तिप्रभावात् केदारस्य राज्यं न गृहीतं । केदारस्य सुखमनुभवत एकदा केवली गुरुः समवासार्षीत् । कनकश्रेष्ठिकेदारराजौ गुरुवन्दनार्थं जग्मतुः । गुरुणा देशना दत्ता । धर्मं श्रुत्वा श्रेष्ठिना शुकस्वरूपं पृष्टं—' भगवन् स कः शुकः, येन मम प्रतिमाकरणे शिक्षा दत्ता ' । गुरुणा प्रोक्तं—" श्रूयतां, अयं तव प्राग्भवमित्रं । एकदा सौधर्मदेवलोके सौधर्मसभायां सौधर्मेन्द्राग्रे नाटकं जायमानमस्ति । तत्र भरतसंगीतोक्तपद्पञ्चाशत्कोटितालभेदे देवगंधार १ वंगाल २ श्रीराग ३ कौशिक ४ हिंदोल ५ दीपक ६ मधुमादन ७ शबाप ८ धोरण ९ सोहग १० अधरास ११ भाणवल्ली १२ ककुभा १३ सिद्धांगादिदेवरागैः षट्त्रिंशत्सहस्रमितैश्च भद्रावलीकनाट्यं १ सूर्यावलिकनाट्यं २ चन्द्रसूर्योद्गमनं नाट्यं ३ तारकोद्गमननाट्यं ४ हयनाट्यं ५ गजनाट्यं ६ पद्मावतीनाट्यं ७ वल्लीनाट्यं ८ तरुनाट्यं ९ कुसुमनाट्यादिदेवनाटकैर्नाटकं जायमानमस्ति । तदा तस्येन्द्रस्य मित्रद्वयं समुपविष्टमस्ति अमिततेजा अनन्ततेजाश्च । अन्येऽपि देवास्तत्रोपविष्टाः नाटकं विलोकयन्ति । तदा तस्यां सभायां अञ्जूनाम्नी इन्द्रस्य पट्टराज्ञी नाट्यविलोकनार्थं समुपविष्टास्ति । तदा तस्य मित्रद्वयस्याञ्जूपट्टराज्ञ्या सह दृष्टिरागो जातः । तदाऽञ्जूः ताभ्यां सह क्रीडाकरणार्थं वाटिकायां गता । ते त्रयोऽपि तत्र क्रीडां कुर्वन्ति । तद्दुश्चेष्टितमिन्द्रेण ज्ञातं । इन्द्रोऽपि तत्र जग्मिवान् । तद् दुश्चेष्टितं दृष्ट्वा चुकोप । इन्द्रेणोक्तं—" आः पापिष्ठौ, युवाभ्यां किमिदमसमञ्जसं समारब्धं ? युवयोः किं वदामि । शापं ददामि शुकरूपेण मनुष्यलोकेऽङ्गनया सह स्थातव्यं " । देवाभ्यामुक्तं—' स्वामिन् कदा शापानुग्रहः ? ' । सुरेन्द्रेणोक्तं—" यदा युवयोर्मित्रं देवश्च्युत्वा कनकश्रेष्ठिनाम्ना व्यवहारी अवतरति, स यदा सर्वज्ञपार्श्वनाथस्य प्रतिमां कारयित्वा पूजयिष्यति, तदा युवयोः शापमोक्षः " । तौ तथेति कृत्वा मनुष्यलोकं शुकरूपेणागतौ । ततोऽष्टचत्वारिंशत्सहस्रवर्षैः स देवश्च्युत्वा त्वं समुत्पन्नः । तेन शुकेन तव प्रतिमा-

करणशिक्षा दत्ता । अयं सकलोऽप्युपायः शुकविलसित एव । पश्चाच्छुकः सभार्यः समित्रो नन्दीश्वरद्वीपे गत्वा शुकरूपं त्यक्त्वा देवरूपं कृत्वा नन्दीश्वरद्वीपेऽष्टाह्निकामहोत्सवं कृत्वा प्रथमदेवलोके स्वकीयामृतसागरनाम्नि विमाने गत्वा सुखभागभूत् " । तदा कनकश्रेष्ठी गुरूपदिष्टा देशना श्रुत्वा वैराग्यमापन्नः । केदारनृपोऽपि वैराग्यमापन्नः । द्वावपि दीक्षां जगृहतुः । निरतिचार चारित्र प्रतिपालयति । पर्यन्तेऽनशनं विधाय पञ्चमे ब्रह्मदेवलोके दशार्णवायुषौ सुरौ जातौ । ततो महविदेहे सेत्स्यतः । तत्तीर्थमधुना परशासनैर्गृहीतं । इति बदरीकेदारचरित्र ॥

भो भो भव्यजना यथा रावणेन जिनपूजया तीथकरगोत्रमुपार्जितं तथाऽन्येऽपि जीवाः स्वर्गापर्गपदवी प्राप्नुयन्ति । सा पूजा त्रिविधाऽस्ति पुष्पाक्षतस्तोत्ररूपा । तत्रादौ पुष्पपूजा जीवाना विशिष्टफलहेतवे भवति । यतः—

देशाधीशो ग्राममेकं ददाति, ग्रामाधीशो क्षेत्रमेकं ददाति ।
क्षेत्राधीशः सेतिकां संप्रदत्ते, सार्वस्तुष्टः स्वं पदं संददाति ॥ १ ॥

पुष्पपूजनया वयरसेनकुमारस्य राज्यपदवी जाता । तथाहि—

## ॥ अथ वयरसेनकथा ॥

अस्त्यत्र भरतक्षेत्रे सर्वत्र प्रसिद्धं ऋषभाख्य पुर । समृद्ध्या राजितं प्रासादश्रेण्या भ्राजितमस्ति । तत्र गुणसुन्दरो नाम्ना

नृपोऽस्ति । न्याये राज्यं पालयति । तत्र परमश्रद्धावान् श्रेष्ठाचारविचारवान् अभयंकरश्रेष्ठी वसति । स जिनभक्तः परमश्राद्धः । कुशलमती तस्य प्रियाऽस्ति । साप्यहर्निशं देवपूजादानसामायिकप्रतिक्रमणादीन्यगण्यानि पुण्यानि करोति । तस्य श्रेष्ठिनः कर्मकरौ द्वौ स्तः । तावपि भद्रप्रकृती । एकस्तु गृहकर्माणि करोति । अपरस्तु गाश्चारयति । अन्यदा तौ मिथो वार्ता चक्राते–" आवयोः स्वामी श्रेष्ठी धन्यः । यस्य प्राचीनसुकृतादिदानीं सुखसमृद्धिः, भाविभवे त्वैहिकपुण्यप्रभावात्सुगतिर्भविष्यति । आवां तु दरिद्रौ अकृतपुण्यकौ । नचेहलोकसुखं न च परकोकसुखं । यतः—

अदत्तभावाच्च भवेद्दरिद्रं, दरिद्रभावात्प्रकरोति पापम् ।
पापप्रभावान्नरके व्रजन्ति, पुनरेव पापी पुनरेव दुःखी ॥ १ ॥

मनुष्यभवं निष्फलं निर्गमयावः "। इति चिन्तयन्तौ तौ ज्ञात्वा श्रेष्ठिना चिन्तितं—' इमौ धर्मयोग्यौ '। एकदा चातुर्मासिकदिने श्रेष्ठी तयोर्जगाद—' अहो युवां जिनेशितुः पूजनाय मत्सार्थे समागच्छतं ' । तौ श्रेष्ठिना सह चैत्ये गतौ । श्रेष्ठी शुद्धभावः पवित्रवस्त्रः श्रीजिनेन्द्रपूजां करोति । तदा श्रेष्ठिना प्रोक्तं—' युवामपि जिनपूजनं कुरुतम् ' । तदा तावूचतुः—'यस्य पुष्पाणि तस्यैव फलं भवेत्, अस्माकं वेष्टिरेव '। तदा श्रेष्ठिनोक्तं—' युवयोस्तु स्वल्पमपि किञ्चिदस्ति न वा ' । तयोर्मध्ये गोपालो जगाद —' मम वस्त्रांचले पञ्च कपर्दिकाः सन्ति ' । श्रेष्ठिनोक्तं—' वत्स त्वं पञ्चकपर्दिकानां पुष्पाणि गृहाण, जिनेन्द्रं भावेन पूजय '। स शुद्धभावेन जिनेन्द्रं पूजयति । द्वितीयेन चिन्तितं—' एतस्यैतावन्मात्रमप्यस्ति, मम पार्श्वे तु किंचिदपि नास्ति '। इति

चिन्तयन् रोदितुं लग्नः। ततो जिनेन्द्रं पूजयित्वा श्रेष्ठी ताभ्यां युक्तो गुरुवन्दनाय समेतः। तत्र देशनां शृणोति। प्रत्याख्यानकरं नरमद्राक्षीत्। गुरोः पार्श्वे पृष्टं—'एतेन किं कृतं?' गुरुरप्याह—'भो भद्र अद्यामुना पौष्यं तपः कृतं। अयं च तस्यांगीकारः'। स इत्याकर्ण्य उपवासं चकार। श्रेष्ठिना सह गृहं गतः। ततो भोजनवेलायां स्थालिकायां भक्तं परिवेषय्य द्वारे संस्थितो मनसि दध्यौ—"यदि मत्पुण्यैः कोऽपि मुनीन्द्रः समभ्येति तदाहं तस्मै ददामि। येन कारणेन श्रेष्ठिगृहे कार्यं कृत्वा मयान्नमर्जितं"। तस्येति चिन्तयतोऽकस्मान्मुनिः समागतः। स सर्वं तद्भोज्यं मुनये ददौ। श्रेष्ठी तद्वीक्ष्य मुदितः। श्रेष्ठी तस्यान्यभोजनं पर्यवेपयत्। तेन कर्मकरेणोक्तं—'अद्याहमुपोषितः'। श्रेष्ठिनोक्तं—'पूर्वं कथं गृहीतं?'। सोऽवादीत्—'तात मया गृहकार्यं कृत्वा भोजनं मदीयं कृत्वा मुनये दत्तं'। ततः श्रेष्ठी सविशेषं तुष्टः। तयोर्वात्सल्यं कुरुते। चैत्ये तौ प्रत्यहं यातः। मुनिवन्दनं कुरुते। नमस्कारगुणनं विदधाते। धर्मस्य सद्दहणां कुरुते॥

इतश्च शूरसेनाख्यो नृपतिः कलिंगदेशाधिपतिः दायादापहृतराज्यश्रीः कुरुदेशं गतः। तत्र हस्तिनापुराधीशस्याचलसमीपे गतः। तेन पञ्चाशद्ग्रामा दत्ताः। स सुकरपुराह्वे ग्रामे निवसति। तस्य विजयादेवी भार्यास्ति। तौ कर्मकरौ विपद्य तस्याः कुक्षावागतौ। दानदातृको जीवः प्रथमोऽमरसेनाख्योऽभूत्। जिनार्चको जीवः पश्चात् वयरसेनाभिधोऽनुजोऽभूत्। प्राच्यपुण्यानुभावतो रूपविद्यादिगुणौघौ स्वल्पवासरैर्ववृधाते। राजहंसाविव सर्वेषां हर्षं वितेनतुः। तयोरुपरि जयाख्या सपत्नी जननी द्वेषं वहते। यतः—

तिरथयराण पहुत्तं नेहो वलदेववासुदेवाणं। साचक्रीणं वयरं तिन्निवि गुरुआइ गुरुआइ ॥१॥

एकदा तयोः पिता शूरसेनो नृप एकस्मिन् ग्रामे कार्यार्थं गतः। तौ गेटिकाकन्दूकक्रीडां कुर्वाणौ स्तः। तदाऽपरमाता जया गृहस्योच्चमालके चोपविष्टास्ति। तौ रममाणौ सा पश्यति। इतश्च कन्दुकः समुच्छलन्नपरमातुर्मालके पतितः। तया गृहीतः। वयरसेनोऽनुजः तं कन्दुकं याचितुं जयासमीपे गतः। तदा तया कन्दर्पावतारं कुमारं दृष्ट्वा तदग्रे कामार्थं हावभावः कृतः। वयरसेनेनोक्तं—'मातरेतदसमञ्जसं'। स बाढं तस्याः पादयोर्निपत्य कन्दुकं गृहीत्वा भ्रातुरग्रे समागत्य मातुर्वचनं यथास्थितं कथितवान्। क्रीडां कृत्वा भोजनाय प्रवृत्तौ। सा जया स्वकीयवस्त्रस्य खंडं खंडं कृत्वेर्ष्यया मञ्चे सुप्ता। इतश्च नृपः कार्यं कृत्वा स्वग्रामे समागतः। राज्ञीगृहे समागात्। सा राज्ञी वल्लभत्वेन पृष्टा। साऽवक्—"स्वामिन् तव पुत्राभ्यामहं क्षोभिता। मया स्वशक्त्या शीलं कष्टेन रक्षितं। मम गात्रं नखैर्वल्लूरितं। मदीयांबराणि बलेन स्फाटितानि विलोकयतु"। राजा तदलीकवाक्यैर्भृशं रुष्टः। 'एतौ दुष्टौ पापिष्ठौ धृष्टौ मारयामि'। इति विचिन्त्य चंडमातंगमाकार्य भूपतिरादिदेश—'भोः चंड ग्रामबाह्यस्थयोः क्रीडां कुर्वाणयोः पुत्रयोः शीर्षे छित्वा समानय'। मातंगोऽचिन्तयत्—'बहुगुणशालिनोस्तयोः कुमारयोः पिता कथं कुपितः। अधुना प्रस्तावोचितं ब्रुवे। इति विचार्योवाच—'देवादेशः प्रमाणमेव'। ततः स कुमारपार्श्वे गत्वा सर्वं कथयामास। ताभ्यां भणितं—'भो भद्र तातसमीहितं शीघ्रमेव कुरु'। ततः पुनर्निपादेन सगद्गदं तौ प्रार्थितौ—'युवां मयि प्रसद्य शीघ्रं देशान्तरं वेगेन यातं'। कुमारावूचतुः—'नृपस्त्वां सकुटुंबं हनिष्यति'। पुनश्चांडालेनोक्तं—'उपायेन स्वं रक्षिष्यामि, युवाभ्यां मा विलंब्यतां'। तेनेत्युक्तौ पादचारेणैकां

दिशं प्रति चलितौ। निषादोऽपि मृन्मये शीर्षे कृत्वा लाक्षारंगेण विलिप्य सायं राज्ञः पुरो गतः। तुरगौ समर्प्य मस्तके दूरेण दर्शयित्वा जगाद | 'अवधार्यतां स्वाम्यादेशः कृतः'। नृपोऽप्याह—'ग्रामाद्बहिर्गर्ताहिते शीर्षे कुरु'। इत्युक्ते मातंगेनोक्तं—'तथैव करोमि'। मातंगः स्वगृहे गतः। सा दुष्टा राज्ञी तुष्टाऽतीव हृष्टा। चिन्तितं च—'शुभं कृतं एतौ व्यापादितौ'॥

अथ तौ राजपुत्रौ साहसिकौ अविच्छिन्नप्रयाणकैः कियद्भिर्वासरैः क्रमेण महाटव्यां प्राप्तौ। सा महाटवी कीदृश्यस्ति ?

एकतः शालहिंतालप्रियालसरला द्रुमाः। एकतो नागपुन्नागलविंगागरुचन्दनाः ॥ १ ॥

क्वचिच्चिंचाम्रजंबीराः कपित्थाश्वत्थजंतवः क्वचिद्बकुलकंकोलपाटलाशोकचंपकाः ॥ २ ॥

क्वचिन्न्यग्रोधमन्दारपिचुमन्दहरीतकाः। चंपकाशोकपारिष्कप्रमुखाः सन्ति वृक्षकाः ॥ ३ ॥

यत्रेभमहिषव्याघ्रसिंहचित्रकशूकराः भूतप्रेतपिशाचाश्च यत्र क्रीडन्ति स्वेच्छया ॥ ४ ॥

अथ तौ कुमारौ तस्मिन् वने समागतौ। तत्र क्षुधासंतापहारिणः सहकारतरोस्तले विशश्रमतुः। तत्रामलैर्नदीजलैः सहकारस्य मरफलैश्च प्राणवृत्तिं तौ चक्राते। तयोस्तत्रस्थयोर्गलद्द्युतिर्भानुरस्तं प्राप। भो जना विलोकयन्तु दिनान्ते सूर्यस्यापीदृशी दशा भवति, अन्यस्य तु का कथा ?। आरक्तवती संध्यापि प्रक्षीणा रात्रिः प्रकटीबभूव। अपरांबुधौ तु सूर्यो निःशेषं ममज्ज। सरोवरेषु पद्मश्रेणिः संकोचं प्राप। विमलात्ममित्रनाशे यतः कारणाद् दुःखं जायते। नभसि तारकाः प्रादुर्बभूवुः। सर्वत्र तमसः प्रसरो जातः। तौ कुमारौ तत्रैव सहकारतले निशायां स्थितौ। अथ तस्मिन् समये वयरसेनोऽनुजभ्राता ज्येष्ठसहोदरममरसेनमपृच्छद्—

'भो भ्रातः तातरोपस्य कारणं न ज्ञायते'। ज्येष्ठोऽवादीत्—" वत्स न जानामि तातरोपस्य कारणं, परंतु मनसेति ज्ञायते इदमपरमातुर्विजृंभितं "। लघुर्बभाण—'ततोपि किमलीकैर्वाक्यैः प्रत्येति'। पुनर्ज्येष्ठोऽप्यूचे—" वत्स मुग्धस्त्वं, महिला कूटमन्दिरं अलीकमपि जल्पति, रागांधबुद्धयः पुमांसः स्त्रीवचनं कूटं सत्यं मन्यन्ते। गंगावालुकाया मानं वार्धेर्जलमानं महागिरेस्तोलनं मतिमन्तो विजानन्ति। परं तु महिलायाः कूटपारं न जानन्ति। तथावयोरुपकारिणी जाता, तया सकलेयं मही दर्शिता "। एनां वार्तां तयोः प्रकुर्वाणयोरमरसेनस्य निद्रा समागता। वयरसेनस्तु पुनः पुनः वामदक्षिणवीक्षणं कुर्वन् जागर्ति। अत्रान्तरे कीर एकआम्रवृक्षे स्थितः कृपयार्द्रमनाः स्पष्टं निजप्रियां भणति स्म—' हे प्रिये इमावुभौ नरौ योग्यौ स्थितौ, एतयोः किमप्यातिथ्यं क्रियते'। कान्तया भणितः—" नाथ त्वया शुभं कथितं। सुकूटपर्वतगूढगह्वरे निजविद्याभिषिक्तबीजौ सहकारौ विद्याधरैरारोपितौ। आवयोः शृण्वतोस्तैस्तयोर्माहात्म्यं कथितं एकस्य फलं यो भक्षयति तस्य राज्यं सप्तमे दिने स्यात् एवं द्वितीयाम्रतरोः फलबीजं यस्योदरे तिष्ठति तन्मुखात्प्रातर्गेहूपे दीनारशतपञ्चकं पतति। हे कान्त त्वयाप्याकर्णितं तद्वचः। आवां चैकैकं फलमानीयानयोर्दद्वः। परोपकारकरणेऽरतारः श्लाघ्य एव। यतः—

त एव दिवसाः श्लाघ्या यत्रोपक्रियते परः। शेषास्तु निष्फला ज्ञेया ध्रुवं मूढत्वहारिताः ॥ १ ॥<br>
आदित्याय तमः स्पष्टं मेघाय ग्रीष्मशोषता। मार्गश्रमस्तु वृक्षाय श्रेष्ठाः परोपकारिणः ॥ २ ॥<br>
न सरोवर जल पिये, न तरुवर फल खाय। दातारांको षट्टीयो, पर उपकारे थाय ॥ ३ ॥ "

शुकेन शुक्या अग्रे प्रोक्तं—' प्रिये त्वयाऽहमधुना साधु स्मारितः ' । इत्युदित्वा तौ सुकूटपर्वते गतौ । तत्सर्वं वयरसेनोऽश्रौषीत् । तौ पक्षिणौ सहकारफलद्वयं पर्वतादानीय वयरसेनाग्रे मुमुचतुः । तद्वचनात्तयोः फलयोर्भेदं ज्ञात्वा फलद्वयं गृहीत्वा कटौ न्यधात् । स मनसि दध्यौ—' किं सत्यमसत्यं वा ? । स्वयमेव ज्ञास्यते ' । अथ वयरसेनो निशार्धे ज्येष्ठं जागरयित्वा निद्रायाः सुखं गृह्णाति । सूर्योदये तावुभौ ततः स्थानात्प्रस्थितौ । मार्गे सरः समायातं । तत्र मुखशुद्धिं चक्रतुः । वयरसेनः फलप्रभावमकथयन् ज्येष्ठभ्रातुः राज्यकरं फलं ददौ । स्वयं चान्यत्फलं भक्षयामास । पुनरग्रे चलितौ । द्वितीयेऽह्नि प्रातः प्रच्छन्नीभूय गंडूषं करोति । फलप्रभावात् पुरस्ताद्दीनारशतपञ्चकं पतितं । ततो ज्येष्ठबन्धुना सह वयरसेनो भोजनतांबूलादिना स्वेच्छया सुखमनुभवति । ज्येष्ठेन पृष्टं—' तव द्रव्यं कुतः ? ' । स ऊचे—' भांडागारान्मया सार्थे गृहीतं ' । क्रमेण तौ सप्तमे दिने काञ्चनपुरासन्नवने गतौ श्रान्तौ । तदैकस्य तरोर्मूलेऽग्रजः सुष्वाप । यतः—

श्रान्तानामलसानां च निद्रा हि परमं सुखम् । अतः परं सुखं नास्ति संसारे च जगत्त्रये ॥ १ ॥

वयरसेनः पुरमध्ये भोजनादिसामग्रीग्रहणार्थं गतः । तस्मिन् समये तत्र पुरेऽपुत्रो राजा शूलयोगान्मृतः । ततो हस्त्यश्वकलशच्छत्रचामरलक्षणवस्तुपञ्चकं देवाधिष्ठितं पुरे बंभ्रमीति । राज्यधरं नरमन्वेषयन् बहिर्गत्वाऽमरसेनस्य कुमारस्य सहसा कलशो ढालितः गजहयाभ्यां हेषितं, गजेन स्वशुंडया मस्तकोपरि च्छत्रं विस्तृतं, चामराभ्यां च वीजितः । तदाऽमरसेनो दिव्यवेषधरो गजस्कन्धारूढो मंत्रिसामन्तनागरैः प्रणम्याभिनन्दितः जयजयारावं शृण्वन् पुरे प्रविश्य नीत्या राज्यं करोति । वयरसेनोऽपि तस्य शुद्धिं लब्ध्वा मनसि दध्यौ—" चेज्ज्येष्ठभ्रात्रा ममागमनं न प्रतीक्षितं, तदाहं तस्य पार्श्वे किं यामि । यतः—

वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालये पुष्पफलांबुभोजनम् ।
तृणेषु शय्या वरजीर्णवल्कलं न बन्धुमध्ये धनहीनजीवितम् ॥ १ ॥

अतः कारणात्तत्राहं भ्रातुः सकाशे न यामि । यदि यामि तदा सोदरत्वात् पञ्चसप्तादिकं ग्रामं ददाति । तद्युगान्तेऽपि नाहं गृह्णामि । तेन गृहीतेन किं ? यतः—

पौरुषाकारयुक्तस्य नीचवृत्तौ कुतो रतिः । मत्तेभकुंभनिर्भेदी केसरी तृणमत्ति किम् ॥ १ ॥
दीनमुक्त्वा परं नत्वा लघ्वीकृत्य यदर्ज्यते । जीवितेन तु किं तेन जीवितान्मरणं वरम् ॥ २ ॥

ममापि राज्यमस्ति " । इति विचिन्त्य तत्र भुक्त्वा नगरमध्ये स्थित्वा मगधाख्यपण्यस्त्रिया गृहे धनस्येच्छया विलसति । नृपेणापि नगरे भृशमन्वेषितः, परं कुत्रापि न दृष्टः । ततो राजा राज्यचिन्ताव्यग्रोऽभूत् । वयरसेनोऽपि त्यागभोगपरायणः सन् गीतद्यूतेष्टगोष्ठ्यादिविनोदैर्दिनान्यतिवाहयति । कदा कदापि काव्यशास्त्रकथादिभिर्दिनानि निर्गमयति । नाट्यसंगीतगानादिकैश्च दिनानि यान्ति ।

गीतशास्त्रविनोदैश्च कालो गच्छति धीमताम् । व्यसनेन हि मूर्खाणां निद्रया कलहेन च ॥ १ ॥

एवं सुखेन कालो याति । अन्यदा कुट्टिनी मगधां प्रोचे—" हे वत्से तव प्रियो महादानेश्वरो महाभोगी, पृथिव्यां कोऽपीदृशो नान्योऽस्ति । किं च व्यवसायं राजसेवादिकं किं(कं) चिन्न करोति । कदापि हि अर्थव्ययं भूयांसं करोति । तद् द्रव्यं कुतः ?

तत्पृच्छयतां " । मगधाप्याह—" हे मातः प्रश्नेनानेन किं? अस्माकं द्रव्येण कार्यं। तद्द्रव्यं चैष बहु बहु पूरयन्नस्ति। प्रश्नेन किं? "। अक्कया प्रोक्तं—' तत्तु सत्यं, तथापि प्रष्टव्यं '। अन्यदा मगधा निशायां वयरसेनं पप्रच्छ—' स्वामिन् राज्यसेवावाणिज्यादिकं विना युष्माकं द्रव्यप्राप्तिः कुतः? '। वयरसेनो मुग्धत्वात् सहकारफलस्य प्रभावमचीकथत्। यतः—

प्रायेण पुंसः सरलस्वभावो रंडास्तु कौटिल्यगुणप्रयुक्ताः।
यवाः प्रकीर्णा न भवन्ति शालयस्तथैव नीचः प्रकृतिं न मुञ्चति ॥ १ ॥

कुट्टिनी तज्ज्ञात्वा सहकारफलजिघृक्षया मदनफललपनश्रीपरिवेषणभक्षणाद्वमनमकारयत्। तत्फलबीजं वमनमध्याद् गृहीत्वाऽक्कया भक्षितं, तज्जठरे गतं वृथाऽभूत्। अथ वयरसेनस्तत्फलाभावात् कुतो ददाति? ततः स आर्तध्यानं करोति। अनयाऽक्कया पापिण्या कपटं कृतं। एकदा ' अद्य देवीपूजां करिष्यामोऽतः कारणात्त्वया बहिर्गन्तव्यं, ' अनेन मिषेण गृहाद्बहिः कर्षितः। पराभूत इव स्वमनादरं वीक्ष्य बहिर्ययौ। अत्याकुलितश्चित्ते चिन्तयति—" सर्वं समीहितं द्रव्येण भवति। द्रव्याभावादहं किं करोमि? क गच्छामि? । पुनः पुनश्चिन्तयति—

यस्यास्ति वित्तं स नरः कुलीनः स पंडितः स श्रुतिमान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ १ ॥

अथ दैवमेव शरणं । यतः—

भग्नाशस्य करंडपीडिततनोर्ग्लानेन्द्रियस्य क्षुधा कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा स्वस्थस्तिष्ठति दैवमेव शरणं वृद्धौ क्षये चाकुलम् ॥ १ ॥'

एवमेव दिनं नीत्वा विलक्षवदनो भ्रमन् संध्यायां शून्यमना नगराद्बहिर्निर्गतः । तत्र श्मशाने शून्यकुले निशायामवसत् । यत्र घूकाः पूत्कारं कुर्वन्ति, शिवाः फेत्कारं कुर्वन्ति, श्वापदाः स्वेच्छया क्रीडन्ति, राक्षसाः क्रीडन्ति, वेतालाः प्रेता अट्टाट्टहासं कुर्वन्ति, एवंविधे श्मशाने निर्भयं तस्थौ । घनघातैः किं वज्रं भिद्यते ? । उन्निद्रो निश्चलस्तस्थौ । यतः—

उद्यमे नास्ति दारिद्र्यं जपतो नास्ति पातकम् । मौनेन कलहो नास्ति नास्ति जागरणाद्भयम् ॥ १ ॥

अथ निशीथसमये तत्र चौराश्चत्वार आगताः । शुभवस्तुकृते परस्परं विवदन्ति । कुमारेण चौरसंज्ञा कृता । तस्करैस्तं तस्करं ज्ञात्वा तत्राहूय स पुरस्तादुपवेशितः । तेषामग्रे कुमार आह—'भो बान्धवाः कथं विवदथ यूयं ?' चौरैः प्रोक्तं—"भो बान्धव विवादस्य कारणं शृणु, पादुकादंडकंथारूपवस्तुत्रयं वर्तते । वयं चत्वारः । तस्माद्विभागोऽपि कर्तुं न शक्यते" । कुमारोऽप्याह—'असारवस्तुनि को वादः ?' । तैरूचे—'मुग्धस्त्वं, न वेत्सि, अमूल्यं वस्तुत्रयमस्ति' । कुमारेणोक्तं—'तर्हि कथ्यतां' । एकेनोक्तं "बन्धो शृणु, अत्र प्रेतवने केनचित्सिद्धपुरुषेण महाविद्या साधिता । सा महाविद्या षड्भिर्मासैः सिद्धा । सा विद्याधिष्ठायिका एतानि वस्तूनि ददौ । अस्माभिर्हरयित्वा तं सिद्धपुरुषं व्यापाद्य वस्तूनि गृहीत्वाऽत्र देवकुले वयं प्राप्ताः । अस्याः कंथायाः प्रस्फो-

टयमानायाः प्रतिदिनं दीनारशतपञ्चकं पतति, दंडप्रभावात्संग्रामे जयो भवति, पादुकयोः पाद्योर्न्यस्तयोः सतोः नभोमार्गेण चिन्तितास्पदे गम्यते "। तच्छ्रुत्वा कुमारो हृष्टः स्माह—" भवद्भिरधृतिर्नो कार्या, अहमधुनैव भवतां विवादं निर्धारयिष्यामि। यूयं चतुर्दिक्षु क्षणमेकं दूरे गत्वा तिष्ठत । यदाहं विचार्य समाकारयामि तदा यूयमागच्छत "। तैस्तथा कृतं। कुमारः कंथां स्कन्धे निधाय करे दंडं धृत्वा पादयोः पादुके कृत्वा पुरान्तर्ययौ। विलक्षवदनाश्चौरास्तत्राययुः। तमदृष्ट्वा विलक्षा निजास्पदं ययुः । भाग्यवतां पुंसां सर्वत्रापि संपदः। वयरसेनो मित्रस्यैकस्य विश्वाससद्मनो गृहे वस्तूनि संगोप्य नगरे लीलया विचरति। प्रतिदिनं कन्थां प्रस्फोट्य पञ्चशतदीनारैर्दिव्यवस्त्रादिसामग्रीं कृत्वा द्यूतकारैः सह क्रीडति, गीतगानं कारयति, दानानि ददाति, दोगुन्दुकदेववल्लीलां करोति। अथ तत्तादृशं स्वरूपं चेटिकामुखान्निशम्य कुट्टिनी मगधायाः सितं वेषं कारयित्वा कुमारस्यान्तिके गत्वेदमब्रवीत्—" वत्स त्वं कार्यवशाद्बहिः प्रेषितः। निजमन्दिरं कस्मान्नागतः? तद्दिनान्मम पुत्री मगधा रुष्टा मया सह न जल्पति, भोजनं न करोति, त्वद्विरहेण स्नानविलेपनादिकं न करोति, श्वेतवेषाद्यवस्थया महाकष्टं जीवति। त्वं त्वेवंविधलीलया वर्तसे। बहु किं कथ्यते? कुलोचितं कुरु "। इति तस्या मायावचः श्रुत्वा नृपांगजो दध्यौ—' अनया रंडया भूयो ममोपरि कूटं मंडितं। किं त्वेतस्या विश्वासं न करोमि '। इति विमृश्य तां नत्वाऽवदत्—" मातः सर्वं त्वयोदितं सत्यं । तव दुहितुरिदं सर्वं घटते। आदिश्यतां, अथाहं किं करोमि? " सा जगौ—' शीघ्रं गृहमागम्यतां '। कुमारस्तत्रैव गत्वा तथैव स्थितः, तथैव विलसति, तथैव वित्तं ददाति, लीलया दिनान्यतिवाहयति। पुनरेवाक्कया वित्तागमप्रश्नार्थं मगधा प्रेरिता। मगधयोक्तं—' हे पापे त्वं लुब्धासि, नाहं जानामि, त्वं स्वयमेव पृच्छ '। एकदा वृद्धया स्वयमेव पृष्टं । नृपांगजो व्याजहार—"इदमप्रकाश्यं, कस्या-

प्यग्रे न कथ्यते, परं तवाग्रे कथ्यते। विद्याधिष्ठितं मम पादुकाद्वयं वर्तते। तदारूढः खमुत्पत्येन्द्रभांडागाराद्वांछितार्थं समानये"। पापाधमा सेति श्रुत्वा मनसि दध्यौ—'तमुपायं करोमि येन पादुकाद्वयं मम करे चटति'। अन्येद्युर्मायया मन्दीभूय सा जीर्णमञ्चकेऽपतत्। मुधा शूलपीडया कूजितं करोति। कुमारेण वृद्धा मान्द्यकारणं पृष्टा। सा मांद्यहेतुमुवाच—'वत्स तव किं कथ्यते? निजांगेनैव सह्यते। मौनमेव वरं'। पुनः कुमारेण निर्बन्धेन पृष्टा सा जगाद—"हे वत्स तर्हि श्रूयतां, त्वं परदुःखेन दुःखितः परोपकाररसिकोऽसि। यदा त्वं गृहाद् गतस्तदा मया वार्धिमध्ये गतांकस्य कामदेवस्य पूजाद्युपयाचितमभूत्। तद्दुष्करं मया न जातं तस्मात्कामदेवो मां पीडयति। तवाग्रे प्रकाशितं"। 'एनां पापां जलधौ क्षिपामि' इति विचिन्त्य कुमारोऽवदत्—'न हि मे दुष्करं, शीघ्रं चल्यतां'। तयोक्तं—'साधु साधु'। अथ कुमारस्तां स्कन्धमारोप्य हृष्टः पादयोः क्षिप्तपादुकः सहसोत्प्लुत्य समुद्रमध्ये कामदेवचैत्येऽपतत्। तत्र गन्धाकया प्रोक्तं—'वत्साहं द्वारे स्थितास्मि, त्वमादौ काममर्चय'। स द्वारे पादुके मुक्त्वा चैत्यमध्ये प्रविष्टवान्। तदा साऽक्का शीघ्रं पादुके पादयोः क्षिप्त्वा स्वस्थानं ययौ। वयरसेनोऽपि तज्ज्ञात्वा भृशं दुःखितो ह्यचिन्तयत्—'अहं धूर्तोऽपि वञ्चितोऽस्मि। अथाहं निराधारः। भवतु, यद्भाव्यं तद् भविष्यति। चिन्तया किं? यतः—

यो मे गर्भगतस्यापि वित्तं कल्पितवान् पयः। शेषवृत्तिविधानेऽपि किं वा सुप्तोऽथवा मृतः ॥ १ ॥

किंच—

चंचल चित्त म करसि चिन्ता, चिन्तनहार करे सब चिन्ता।

मुचुकुन्दादितरवो विकसन्ति। तत्र सर्वत्र कुमारः कुसुमामोदैर्दीर्घिकांभोऽवगाहनैः सत्फलप्राशनैश्च वासरान् गमयामास। एकदा कुमारेण चिन्तितं—"एता वाटिका मनोहराः सन्ति। अथ पश्चिमपार्श्वे चैत्यपृष्ठौ वाटिकाऽस्ति तां विलोकयामि"। इति संचिन्त्य तत्र गच्छति, वाटिकां विलोकयति, एकस्य तरोः कुसुमं जिघ्रति स्म। तत्तरुकुसुमामोदप्रभावात्सहसा रासभोऽजनि। तत्र सर्वत्र पूत्कुर्वन् भ्रमति। इतश्च पञ्चदशग्रामैस्तीर्थयात्रां कृत्वा विद्याधरः समागात्। तेन खेचरेण दृष्टः। बहु निर्भर्त्सान्यतरोः कुसुममाघ्रापितः। ततः स भूयो मनुष्यरूपं प्राप्य तस्य खेचरस्य पादयोर्निपत्य क्षमयामास। तदा खेचरेण प्रोक्तं—'वद, त्वां कस्मिन् स्थाने मुञ्चामि ?'। कुमार ऊचे—'स्वामिन्ममेदं कुसुमद्वयं दत्वा काञ्चनपुरे मुञ्च'। तदा खेचरेण तद्रासभकरणमनुष्यकरणकुसुमद्वयं दत्वा महसा गगनमार्गेण काञ्चनपुरे मुक्तः। तथैव तत्रैव विलसति। अक्का च तं पुनर्वीक्ष्य विस्मिता चकिता। ततः साऽक्का जानुकूर्परयोः पट्टान् बद्ध्वा यष्टिकां करे कृत्वा शनैः शनैस्तस्य समीपं ययौ। कुमारो गाढामर्षमुक्तो जगाद—'किमिदं मातः'। सा रुदन्तीदमब्रवीत्—'वत्स त्वन्निमित्तं मया कष्टं प्राप्तं। परं तवागमात्सर्वं शुभं जातं'। कुमारेणोक्तं—'तत्कथं ?'। अक्कयोक्तं—"किं कथ्यते ? कामस्य भवने यदा त्वं प्रविष्टस्तदा कोऽपि दुष्टो विद्याधरस्तत्रैत्य तव पादुकाद्वयं गृहीत्वा गतः। अहं तस्यांशुके विलग्ना। दैवादत्रागताहं तेनोच्छाल्य प्रपातिता। पश्य ममांगोपांगानि भग्नानि। कस्य कथ्यते ? स्वयमेव सह्यते। तवागमने मयं समीहितं जातं"। इत्युक्त्वा स गृहे आनीतः। तथैव विलसति। पुनश्चावसरे तया पृष्टः—'तवात्र समागमनं कथं जातं ? वित्तागमः कुतः ?'। कुमारेणोक्तं—"श्रूयतां, मया कामदेवस्तत्राराधितः तेन तत्र तोषाद्बहु धनं दत्तं, अत्राहं मुक्तः"। पुनस्तयोक्तं—'अन्यत् किंचिदस्ति'?। स जगौ—"दिव्यमेकमौषधमस्ति, तेनाघ्रातेन वृद्धस्यापि सद्यो नवयौवनं स्यात्"।

तया वार्तया साश्चर्या जाता साऽवदत्—' यद्येवं वत्स तदा मे वपुषो नवं वयः कुरु '। कुमारोऽवादीत्—' युष्मन्निमित्तं मया महौपधं समानीतमस्ति, तत्सर्वं सुन्दरं करिष्ये '। तयोक्तं—'अधुनैव कुरु '। कुमारः सद्यः कंथादंडं समानीय तस्या नासिकाग्रे कुसुमं दधौ। सा कुसुमघ्राणेन सहसा रासभी जाता। कंठे कंथां समारोप्य करे दंडं धृत्वा तां कुट्टयन् पुरमध्ये निर्ययौ। तदा मगधा स्वगृहे स्थिताऽवदत्—' सुन्दरं कृतं, अस्या अतिलोभजं फलं दर्शितं '। शेषस्तु गणिकावर्गः पूत्कुर्वन् नृपमन्दिरे गत्वा न्यवेदयत्—" स्वामिंस्त्वयि राज्यं कुर्वति सति धूर्तेनैकेनौषधेनास्मत्कुटुंबवृद्धा स्त्री सहसा रासभी कृता "। राज्ञापि हसितं। ता ऊचुः—'स्वामिंस्त्वमपि हास्यं कुरुषे तदाऽस्माकं का गतिः?'। राज्ञा शीघ्रं तलारक्षः प्रेषितः। तेनागत्य प्रोक्तं—'अरे अस्माकं पुरे कथमसमञ्जसं कुरुषे?'। तदा कुमारः कुपितोऽब्रवीत्—' अरे यस्य बलेन त्वमागतोऽसि तस्य शीघ्रं कथय '। ततस्तलारक्षो रुष्टः शरादिभिः प्रजहार। दंडप्रभावान्न लगति प्रहारः। कुमारो दंडमुल्लालयन् संमुखं चलितः स नंष्ट्वा नृपान्तिके ययौ। तदा [illegible]हितानेकसुभटास्तीव्रतरायुधाः समागताः। अन्येऽपि मंत्रिसामन्ता विनोदार्थमागताः। तेन दंडो भ्रामितः। चक्रवद्दंडेन भ्राम्यता [illegible] हताः। अथ भूपालः कौतुकात् सपरिच्छदः समागात्। तदा वयरसेनो नृपं दृष्ट्वा विशेषेण खरीं ताडयामास। सा च [illegible]। [illegible] लोकाः हास्यं कुर्वन्ति स्म—'अहो सैन्यद्वयं शोभते, नृपो गजारूढो धूर्तस्तु खरीमारूढः कीदृशं शोभते '। तदा [illegible] खरीं ताडयन् संमुखं चलन्नृपेणोपलक्षितः। तदा गजात्सहसोत्तीर्य नृपेणालिंगितः। भूपतिर्बभाषे—' भो वत्स किमि[illegible]'। [illegible]सेनो वृत्तान्तं कथयित्वा खरीं स्थाणौ बद्ध्वा स्वयं गजारूढो राज्ञा सह पुरं प्राविशत्। अथ लोकस्तां तथाविधां [illegible]—

"अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् । अतिलोभाभिभूतात्मा कुट्टिनी रासभी कृता ॥१॥"

अथ वयरसेनेन नृपस्य निर्बन्धात्सा अक्का पुण्यमाघ्राप्य मानुषी कृता, पादुके आदाय मुक्ता । महीभुजा वयरसेनः स्वराज्ये युवराजपदे स्थापितः । इन्द्रोपेन्द्राविव तौ रेजतुः । अथ निजं पितरं तत्रानाय्योचतुः—'तात सुखं तिष्ठ, इदं राज्यं भुंक्ष्व, अस्माकं कार्यमादिश' । ततो मातुः पादौ प्रणेमतुः । अपरमातुः प्रोक्तं—'इदं राज्यं त्वत्प्रसादात्प्राप्तं' । इत्युक्त्वाऽपरमातापि पूजिता, निजकश्मलं च त्याजिता । स मातंगोऽपि स्वजातावधिपः कृतः । तौ सहकुटुंबं राज्यसुखं अनुभवतः । अन्यदा तौ गवाक्षस्थौ पुरश्रियं वीक्षमाणौ युगमात्रान्तरदत्तदृष्टिमव्यग्रमानसं महानुभावं मलमलिनगात्रं पवित्रचारित्रपात्रं भिक्षार्थं मार्गे भ्रमन्तं मुनिमेकमपश्यतां । तं मुनिं दृष्ट्वा ताभ्यां चिन्तितं—'ईदृशं रूपमावाभ्यां क्वापि दृष्टमस्ति' इति चिन्तयतोस्तयोः शुभध्यानवशाज्जातिस्मरणमुत्पन्नं । तं मुनिं भूरिविभूत्या वन्दितुं गतौ । तं नमस्कृत्य ता[illegible] [illegible] तद्देशनां शृणुतः । मुनीन्द्रोऽपि विशिष्टेनावधिना तयोः प्राग्भवं ज्ञात्वावदत्—"राजंस्त्वया पूर्वभवे

प्राप्ति[illegible], अथ मो[illegible]

प्रपेदाते । ततो मुनीश्वरं नत्वा निजगृहं गत्वा तौ धर्मपरायणावभूतां । महीं भव्यजिनप्रासादप्रतिमामंडितां कारयित्वा नवनवर्द्धिभिः रथयात्राद्युत्सवं कारयित्वा साधर्मिकाणां वात्सल्यं च कारयित्वा क्रमेण स्वायुः परिपाल्य पर्यन्ते व्रतमादाय पञ्चमे ब्रह्मदेवलोके गतौ । क्रमेण महाविदेहे सिद्धावुभावपि ।

॥ इति दाने जिनार्चनेऽमरसेनवयरसेनाख्यानम् ॥

अधुनाऽक्षतपूजायां शुकराजस्याख्यानमुच्यते—

तथाहि—अस्त्यत्र भरते नानारामाभिरामं श्रीपुरं नगरं सुन्दरं । तत्र बहिरुद्याने स्वर्गप्रासादसन्निभः श्रीआदीनाथप्रासादोऽस्ति । तत्र प्रासादशिखरोपरि चञ्चलध्वजच्छलाज्जनानाह्वयते । उत्प्रेक्षते—शिखरे कलशोऽप्येवं कथयन्नास्ति—" तेजसा कृत्वा एकोऽयमेव स्वामी संसारतारकः सर्वज्ञोऽस्ति, भो लोका एनं भजध्वं, अथ जिनो यानपात्ररूपो भवसागरतारकस्तस्मादेनं सेवन्तां । तत्र प्रासादे श्रीऋषभदेवनमस्कारकरणार्थं बहवो जनाः समभियन्ति । तस्य प्रासादस्याग्रे महानेकः सहकारद्रुमोऽस्ति । तत्रैकं शुकयुगं स्नेहानुबद्धं वसति । एकदा शुक्या शुकाग्रे प्रोक्तं—" हे प्राणनाथ मम दोहदोऽस्ति । त्वया शालिक्षेत्रादेकं शालिशीर्षकं समानीय मम दीयतां " । शुकेनोक्तं—" कान्ते इदं क्षेत्रं श्रीकान्तराज्ञः । अत्र यस्तेषां शीर्षं गृह्णाति तस्य शीर्षं ध्रुवं याति " । शुक्या प्रोक्तं—' हे प्रिय त्वत्तः कोऽपि कातरो नास्ति, यः प्रियायां म्रियमाणायां स्वप्राणलोभेनोपेक्षते ' । इति श्रुत्वा बाढं लज्जितः जीवितनिःस्पृहो भूत्वा शालिक्षेत्रे गत्वा शालिशीर्षकं समानिन्ये । तया शुक्या स्वदोहदः पूरितः । एवं प्रतिदिनं राजनराणां रक्षतामपि भार्यादेशेन शुकः सोद्यमः शालिशीर्षकमानयति अन्योऽन्यं भक्षयति । अन्यदा श्रीकान्तभूपतिस्तस्मिन् शालिक्षेत्रे समा-

गतः। शालिक्षेत्रं सर्वत्र विलोकयति । एकस्मिन् पार्श्वे पक्षिभिर्विध्वस्तं प्रेक्ष्य ते शालिरक्षकाः पृष्टाः—' इदं शालिक्षेत्रं पक्षिभिः कथं विध्वस्तं ? कथं न रक्षितं '। त ऊचुः—' स्वामिन्नेकः शुकोऽस्माकं रक्षतामपि चौरवच्छालिशीर्षकं गृहीत्वा नंष्ट्वा प्रयाति '। नृपेणोक्तं—' अथ पाशेन तं धृत्वा शीघ्रं ममान्तिके समानयत, तं चौरवन्निगृह्णामि '। इत्युक्त्वा नृपो गतः । अथान्यदिवसे पाशेन शुकं धृत्वा बद्ध्वा च शालिरक्षकनरैर्नृपान्तिके नीतः। तदा पृष्ठे लग्ना शुकी अश्रुपूर्णाऽधावत्। दयितेन सह सुदुःखा नृपमन्दिरे प्राप्ता । शालिरक्षकेणास्थानस्थितो नृपो विज्ञप्तः—' स्वामिन्नेष शालिमलिम्लुचः शुक आनीतः '। तं दृष्ट्वा राजा कुपितो यावन्निजासिना शुकं हन्ति तावच्छुकी पत्युरन्तरे सहसैव पतिताब्रवीच—" राजन्मामेव मारय, परं मम जीवितदायिनं दयितं मुञ्च, येन स्वजीवितं तृणतुल्यं मत्वा मम शालिशीर्षस्य दोहदः पूरितः "। तदा नृपेण हसित्वा प्रोक्तं—' भोः कीर तव लोकविश्रुतं पांडित्यं क्व गतं ? प्रियाकार्ये स्वजीवितं कथं त्यजसि ? '। शुकी जगाद—" पितृमातृधनादिकं दूरेऽस्तु, राजन् कान्तानुरागेण नरः प्राणानपि त्यजेत् । तथा च हे राजन् त्वया श्रीदेवीराज्याः कृते जीवितव्यं कथं त्यक्तमभूत् । हे प्रभो तदा कीरस्य को दोषः ? "। तच्छ्रुत्वा नृपो विस्मितः चिन्तयति—" एषा पक्षिणी मदीयवृत्तान्तं कथं जानाति ? '। नृपोऽप्राक्षीत्—'भद्रे त्वं कथं जानासि ? मम कौतुकमस्ति, तत्सर्वं कथय '। शुकी प्रोवाच—" राजन् शृणु, तव राज्ये पुरैका परिव्राजिकाऽभूत् । सा महामायाविनी क्षुद्रा क्षुद्रप्रयोगनिपुणा मूलमंत्रतंत्रेषु विदुरा नगरेऽस्मिन् वसति । एकदा तव भार्यया श्रीदेवीराज्या तस्यै प्रोक्तं—' मातरहं नृपस्य भार्या, नृपस्य तु बहुभार्याः सन्ति । कर्मवशेनाहं दुर्भगा । मम गृहे नृपो नायाति । तस्मात्कारणाद् भगवति प्रसीद, यथाहं पतिवल्लभा भवामि । मयि जीवन्त्यां पतिर्जीवति मयि मृतायां च म्रियते तथा कुरु '। परिव्राजिकया भणितं—

'नृपयोषितां धिग्जन्म। सपत्नीशते वासः। पुत्रस्यापि दर्शनं न भवति। स्वेच्छया गमनागमनं पितृगृहेऽपि न भवति। कुपात्रदानेन नृपयोषितो जायन्ते। वत्से त्वमिमामौषधीं गृहाण। भर्तुः खाने पाने देया। तव भर्ता वशीभविष्यति'। राज्ञी प्राह—'नृपस्य मम गृहे प्रवेश एव नास्ति, मम दर्शनं कुतः, भगवति तस्यौषधीं कथं ददामि ?'। सोवाच—'यद्येव तर्हि भद्रे त्वं मत्समीपे मंत्रं गृहीत्वा चैकमनसा तं साधय। तव सौभाग्यं भविष्यति, पतिवल्लभापि भविष्यसि'। इत्युदित्वा शुभमुहूर्ते परिव्राजिका तस्या मंत्रं ददौ। राज्ञ्यापि पूजां विधाय विधिपूर्वकं मंत्रो गृहीतः। सा राज्ञी परमादरान्मंत्रं जपति। दिनत्रयानन्तरं नृपेण प्रतीहारी प्रेषिता। सा प्रतीहारी तामवदत्—'भद्रे नृपस्त्वामावासमन्दिरे समाह्वयति। सर्वथैवागन्तव्यं'। अथासौ कृतस्नानविलेपना कृतशृंगारा च राजलोकसमन्विता करिणीस्कन्धमारुह्य नृपावासे प्राप्ता। राज्ञा सा दत्तसन्माना पट्टराज्ञी कृता। सा महाराज्ञी बभूव। राज्ये यत्कृत्यपरा मनोऽभीष्टसौख्यं भुञ्जाना तुष्टाऽभीष्टफलं ददाति रुष्टा मूलं निकृन्तति। पहुवासरा जाताः। अथान्यदिवसे सा परिव्राजिका राज्ञीगृहे समागता। परिव्राजिकया राज्ञी पृष्टा—'वत्से तव मनोरथाः पूर्णाः सिद्धाः ?'। साऽवदत्—'मातस्तव प्रसादेन सर्वं समीहितं जातं। तथापि मे मनो दोलायते। यदि नृपो मयि जीवन्त्यां जीवति मयि मृतायां म्रियते तदाहं निविडस्नेहं जानामि'। परिव्राजिकया प्रोक्तं—'वत्से यद्येवं तव मनो दोलायते तदाऽनया मूलिकया नासिकायां नस्यं गृहाण। त्वं जीवन्त्यपि गतजीवेव लक्ष्यसे। द्वितीयामूलिकयाहं तव नस्यं दत्वा समाधिं करिष्यामि'। राज्योक्तं—'मातरेवं करिष्यामि'। परिव्राजिकया मूलिका दत्ता। परिव्राजिका तु स्वस्थाने जगाम। अथ राज्ञी मूलिकया नासिकायां नस्यमादाय गतजीवेव निश्चेष्टाऽस्मात्पतिता। तदा नृपेण राज्ञी निश्चेष्टकाष्ठा दृष्टा। राजलोकेऽत्याक्रन्दरवः समुदच्छलत्। हाहाकारो जातः।

तदा नृपादेशेन बहवो वैद्या मांत्रिकाश्च मिलिताः। तैर्मृतेति ज्ञात्वा त्यक्ता। 'अस्या वह्निसंस्कारो युक्तः' इति तेऽभाषन्त। नृपेणापि भणितं—'अनया सह ममाप्यग्निसंस्कारः कार्यः। अनया विनाहं जीवितुं न शक्तः'। मंत्रिणः सामन्ता लोकाश्च शोकाकुला ऊचुः—'तव विश्वाधारस्येदृशं कर्तुमयुक्तं'। सदुःखं नृपोऽप्याह—'स्नेहस्य किं द्वयी गतिः? मा विलंब्यतां। मम क्षणोऽप्यब्दसमो व्रजति। निश्चयेन चन्दनकाष्ठैश्चिता रच्यताम्'। इति भणित्वा नृपो राज्ञ्या सह स्वमन्दिरान्निर्ययौ। दीप्ततूर्यरणोच्चैर्नारीनरसमूहे रुदन् नृपः प्रेतवनं प्राप्तः। तत्र दानं ददाति। यावच्चितामारोहति राज्ञीयुतः तावत्तपस्विनी दूरतो व्रजन्ती तत्रायाता। तयोक्तं—'राजन् मा साहसं कुरु'। राज्ञा कथितं—'पूज्ये अनया सह मम जीवितं'। तयोक्तं—'यद्येवं तर्हि क्षणं विलंबस्व। तव प्रियां लोकसमक्षं जीवयामि'। नृपस्तद्वचनं निशम्य हर्षं प्राप्य जगाद—'भगवति प्रसीद, तवोदितममोघं भूयात् दयिताया जीवितदानेनाहमपि जीवितः'। राज्ञेति कथिते तया तपस्विन्या संजीविन्यौषध्या नासिकाग्राणे नस्यो दत्तः, तत्प्रभावेण राज्ञी जीविता। तन्निरीक्ष्य नृपादिजनः सर्वोऽपि हर्षं प्राप्तः। जयजयारवो जातः। तूर्यनिर्घोषगीतगाननाटकानि जातानि। तदा सर्वांगाभरणैस्तस्याः पादौ पूजयित्वा नृपोऽवदत्—'हे आर्ये पूज्ये यत्त्वं समीहसे तत्त्वं मार्गय'। तयोक्तं—'भो राजन्मम किमपि कार्यं नास्ति। त्वत्पुरे भिक्षाग्रहणेन मम सन्तोषः। यतः—

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते, शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
भिक्षाशनैर्मुनिवरा गमयन्ति कालं, सन्तोष एव पुरुषे परमं निधानम्॥ १ ॥'

ततः करिवरस्कन्धमारुह्य नृपः कान्तया सह स्वभवनं गतः। राजा तस्यै स्वामिन्यै अपूर्वां मनोहरां मठिकां कारयामास भार्या तत्र सुखेन कालक्षेपं कृत्वायुःक्षये मृत्वाचंण्याननशाच्छुकी जाता। साहं तवान्तिके समायाता। त्वदीयराज्ञ्या दर्शनेनाधुना मम जातिस्मृतिरभूत्। मयेदं चरितं तवाग्रे कथितं "। तस्याः शुक्या इदं वचनं निशम्य रुदन्ती राज्ञी वदति—'पूज्ये त्वं कथं पक्षिणी जाता?'। तयोक्तं—"भो भद्रे मा खिद्य स्वकर्मवशाज्जन्तोः सुखं दुखं वा भवत्येव। हे राजन् विषयव्याप्ता नरा नारीणां किंकरीभावं कुर्वन्ति"। तदाकर्ण्य नृपः प्रीतः कीरीं प्रत्यवक्—"भद्रे त्वया सर्वं सत्यं कथितं। अहं तुष्टोऽस्मि। मार्गय यत्त्, तत्त्वयाहं ददामि"। शुकी प्राह—"राजन्ममाभीष्टो निजप्रियः, तदस्मै जीवितं देहि, अन्येन केनचित्कार्यं नास्ति'। राज्ञी प्राह—'स्वामिन् प्राणनाथ अस्या भर्ता भोजनं च दीयतां'। नृपेण भणितं—'हे शुकि यथास्थानं व्रज। एष ते पतिर्मुक्तः'। ततो राज्ञा शालिपालः समादिष्टः—'अनयोर्नित्यं शालितंडुलाः पुञ्जीकृत्य देयाः'। महाप्रसाद इति गदित्वोड्डीय कीरयुग्मं सहकारे गतं। कियता कालेन सा संपूर्णदोहदा शुकी निजनीडेऽण्डकद्वयं प्रसूता। तस्मिंश्च समये तस्याः शुक्याः सपत्नी तस्मिन्नेव तरौ पृथक्शाखायां पृथग्नीडेऽण्डकमेकं प्रसूता। साऽन्यदा चूणिहेतोर्गता। तदा प्रथमया मत्सरेण तदीयमंडमन्यत्र क्वापि मुक्तं। अपगम्यागता निजांडं तत्र नेक्षते। सा दुःखतप्ता भूमौ लुठति। तां विलपन्तीं दृष्ट्वा पश्चात्तापं कृत्वा प्रथमा शुकी तत्रांडकं मुमोच। सा कीरी भूमौ लुठित्वा यावद् द्रुमे आरोहति तावत्तदंडं निजं सुधासिक्तेव पश्यति। आद्यया कीर्या तन्निमित्तं दारुणं कर्म पद्धं। पश्चात्तापाद्बहुकर्म क्षयं नीतं। परं त्वेकभवभोग्यं कर्म तस्थौ। ततस्तदंडयुगलाच्छुकीशुकद्वयं संजातं। तद्युगलद्वयं पितृभ्यां सह वनगह्वरे क्रीडां करोति। शालिक्षेत्रात्तंडुलान् चंच्वादाय नित्यं कीरमिथुनं भक्षयति।

अन्यदा ज्ञानवान् चारणश्रमणो मुनिः श्रीमदादिदेवप्रासादे समागत्य श्रीजिनेन्द्रं नमस्कृत्यास्तवीत्—

" जय त्रिभुवनाधीश जय संसारपारग । जयानन्तसुखागार जय ज्ञानमहोदधे ॥ १ ॥

इत्याद्युदारस्तवं कृत्वा जिनं वन्दित्वा मुनिः शुद्धभूभागे भूमिं प्रमार्ज्य निविष्टः । तदा नरेन्द्रोऽपि जिनं प्रपूज्य मुनिमभिवन्द्य शुद्धभावेनोपविश्यापृच्छत्—' भगवन् पूजाफलं वाच्य ' । मुनिरुवाच—" राजन्नखंडतंडुलाक्षतैः पुञ्जत्रयं नरा जिनस्याग्रे कुर्वाणा अक्षतं सुखं प्राप्नुवन्ति " । इत्थं मुनिवचः श्रुत्वा जना अक्षतपूजासमुद्यता बभूवुः । तदक्षतपूजाफलं श्रुत्वा शुकी शुकं प्रत्युवाच—" आवामपि जिनं तंडुलानां पुञ्जत्रयेण पूजयावः, यथाऽचिरेणैव कालेन सिद्धिसुखं भवेत् " । एवमुदित्वा जिनस्याग्रे ताभ्यां पुञ्जत्रयं क्रियते । अपत्ययुगलमपि ताभ्यां शिक्षितं । जिनाग्रे चत्वारोऽपि पक्षिणः प्रतिदिनं शुद्धभावेनाक्षतपूजां कुर्वन्ति । क्रमेण ते चत्वारोऽपि आयुःक्षये देवलोके गताः । तत्र स्वर्गसुखं भुक्त्वा देवलोकाच्च्युत्वा हेमपुरनगरे शुकजीवो हेमप्रभ इति नाम्ना नृपोऽजायत । शुकीजीवोऽपि देवलोकाच्च्युत्वा तस्यैव हेमप्रभनृपस्य जयसुन्दरीति नाम्ना भार्या समजायत । द्वितीयापि शुकी संसारे भ्रान्त्वा तस्य हेमप्रभनृपस्य द्वितीया राज्ञी रतिसुन्दरीति नाम्ना समुदपद्यत । तस्य राज्ञोऽन्या अपि पञ्चशतमिता भार्या बभूवुः । परन्तु पूर्वसंस्कारात् द्वाभ्यां सहातीव स्नेहः । एकदा तस्य नृपस्य महादाहज्वरोऽभूद् । चन्दनैः सिच्यमानोऽपि व्याकुलो भवति, भूमौ लुठति, क्रमेण सप्त रोगाः प्रादुर्बभूवुः । तद्यथा—

अंगभंगभ्रमस्फोटिस्फोटशोफशिरोव्यथा । दाहश्च ज्वरमुख्यानि सप्तापि स्फुटतामगुः ॥ १ ॥

आयुर्वेदविशारदा वैद्या विविधास्तत्राययुः। नानाशास्त्राण्यूचिरे। नृपस्य शरीरचेष्टां विलोकयन्ति। तैर्नाडिका विलोकिता। मूत्रपरीक्षापि कृता। तैर्विविधा उपायाः कृताः। मंत्रतंत्राद्युपाया अपि कृताः। सर्वेऽपि निष्फला जाताः। विविधा ग्रहपूजाऽपि कृता। दानान्यपि दत्तानि। परं कैरप्युपायैर्नृपस्य समाधिर्न बभूव। वैद्याः सर्वेऽपि स्वस्थानं गताः। अथ स्थाने स्थाने देवपूजा विधीयते। यक्षरक्षआदीनामुपयाचितं विधीयते। इतश्च कोऽपि राक्षसो निशि प्रकटीभूय भूपालमित्युवाच—"हे राजन् यदि तव कापि भार्या आत्मानमवतारणीकृत्यात्माऽग्नौ क्षिपति तदा तव जीवितं भवति अन्यथा न हि"। इति भणित्वा राक्षसो गतः। राजा विस्मितो मनसि दध्यौ—'इदमिन्द्रजालं किं वा सत्यं?' इति विकल्पेन निशा गता। उदयाचलचूलायां रविरागतः। उद्योतो जातः। प्रभाते प्रधानाग्रे नृपेण निशावृत्तान्तः कथितः। प्रधानेनोक्तं—'स्वामिन् जीवितव्यस्यार्थे एवमपि विधीयते'। राज्ञा प्रोक्तं—'उत्तमाः परप्राणैर्निजप्राणरक्षां न कुर्वन्ति, तन्मे यद्भाव्यं तद्भवतु'। ततोऽमात्यो नृपतेः समस्तानामपि भार्याणामग्रे निशावृत्तान्तं राक्षसोदितमचीकथत्। तच्छ्रुत्वा प्राणलोभेन सर्वोऽप्यन्तःपुरीजनोऽधोमुखीभूय तस्थौ, प्रत्युत्तरं न ददौ। तदा विकाशिवदना हर्षोत्फुल्लमानसा रतिराज्ञी समुत्थाय वदति—'चेत् मे जीवितेन नृपो जीवति तदा वरं, एतत्कार्यमहं करिष्ये'। इति श्रुत्वा सचिवः गवाक्षाधो महाकुंडं विधाय चन्दनागरुदारुभिः कुंडमपूरयत्। अथ राज्ञी कृतस्नानविलेपना पवित्रवाससालंकृतगात्रा निजं प्रियं नत्वा वक्ति—'हे नाथ मज्जीवितव्येन त्वं जीव। अहमग्निकुंडं प्रविशामि'। तदा राजा सदुःखं भाषते—'प्रिये मत्कृते जीवितं मा त्यज, मया पुरा कृतं कर्म वेद्यं'। ततः सा रतिराज्ञी नृपतेः पादयोर्विलग्येत्युवाच—'स्वामिन्नैवं वद, त्वत्कार्ये मम प्राणा यान्ति तदा मम सफलं जीवितं'। इत्युक्त्वा राज्ञी नृपोपरि बलादपि स्वयमुत्तारणीकृत्य वातायने गत्वा तस्मिन् दीप्तानलेऽग्निकुंडे

संपादयत् । तदा रक्षस्तुष्टोऽब्रवीत्—' वत्से तव सत्त्वेनाधुना तुष्टः, मनोऽभीष्टं वरं ब्रूहि, तद्ददामि ' । साऽब्रवीत्—' यद्येवं तर्हि मे भर्ता निरालोत्पन्नरोगपीडारहितस्त्वत्प्रसादाज्जीवतु ' । एवमस्त्विति कृत्वा स्वर्णसिंहासने तां न्यस्य राजानं चामृतेनाभिषिच्य राक्षसः स्वस्थानं जगाम । राजलोकः समग्रोऽपि तस्या नृपजीवितदानेन जयजयारवेण स्तौति । सापि राज्ञी नृपान्तिके समागत्य पुष्पाणि संचापयति । तदा नृपेणोक्तं—' प्रिये तव सत्त्वेन तुष्टोऽहं, अभीष्टं वरं वृणु ' । साह—' स्वामिन् त्वमेव ममाभीष्टो वरः ' । नृपोऽवक्—' भद्रे त्वयाहं जीवितपण्येन वशीकृतः, तथापि किञ्चिद्याचस्व ' । ततः सा हसित्वाऽवदत्—' यद्येवं तर्हि प्रस्तावेऽहं प्रार्थयिष्यामि ' । नृपस्य समाधिर्बभूव । अन्यदा तया रतिराज्ञ्या कुलदेवता पुत्रार्थं प्रार्थिता—' मातः मम पुत्रं देहि, जयसुन्दर्याः पुत्रेण तव बलिं दास्ये ' इत्युपयाचितं कृतं । भवितव्यतावशात् द्वयो राज्ञ्योर्लक्षणसंपूर्णौ पुत्रौ बभूवतुः । तदा रतिराज्ञी तुष्टा मनसि चिन्तयति—' मम देव्या सुतो दत्तः जयसुन्दर्याः पुत्रेण कथं बलिं दास्ये ? ' । इति विचिन्त्य तया इत्युपायो लब्धः—' राज्ञः पार्श्वे वरं मार्गयामि । राज्ञः सकाशाद्राज्यं मदायत्तं कृत्वा सर्वं समीहितं करिष्यामि ' । इति निश्चित्य तया भूपालाग्रे भणितं—' नाथ प्राक्प्रतिपन्नो वरोऽधुना दीयतां ' । नृपेणोक्तं—' देवि यदभीष्टं तव तदेव याचस्व ' । राज्योक्तं—' यद्येवं तर्हि मम पञ्च वासरान् राज्यं दीयतां ' । राजावदत्—' एवमस्तु, मया तुभ्यं राज्यं दत्तं ' । ' महाप्रसादः ' इत्युक्त्वा सा राज्यं पालयन्ती महोत्सवं चकार । अथ शुभमुहूर्ते प्रभातसमये रुदन्त्या जयसुन्दर्या बलात् पुत्रमानाय्य स्नपयित्वाऽर्चयित्वा श्रीखंडकुसुमाक्षतैः सह तं बालं पटल्यां न्यस्य दासीमूर्धन्यतिष्ठिपत् । उच्छलत्तूर्यनादेन नारीवृन्देन गीतगानेन च समं परीवारयुता देवताभवनं उद्याने याति ।

इतश्च काञ्चनपुरस्वामी सुरविद्याधराधिपो विमानेनाकाशमार्गे गच्छन् तं दारकं भानुमन्तमिवोद्योतकारकं वीक्ष्य तत्रान्यं बालकं मुक्त्वा स गृहीतः । विमानान्तः सुप्ताया स्त्रियाः समीपे स्थापयित्वा तां मृदुस्वरेण बभाषे—'हे प्रिये शीघ्रमुत्तिष्ठ, स्वदारकं जातं पश्य' । सा सखेदमब्रवीत्—"स्वामिन् किं त्वं हससि । अहं दुरात्मना दैवेन हसिता यथा वन्ध्या स्त्री कदापि पुत्रं न प्रसूते" । सोपि हसितास्यो वदति—'त्वं स्वयं विलोकय रत्नसमं सुतं, आवयोः पुत्ररहितयोरेष एव पुत्रः' । तं बालकं पुत्रत्वेन प्रतिपद्य स्वपुरे गतः । चन्द्रकलावत्सतिरामरं कलाभिर्वर्धते । रतिराज्ञ्यपि प्रीतचित्ता तं मृतबालकं देव्याः शीर्षे परिभ्रमय्य पुरत आस्फालयत् । ततो गृहे पूर्णमनोरथा ययौ । जयसुन्दर्याः पुत्रवियोगदुःखेन कालो याति । एका पूर्णिमावदेका चामावास्यावद्राज्ञी बभूव ।

अथ तस्य बालकस्य मदनांकुर इति नाम निर्ममे । क्रमेण वृद्धिं प्राप्य विविधा विद्याः शिक्षितो यौवनं च प्राप्तः । एकदा-काशगामिन्या विद्यया व्योम्नि व्रजन् सौधवातायनस्थितां जननीमपश्यत् । अथ तद्दर्शनोत्पन्नस्नेहेन मदनांकुरो जननीं विमाने उत्क्षिप्य समारोपयामास । साऽपि तं कुमारं दृष्ट्वा भूयो भूयः स्नेहलया दृशा वीक्षते । तदा जनः पुरीमध्ये ऊर्ध्वबाहुर्जल्पति—'एषा नृपस्य भार्या केनापि विद्याधरेण ह्रियते' । शूरोऽपि नृपः किं करोति ? कुब्जस्योच्चैस्तरोः फले कः पराक्रमः ? स हेमप्रभनृपः सुतस्य मरणेन भार्यापहारेण च महादुःखं प्राप्तः ।

इतश्च पूर्वभवशुकजीवदेवेनावधिज्ञानेन तदसमञ्जसं ज्ञात्वा चिन्तितं—'अहो मम भ्राता स्वमातरं गृहिणीबुद्ध्या हरते' । अथ स्वपुरासन्नसरस्तीरे मदनांकुरः सहकारतरोस्तले यावदास्ते तावद्देवो वानरवानरीरूपं विधाय सहकारवृक्षशाखायामतिष्ठत् । वानरो वानरीं प्रत्यवदत्—"हे प्रिये इदं कामदं तीर्थं । अत्र तीर्थजले तिर्यञ्चः पतिता मानुष्यं लभन्ते । मनुष्याश्च देवत्वं

क्षेपामदात् । तदा रक्षस्तुष्टोऽब्रवीत्—' वत्से तव सत्त्वेनाधुना तुष्टः, मनोऽभीष्टं वरं ब्रूहि, तद्ददामि ' । साऽब्रवीत्—' यद्येवं तर्हि मे भर्ता चिरकालोत्पन्नरोगपीडारहितस्त्वत्प्रसादाज्जीवतु ' । एवमस्त्विति कृत्वा स्वर्णसिंहासने तां न्यस्य राजानं चामृतेनाभिषिच्य राक्षसः स्वस्थानं जगाम । राजलोकः समग्रोऽपि तस्या नृपजीवितदानेन जयजयारवेण स्तौति । सापि राज्ञी नृपान्तिके समागत्य पुण्याक्षतैर्वर्धापयति । तदा नृपेणोक्तं—' प्रिये तव सत्त्वेन तुष्टोऽहं, अभीष्टं वरं वृणु ' । साह—' स्वामिन् त्वमेव ममाभीष्टो वरः ' । नृपोऽवक्—' भद्रे त्वयाहं जीवितपण्येन वशीकृतः, तथापि किञ्चिद्याचस्व ' । ततः सा हसित्वाऽवदत्—' यद्येवं तर्हि प्रस्तावेऽहं प्रार्थयिष्यामि ' । नृपस्य समाधिर्बभूव । अन्यदा तया रतिराज्ञ्या कुलदेवता पुत्रार्थं प्रार्थिता—' मातः मम पुत्रं देहि, जयसुन्दर्याः पुत्रेण तव बलिं दास्ये ' इत्युपयाचितं कृतं । भवितव्यतावशात् द्वयो राज्ञ्योर्लक्षणसंपूर्णौ पुत्रौ बभूवतुः । तदा रतिराज्ञी तुष्टा मनसि चिन्तयति—' मम देव्या सुतो दत्तः जयसुन्दर्याः पुत्रेण कथं बलिं दास्ये ? ' । इति विचिन्त्य तया इत्युपायो लब्धः—' राज्ञः पार्श्वे वरं मार्गयामि । राज्ञः सकाशाद्राज्यं मदायत्तं कृत्वा सर्वं समीहितं करिष्यामि ' । इति निश्चित्य तया भूपालाग्रे भणितं—'नाथ प्राक्प्रतिपन्नो वरोऽधुना दीयतां ' । नृपेणोक्तं—' देवि यदभीष्टं तव तदेव याचस्व ' । राज्ञ्योक्तं—' यद्येवं तर्हि मम पञ्च वासरान् राज्यं दीयतां ' । राजावदत्—' एवमस्तु, मया तुभ्यं राज्यं दत्तं ' । ' महाप्रसादः ' इत्युक्त्वा सा राज्यं पालयन्ती महोत्सवं चकार । अथ शुभमुहूर्ते प्रभातसमये रुदन्त्या जयसुन्दर्या बलात् पुत्रमानाय्य स्नपयित्वाऽर्चयित्वा श्रीखंडकुसुमाक्षतैः सह तं बालं पटल्यां न्यस्य दासीमूर्धन्यतिष्ठिपत् । उच्छलत्तूर्यनादेन नारीवृन्देन गीतगानेन च समं परीवारयुता देवताभवनं उद्याने याति ।

इतश्च काञ्चनपुरस्वामी ग्रविद्याधराधिपो विमानेनाकाशमार्गे गच्छन् तं दारकं भानुमन्तमिवोद्योतकारकं वीक्ष्य तत्रान्यं बालकं मुक्त्वा स गृहीतः। विमानान्तः सुप्ताया स्त्रियाः समीपे स्थापयित्वा तां मृदुस्वरेण बभाषे—'हे प्रिये शीघ्रमुत्तिष्ठ, स्वदारकं जातं पश्य'। सा नरेन्द्रमब्रवीत्—"स्वामिन् किं त्वं हससि। अहं दुरात्मना दैवेन हसिता यथा वन्ध्या स्त्री कदापि पुत्रं न प्रसूते"। सोऽपि हसितास्यो वदति—'त्वं स्वयं विलोकय रक्तसमं सुतं, आवयोः पुत्ररहितयोरेष एव पुत्रः'। तं बालकं पुत्रत्वेन प्रतिपद्य स्वपुरे गतः। चन्द्रकलावत्प्रतिवासर कलाभिर्वर्धते। रतिरङ्ग्यपि प्रीतचित्ता तं मृतबालकं देव्याः शीर्षे परिभ्रमय्य पुरत आस्फालयत्। ततो गृहे पूर्णमनोरथा ययौ। जयसुन्दर्याः पुत्रवियोगदुःखेन कालो याति। एका पूर्णिमावदेका चामावास्यावद्राज्ञी बभूव।

अथ तस्य बालकस्य मदनांकुर इति नाम निर्ममे। क्रमेण वृद्धिं प्राप्य विविधा विद्याः शिक्षितो यौवनं च प्राप्तः। एकदाकाशगामिन्या विद्यया व्योम्नि व्रजन् सौधवातायनस्थितां जननीमपश्यत्। अथ तद्दर्शनोत्पन्नस्नेहेन मदनांकुरो जननीं विमाने उत्क्षिप्य समारोपयामास। साऽपि तं कुमारं दृष्ट्वा भूयो भूयः स्नेहलया दृशा वीक्षते। तदा जनः पुरीमध्ये ऊर्ध्वबाहुर्जल्पति—'एषा नृपस्य भार्या केनापि विद्याधरेण ह्रियते'। शूरोऽपि नृपः किं करोति? कुब्जस्योच्चैस्तरोः फले कः पराक्रमः? स हेमप्रभनृपः सुतस्य मरणेन भार्यापहारेण च महादुःखं प्राप्तः।

इतश्च पूर्वभवसुहृज्जिनदेवेनावधिज्ञानेन तदगम्यगमं ज्ञात्वा चिन्तितं—'अहो मम भ्राता स्वमातरं गृहिणीबुद्ध्या हरते'। अथ स्वपुरागमनसरस्तीरे मदनांकुरः सहकारतरोस्तले यावदास्ते तावद्देवो वानरवानरीरूपं विधाय सहकारवृक्षशाखायामतिष्ठत्। वानरो वानरीं प्रत्यवदत्—"हे प्रिये इदं कामदं तीर्थं। अत्र तीर्थजले तिर्यञ्चः पतिता मानुष्यं लभन्ते। मनुष्याश्च देवत्वं

लभन्ते । विलोकय । इमौ मनुष्यौ दिव्यरूपौ आवां मनसि कृत्वाऽस्मिन् तीर्थजले पताव, यथा चेद्दग्रूपेण मनुष्यत्वं प्राप्नुवः । ईदृशी स्त्री त्वं स्याः, ईदृशो नरोऽहं भवेयं "। वानर्या भणितं—" कान्त अस्य नामापि नो गृह्यते, य इमां स्वां जननीं स्वगृहिणीबुद्ध्या हरते । तस्य पापस्य रूपं किं त्वमिच्छसि ? "। वानर्या वचनं श्रुत्वा तावुभौ विस्मितौ । कुमारोऽचिन्तयत्—' एषा मम कथं जननी मयाऽपहृता ? परंतु मम मातृबुद्धिं जनयति '। राज्ञी च मनसि दध्यौ—' कथं ममैव सुतः ? अयं दृष्टोऽपि निजांगज इव मे मनसि स्नेहं वर्धयति '। कुमारः शंकाकुलो वानरीं सादरं पप्रच्छ—' भद्रे यद्वचस्त्वया भाषितं तत्सत्यं ? '। तयोचे—" सत्यमेवेदं, यदि संदेहो भवति तदाऽस्मिन् वने ज्ञानवान् मुनिरस्ति, तं मुनीश्वरं पृच्छ "। इत्युक्त्वा तावदृश्यीभूतौ । कुमारो विस्मयं प्राप्तः । वने गत्वा तं मुनिं पप्रच्छ—' भगवन् वानर्या यत्प्रोक्तं तत्सत्यं न वा ? । ' मुनिरप्याह—" भो भद्र तत्सर्वं सत्यं, नान्यथा, इदानीमहं कर्मणां क्षयकरणार्थं ध्याने स्थितोऽस्मि । हेमपुरे केवली वर्तते स तव सर्वं स्पष्टं कथयिष्यति " । ततो मुनिं नत्वा कुमारो मातृसहितो गृहं गतः । अतिहृष्टाभ्यां पितृभ्यां कुमारो विमना दृष्टः । कुमारेण विद्याधरी माता पादयोर्लगित्वा रहः पृष्टा—मातः स्पष्टं ब्रूहि, मम माता का ? पिता च कः ? '। सावदत्—' वत्स नो वेत्सि किं ? तवाहं माता, अयं जनकः'। कुमारोऽवदत्—' अस्त्येवं, किं तु पृच्छामि, मम जन्मदायकौ पितरौ कौ ? '। तयोक्तं—'नाहं जानामि, तव पिता सर्वं जानाति'। तदा तेन विद्याधरनृपेण पटलीप्रमुखः सकलोऽपि वृत्तान्तः कथितः । परं जनकजननीनाम नोदितं । कुमारेण चिन्तितं—" वानर्या यद्वने प्रोक्तं सत्यं, तदेव मुनिनाप्युक्तं । एषा जन्मजननी संभाव्यते । अथ भगवन्तं केवलिनं पृच्छामि । यथा मम संदेहस्त्रुट्यति "। इति मनसि विचार्य जननीजनकसहितः कुमारो हेमपुरे नगरे केवलिनो वन्दनाय ययौ । तत्र गत्वा केवलिनं नत्वा

विद्याधरेश्वरः परिवारसहितो निविष्टः । नारीसहस्रमध्यस्था जयसुन्दरी राज्ञी निजपुत्रेण सहिता गुरुभाषितं धर्मं शृणोति । हेमपुराधीशोऽपि हेमप्रभो नृपतिः पौरजनैः सार्धं गुरोः पुरस्तान्निविष्टः । सोऽपि धर्मं शृणोति । अवसरं प्राप्य हेमप्रभनृपतिः केवलिनमप्राक्षीत्—' भगवन्मम भार्या केनापहृता ? ' । केवली प्राह—' राजेन्द्र निजपुत्रेण साऽपहृता ' । राजापि विस्मितः प्राह—"प्रभो ! तस्याः कुतः सुतः ? यस्तस्यास्तनयोऽभूत् स दैवेन हृतः । तस्या द्वितीयसुतो नास्ति । ममायं संशयः संतापं कुरुते" मुनिर्वदति—'सत्यं, अत्र संदेहं मा कृथाः' । नृपोऽवादीत्—'तर्हि परमार्थो निवेद्यतां' । गुरुणा कुलदेव्यादिसकलो वृत्तान्तः कथितः, तत्रोद्याने (स पुनः) समागतः, तावत्सर्वं कथितं । राजा यावत् सभासंमुखं विलोकते तावद् ध्वस्तसंदेहः कुमारस्ततमानमत् । नृपः सुतमालिंगति । तत्र नृपो जयसुन्दरी रतिराज्ञी कुमारौ द्वौ च सकलं कुटुंबं मिलितं । ततो जयसुन्दरी राज्ञी मुनिं नत्वा पप्रच्छ—'भगवन् केन कर्मणा मम षोडशवर्षपर्यन्तं सुतस्य विरहो जातः ? ' । मुनिराह—"षोडश मुहूर्तानि पूर्वं शुकीभवेऽण्डं हृत्वा सपत्नीशुक्या वियोगो दत्तः, तस्येदं फलं । यदल्पमपि यो यस्य सुखं दुःखं वा दत्ते, तत्फलमपरस्मिन् भवे लभते" । इत्थं गुरुवचः श्रुत्वा पश्चात्तापपरा रतिराज्ञी समुत्थाय जयसुन्दरीपादयोर्विलग्य क्षामयति—'भगिनि ममापराधं क्षमस्व । अन्योऽन्यं क्षमयति । नृपः पप्रच्छ—'पूर्वभवे किं सुकृतं कृतं ? येन सुकृतेन मया राज्यं प्राप्तं ? । गुरुरुवाच—"पूर्वभवे जिनबिंबस्याग्रेऽक्षतपुञ्जत्रयं चक्रे तत्पुष्पं देवत्वं राज्यप्राप्तिश्च । फलं तु तृतीयभवे मोक्षप्राप्तिः" । अथ हेमप्रभो नृपतिः रतिपुत्रस्य राज्यं दत्त्वा कुमारेण जयसुन्दर्या च सहितो व्रतमग्रहीत् । दुस्तपं तपस्तेपे । परिव्रज्यां पालयित्वा पुत्रकलत्राभ्यां सहान्तेऽनशनं कृत्वाऽऽयुःक्षये सप्तमे शुक्रदेवलोके सुराधिपोऽभूत् । जयसुन्दरी जीवोऽपि महर्द्धिको देवोऽभूत् । कुमारोऽपि देवोऽभूत् । ततश्च्युत्वा मानुष्यं प्राप्य त्रयोऽप्यव्ययं पदं प्रापुः ॥

॥ इति जिनपूजायामक्षतपूजाफलं

## ॥ अथ भावपूजायां वनराजकथोच्यते ॥

अस्मिन् भरतक्षेत्रे सुरपुरोपमं क्षितिप्रतिष्ठितं नाम नगरमस्ति । तत्र नरनारीजनाः सुरसुरीवृन्दानि इव राजन्ते । तत्रारिमर्दनो राजा राज्यं करोति । अथ तत्र स्वजनधनवर्जितो नित्यमार्तध्यानपरायणो दारिद्र्यरूपः कोपि भिक्षुकः कुलपुत्रको भिक्षार्थं प्रतिगृहं भ्रमति । इदं पापफलं । यतः—

तृणं लघु ततस्तूलं तूलादपि हि याचकः । याच्ञाभंगस्य कर्ता च ततो लाघवलाघवः ॥ १ ॥

भिक्षां मे पथिकाय देहि सुभगे हा हा गिरो निष्फलाः
कस्माद् ब्रूहि सखे प्रसूतकममूत् कालः कियान् वर्तते ।
मासे शुद्धिरभूत्तदा न हि न हि प्रोद्भूतमृत्युं विना
को जातो मम चित्तवित्तहरणे दारिद्र्यनामा सुतः ॥ २ ॥

इदं दारिद्र्यं दानद्वेषतरोः फलं । स भिक्षुको लोकेन निषिध्यमानश्चिन्तयति—" काकोऽपि पिंडं लभते । अहं भिक्षुर्भिक्षामात्रमपि न प्राप्नोमि । अहो मम पापफलं । कष्टेन किं जीवनं ? । अथ मम मृत्युरेव श्रेयान् " । इत्थं चिन्तयन्नेकदा प्रस्तावे पुराद्बहिर्विनिर्गत्य भवितव्यतावशादुपवनं ययौ । तत्र परमशान्तरसमयं धर्ममूर्तिं महानुभावं मुनिमेकं वीक्षते । तस्मै प्रदक्षिणात्रयं

दत्वा संसारदुःखनिर्विण्णः साधुसमीपे निषण्णः। मुनीन्द्रोऽपि तस्मै दयार्द्रमनसा धर्मतत्त्वमादिशत्। परस्यापदि जायमानायां साधवोऽतीव वत्सला भवन्ति। तस्मात्कारणात्साधुस्तस्मै धर्ममुपदिशति। तद्यथा—

अहो जीवाः समृद्धा हि भ्रमन्ति भुवनत्रये। धर्माभिज्ञानहीनास्तु लभन्ते नैव किंचन ॥ १ ॥

बीजमुप्तिं विना न स्यात् यथा सस्यागमो नृणाम्। चिरेणापि तथा धर्मं विना नैवेष्टसंपदः ॥ २ ॥

तस्माद्बाल्येऽपि दुःखेऽपि निर्धनत्वेऽपि श्रद्धया। देवदर्शनमात्रेण धर्मः कार्यो निरन्तरम् ॥ ३ ॥

एवं श्रुत्वा स दरिद्रपुरुषः प्रकर्षेण सगद्गदं करौ योजयित्वा मुनिमुवाच—"भगवन् अहमनाथः, अहमशरणः, अहं बन्धुरहितः। त्वमेव शरणं। अस्मिन् भवेऽहं केनापि सुधामधुरया गिरा न भाषितः। स्वामिन्नहं सर्वत्रापि आक्रुष्टः। मया निराधारेणाद्य त्वं यानपात्रसमो लब्धः। प्रसादं कृत्वा मम कथय, को देवः? तस्य दर्शनेन किं स्यात्? तस्य किं क्रियते? स्तोकाक्षरैः घनं कथ्यताम्"। मुनिरप्याह—"भो भद्र श्रूयतां, पद्मासनासीनः शान्तमूर्तिर्जिनेश्वरो देवः। तस्य भवने गत्वा भूतलन्यस्तमस्तकेनाञ्जलिं बद्ध्वा प्रणम्य पठ्यते—

जितसंमोह सर्वज्ञ यथावस्थितदेशक। त्रैलोक्यमहित स्वामिन् वीतराग नमोऽस्तु ते ॥ १ ॥

गुरुवाक्यं प्रमाणमिति प्रतिपद्य नगरे चैत्यमध्ये गत्वा जिनं दृष्ट्वाऽमुं नमस्कारं पठति। अन्यत्रापि जिनेन्द्रभवने नमस्कारमात्रं करोति। यथालब्धेन संतोषं प्राप्नोति। कदाचिन्मनस्येवं विकल्पमात्रमपि जायते—"नमस्कारमात्रेण मम किं फलं भविता

न वा। अथवा धिगिदं ध्यातं। नमस्कारात्सर्वार्थसिद्धिर्भविष्यति"। एवं भृशं चिन्तयति—'इदमेव मम तत्त्वं प्रमाणं'। एवं निर्वाह्य पर्यन्तसमये तस्य रंकमात्रत्वाद्राज्येच्छा बभूव। एवं चिन्तयति—'उत्तमकुलेन किं? नीचकुलेऽपि जातस्य भाग्याधिकं राज्यं प्राप्यते तद्वरं'। इति ध्यानपरो मृत्वा मुहुर्वीतरागस्तुतिश्लोकं भणित्वा कालं कृत्वा तस्मिन्नैव नगरे राज्ञः पुरोधसः सोमस्य गृहे दासी वर्तते, तस्याः कुक्षौ पुत्रत्वेनोदपद्यत। पूर्णसमये तस्याः पुत्रो जातः। नृपसभासीनस्य पुरोधसोऽग्रे केनापि गत्वा तस्य जन्म निवेदितं। तस्मिन् समये तेन लग्नं विलोकितं। स्वस्वामियुतं शुभग्रहावलोकितं शुभग्रहबलोपेतं त्रिग्रहोच्चं सुन्दरं मुहूर्तं लग्नं विचार्य पुरोहितो विस्मितास्यश्चमत्कारं प्राप्तः। शिरो धुन्वन् नखछोटनं ददौ। नृपोऽपृच्छत्—'कीदृशो लग्नयोगोऽस्ति'? पुरोहितोऽवादीत्—'राजेन्द्र रहसि कथयिष्ये'। प्रस्तावे कथितं—"स्वामिन्निशम्यतां, मद्गृहे चेटिकायाः पुत्रोऽजनि। सोऽनेन लग्नयोगेन तव राज्यं ग्रहीष्यति"। तन्निशम्य नृपतिर्वज्राहत इव संजातः। शंकाकुलो बभूव। सभालोकं विसृज्यासनादुत्थाय वासभवने प्रविश्येदं चिन्तितवान्—"आः किमिदमसंभाव्यं? मदीये पुत्रे सति मदीयं राज्यं किं वृषलीसुतो ग्रहीष्यति?। उत्पद्यमानो व्याधिश्छिद्यते तदा वरं। संदीप्ते भवने कूपखननोद्यमः कीदृशः शोभते?" इति विचार्य नृपश्चंडाख्यं भृत्यमाकार्येत्यादिदेश—"अहो चंड त्वं मत्कार्यकरणसमर्थोऽसि, तस्मात्त्वं शृणु, मत्पुरोधोगृहे दास्याः सुतोऽजनि। तं बालकं गुप्तवृत्त्या गृहीत्वा पुराद्बहिर्गत्वा हन्यतां"। तेनोक्तं—'आदेशः प्रमाणं' इत्युक्त्वा गतः। प्रस्तावं विलोक्य संध्यासमये एकाकिनं बालं दृष्ट्वा स गृहीतः। ततः शीघ्रं पुराद्बहिर्गत्वा नातिदूरतो जीर्णशुष्कमहाराममध्ये कूपस्य समीपे सहकारवृक्षस्याधः स्थित्वा चीवरमुन्मार्य बालमालोकते, तावन्मुखं चन्द्रप्रभासमं पश्यति। सहसा तं वनमप्युद्योतितं दृष्ट्वा चंडोऽपि चित्तमुदितोऽचिन्तयत्—"पारवश्यमिदं धिक्, यदेवंविधानां बालानां कठोरं निर्घृणं कर्म क्रियते। एष कोऽपि भाग्या-

धिकः। राजादेशस्तु दारुणः। यद्भाव्यं तद्भवत्वेव। एनं देवोपमं बालकं नो हनिष्यामि"। तथा चंडः कठिनोऽप्यार्द्रमना जातः। चंडेनोक्तं—'अस्य वनदेवताः सांनिध्यं कुर्वन्तु'। इत्युक्त्वा तस्यैव तरोस्तले तं बालकं मुमोच। ततः स्थानाच्चलितः। पश्चाद्वलितग्रीवया पुनः पुनस्तं वीक्षमाणो नगरमध्ये गत्वा राज्ञोऽग्रे कथयामास—'स्वामिन् भवदादेशः कृतः'। तच्छ्रुत्वा नृपस्तस्य प्रसाददानं ददौ। अथासन्नगते सूर्ये भयंकराण्यन्धकाराणि दूरतः पलायन्त। कमलानि सविकाशानि समजायन्त। श्रीसूर्यस्योदयः प्रकटीबभूव। अथैवं समये मालिकस्तस्मिन्नाराम आगतः। सहसा तं वनं पत्रपुष्पफलयुक्तमद्राक्षीत्। विस्मयं प्राप्तः। 'किमिदं? वनं शुष्कमभूत्, अधुना नवपल्लवं जातं, तत्किं कारणं?'। इति सर्वत्र विलोकयति। शुष्ककूपोऽपि सोदको दृष्टः। स यावदग्रतो याति तावत्तरोस्तले देदीप्यमानं बालकमद्राक्षीत्। तं विस्फुरत्कान्तिं विस्फुरन्मुखांबुजं बालकं दृष्ट्वा मालिको दध्यौ—"नूनमस्य प्रभावतोऽकस्मान्मदीयं वनं सफलं बभूव। ममापुत्रकस्य सर्वलक्षणसंयुतं मदीयभाग्येन तुष्टा वनदेवताः पुत्रमदुः। निजगेहिन्याः समर्पये"। इति मनसि निश्चित्य स मालिको दोर्भ्यामादाय हर्षनिर्भरः सन् गृहे गत्वा निजप्रियाया अकथयत्—'प्रियेऽयं गृह्यतां, वनदेवतया तोपाद्दत्तः'। इत्युक्त्वा स्वप्रियायाः समार्पयत्। 'मालिकाया गूढगर्भायाः पुत्रो जातः' इति बहिर्लोकाग्रे विस्तारयामास। स्वगृहांगणे पुष्पाणि विकीर्य घृतेनोदुंबरं सिक्त्वा द्वारे तोरणं संपूर्य वाद्यमानमहातूर्यधवलमंगलपूर्वकं महोत्सवं चकार। बहुद्रविणव्ययं कृत्वा कुलज्ञातिभक्तिसत्कारपूर्वकं तस्य बालस्य वनराज इति नाम व्यधात्। स वनराज आरामिकेण लाल्यमानः पाल्यमानो निरन्तरं संभाल्यमानो नवचंपकवद्वृद्धिं प्राप। स पांशुक्रीडारसेन बालजं सौख्यं भुञ्जन् पञ्चवार्षिको जातः। अन्येद्युर्वसन्तसमये मालाकारस्य गेहिनी पुष्पाभरणमादाय सभासीनस्य भूपस्यान्तिके गता। कौतुकेन बालोऽपि तया सह गतः। तदा तथैव तेन नृपासन्ननिवि-

ष्टेन पुरोधसा त बालकं दृष्ट्वा नखाच्छोटनपूर्वकं शीघ्रं धूनितं । नृपेण संभ्रान्तमानसेन पुरोधाः पृष्टः—'एतत् किं?'। स निमित्तज्ञानवान् पुरोधा अवदत्—'राजेन्द्र य एष बालको दृश्यते, स त्वदीयराज्यस्याधिपो भविष्यति'। साशंकं नृपोऽब्रवीत्—'कथं ज्ञायते?'। पुरोधाः पुनरप्यूचे—"सामुद्रिकशास्त्रेऽप्युक्तानि नखकेशाग्रलक्षणानि शुभाशुभानि प्रोच्यन्ते । तद्यथा—

उन्नताम्रनखा भव्याः सस्निग्धाः सौख्यदायकाः । शूर्पाकारा रूक्षभग्ना वक्राः श्वेताश्च दुःखदाः ॥१॥

राज्याय पादयो रेखा ध्वजवज्रांकुशोपमाः । अंगुल्योऽपि समा दीर्घाः संहिताश्च समुन्नताः ॥२॥

अंगुष्ठैर्विपुलैर्दुःखं सदाध्वगमनं नृणाम् । वृत्तैस्ताम्रनखैः स्निग्धैः संहितैस्तु सुखं भवेत् ॥३॥

हंसैणवृषभक्रौञ्चसारसानां गतिः शुभा । खरोष्ट्रवृषभश्वानगतयस्तु महाधमाः ॥४॥

दुःखिनः काकजंघाः स्युर्दीर्घजंघा महाध्वगाः । बन्धनं चाश्वजंघानां मृगजंघास्तु पार्थिवाः ॥५॥

मृगव्याघ्रोदरो भोगी श्वशृगालोदरोऽधमः । मंडूकसदृशं यस्योदरं स स्यान्महीपतिः ॥६॥

प्रलंबबाहुः स्वामी स्यात् ह्रस्वबाहुस्तु किंकरः । स्वच्छारुणनखो दीर्घांगुली रक्तकरः श्रिये ॥७॥

शक्तितोमरदंडासिधनुश्चक्रगदोपमा । यस्य रेखा भवेदेषा राजानं तं विनिर्दिशेत् ॥८॥

ध्वजवज्रांकुशच्छत्रशंखपद्मादयस्तले। पाणिपादेषु शस्यन्ते यस्यासौ श्रीपतिः पुमान् ॥ ९॥
स्वस्तिके जनसौभाग्यं मीने सर्वत्र पूज्यता। श्रीवत्से वाञ्छिता लक्ष्मीर्गवाढ्यं दामकेन तु ॥१०॥
पुत्रदा करभे रेखा कनिष्ठाधः कलत्रकृत्। अंगुष्ठमूलरेखा तु भ्रातृभांडेषु शस्यते ॥११॥
अंगुष्ठोदरमध्यस्तु यवो यस्य विराजते। उत्पन्नभक्ष्यभोगी च स नरः सुखमेधते ॥१२॥
स्थूलरेखा दरिद्राः स्युः सूक्ष्मरेखा महाधनाः। खंडितस्फुटिताभिः स्यादायुषः क्षय एव हि ॥१३॥
द्वात्रिंशद्दशनो राजा भोगी स्यादेकहीनकः। त्रिंशद्दन्तास्तु सुखिनस्ततो हीनास्तु दुःखिनः ॥१४॥
पद्मपत्रसमा जिह्वा रक्ता सूक्ष्मा सुशोभना। पार्थिवः शुकनाशः स्यात् ह्रस्वनाशस्तु धार्मिकः ॥१५॥
ललाटे चार्धचन्द्राभे राजा धर्मिष्ठ उन्नते। विद्याभोगी विशाले स्याद्दुःखी तु विषमे भवेत् ॥१६॥
छत्राकारं नरेन्द्राणां शिरो दीर्घं तु दुःखिनाम्। अधमानां घटाकारं पापिनां स्थपुटं पुनः ॥१७॥
मृदुलैः श्यामलस्निग्धैः स्निग्धैर्भवति भूपतिः। स्फटितैः कपिलैः स्थूलैः रूक्षैः केशैः सुदुःखिनः ॥१८॥

इत्यादिसामुद्रिकोक्तानि यानि लक्षणानि शुभानि प्रोक्तानि सन्ति, तानि सर्वाणि शुभान्यस्मिन् बालके दरीदृश्यन्ते।

तस्मादेष बालकस्तव राज्यं ग्रहीष्यत्येव "। एतत्पुरोहितवाक्यं श्रुत्वा भूपतिरमावास्याचन्द्रवत्क्षीणो जातः। सभाजनं विसृज्य निर्व्यंजने चंडमाहूय पृष्टवान्—'भोश्चंड सत्यं ब्रूहि। त्वया बालस्तदा हतो न वा?'। तेनापि सत्ये कथिते नृप उत्सुकोऽभवत्। ततः मायं भीमसेनाख्यं सेवकं समाहूय नृपो बालकवधस्यादेशमादिदेश। सोऽपि क्रीडन्तं बालकं विप्रतार्य वधार्थं जगाम। अश्वमारुह्य संध्यासमये भीमसेनः पुराद्बहिर्गच्छन् बालेन पृष्टः—'तात त्वं मां कुत्र नेष्यसि?'। तद्बालवचः श्रुत्वा स मृदुमना जातः। श्मश्रुतः कचान् करांगुलैः स्पृशन्तं दृष्ट्वा पुत्रवज्ज्ञात्वा रोमाञ्चितवपुर्भीमः संजातः। तदा भीमोऽवोचत्—'यत्र पुत्र तव सुन्दरं भविष्यति तत्र त्वां नेष्यामि'। इति संतोष्य स रौरवाटवीं ययौ। तत्रातिभीषणे रौरवे वने तं बालकं समाश्वासयन् दिव्यं यक्षभवनमैक्षत। सोऽश्वादुत्तीर्य यक्षभवने प्रविवेश। स सुन्दराख्यस्य यक्षस्य प्रतिमां वीक्ष्यावदत्—'हे स्वामिन् श्रीयक्षराज बालोयं त्वदीयशरणे मुक्तः'। भीमसेनस्तं बालकं यक्षस्योत्संगे मुक्त्वा स्वगृहे गतः। तदा बालोऽवदत्—'अहं क्षुधितः। आम तात मम मोदकं देहि'। इति स्नेहमयं कोमलवाक्यं वदन् यक्षतुन्दं परामृशत्। पाषाणरूपोऽपि यक्षस्तद्वचसा तुष्टिं प्राप्तः तस्मै स्वादिष्टं सुन्दरं प्रवरं मोदकं ददौ। इतश्च तत्र यक्षभवनासन्ने केशवाभिधः सार्थवाहः कृतावासोऽस्ति। तदा वृषभेषु नष्टेषु चिन्तया जाग्रत्सुप्तोऽस्ति। तदा स यक्षस्तस्यादेशं ददौ—"त्वमधृतिं मा कार्षीः। तव बलीवर्दाः प्रभाते स्वयमेव समेष्यन्ति। अन्यच्च शृणु, मदुत्संगाद्वनराजाख्यो बालः प्रभाते त्वया ग्राह्यः। तवापि पुत्रो नास्ति। मया तव पुत्रत्वेन स दत्तः"। इति श्रुत्वा सार्थवाहो विस्मितः। स तत्र गत्वा स्तुतिं कृत्वा तदंकतस्तं बालमादाय तुष्टः सन् स्वप्रियायै समार्पयत्। ततश्चलितः। गृहे गत्वा विप्रसमीपे पाठितः। सोऽभ्यस्तशास्त्रः क्रमेण षोडशवार्षिको जातः। अथ स सार्थवाह एकदा वनराजेन सह व्यापारं कुर्वन् क्षितिप्रतिष्ठितपुरे

व्यवहर्तुं समागतः। शुभस्थाने सार्थं निवेश्य वनराजेन सह स्वयं सदुपायनं गृहीत्वा नृपस्य मिलनाय गतः। नृपाग्रे तदुपायनमढौकयत्। ऊर्ध्वीभूय स्थितः। राज्ञा सन्माने दापिते सार्थवाहो निविष्टः। सार्थवाहो नृपं पश्यन्नूर्ध्व एव स्थितः तदा नृपासन्नस्थः पुरोधास्तं कुमारममराकारं निरीक्ष्य हृदि स्पष्टं विचार्य तथैव नखमाच्छोटयत्। भूपो नखाच्छोटे दृष्टे पुरोधसं कारणं पप्रच्छ। सोऽप्याचख्यौ—'राजेन्द्र तव रहसि कथयिष्यामि'। क्षणमवलंब्य रहस्यवृत्त्या कथितं—'आकृत्या ज्ञायते, अयं कुमारस्तव राज्यं ग्रहीष्यति'। भूपोऽतिविस्मितश्चिन्तयति—"अरे पापः स एवायं, किमसौ सुरः? किं वा विद्याधरः? यो मया भृत्यहस्तात् घातितोऽपि जीवितः। तदा विकल्पकल्पनेन किं? अथाप्युपायो विधीयते। येन कारणेन तृतीयोद्यायनेन मयूरोऽपि गृह्यते"। इति विमृश्य दिनपञ्चकानन्तरं सार्थेशं पप्रच्छ—'कोऽयं कुमारः? यस्तव पार्श्वे दृश्यते'। सोऽप्यूचे—'देव मम सुतः'। नृपोऽप्युवाच—'यद्येवं तर्हि कियतो दिनान् मत्पार्श्वे तिष्ठतु'। सार्थेशेन चिन्तितं—'हसतां रुदतां चापि नृपादेशः कृतः श्रिये भवति'। इति मत्वा केशवोऽप्यूचे—'राजेन्द्र एवमस्तु, यद्रोचते तत्क्रियतां'। तस्तुष्टो नृपतिः सर्ववस्तुनो दानमोचनं कृत्वा स्वहस्तेन वस्त्रादिसन्मानं निर्ममे। अथ सार्थवाहः साश्रुपातलोचनो वनराजं बाहौ धृत्वा इदमूचे—"वत्स नृपवचनमुल्लंघयितुं नो शक्यते तस्मात्त्वया कियन्ति दिनानि नृपसमीपे स्थातव्यं। अधृतिर्नो कार्या"। वनराजेनोक्तं—'आम तात प्रमाणं'। तदा केशवसार्थवाहो राजानमापृच्छ्य सुतमालिंग्य स्वोत्तारकं ययौ। राजापि बहिर्मुदिताननः कुमारं करे कृत्वाऽवोचत्—'वत्स त्वया काऽप्यधृतिर्न कार्या'। वनराजेनोक्तं—'राजेन्द्र तव समीपे स्थितस्य किं मम दुःखं'। नृपो वनराजं स्वसमीपे स्थापयित्वा कतिपयग्रामान् तुरंगांश्च निजपदातीन् समर्प्य दंडनायकपदवीं ददौ। सोऽप्युत्कटो जातः। नृपसेवकान् सर्वानावर्जयामास। सर्वोऽपि नृपपरिवारोऽपि

स्वशीकृतः । सार्थवाहोऽपि बहुधनं प्रेषयति । स वनराजस्तत्र स्थितः सुखं भुनक्ति । एकदा राज्ञा निजांगजो नृसिंहो देशोपद्रवकारिणं सामन्तमेकमुच्छेत्तुं प्रेषितः । वनराजोऽपि संग्रामाय भूभुजा कुमारसार्थे प्रेषितः । उभावपि कुमारौ ससैन्यौ समुदितीभूय चलितौ । द्वयोरपि सैन्यं दुर्गं वेष्टयित्वा निशायां तस्थौ । " भो निर्याहि निर्याहि । किं दुर्गं प्रविश्य स्थितोऽसि । अरेऽधमाधम देशविध्वंसपापस्य फलं गृहाण " । तं कोलाहलं तुमुलं श्रुत्वा सोऽपि सामन्तनृपः सज्जीभूतः पुरमध्यस्थितो युद्धमारेभे । बहिर्मंडितयंत्रोत्थस्थूलपाषाणगोलकैर्वज्रसंपातदारुणैर्गोफण्या गोलैः प्राकारं खंडयित्वा बहिःस्थितैर्भटैस्तत्पुरं हतप्रहतं चक्रे । वनराजेन स सामन्तो बद्ध्वा नृसिंहकुमारस्य समर्पितः । अहो धैर्यमहो धैर्यमिति सर्वत्र वनराजस्य ख्यातिर्विस्तीर्णा । नृपोऽपि पृष्ठलग्नस्तत्र समागतः । वनराजस्य प्रसिद्धिं श्रुत्वा चकितः—' संग्रामेऽप्ययं न मृतः ' । किंचित्कार्यं समुद्दिश्य नृसिंहकुमारो वनराजसहितः स्वनगरे प्रेषितः । राजा स्वयं तत्रैव स्थितः । एकदा ' वनराजस्य विषं दातव्यं ' इति स्पष्टं लेखं लिखित्वा नृसिंहकुमारस्यौष्ट्रिकं प्राहिणोत् । शीघ्रं स औष्ट्रिकश्चचाल । यत्र सुन्दरयक्षाधिष्ठिता महाटवी वर्तते तत्र यक्षभवनसमीपे निशायां श्रान्तत्वात् स्थितः । तं लेखं गृहीत्वा यक्षालयेऽस्वपत् । तदा स यक्षोऽवधिनाऽज्ञासीत्—" अरे मदीयपुत्रवनराजस्य वधायायमुपक्रमो कृतोऽस्ति । तथा करोमि यथाऽस्य सुन्दरं भवति " । ततस्तं लेखं समुत्सार्य दैवशक्त्या ' विषं देयं ' इत्यक्षरावलीं प्रमार्ज्य ( प्रमृज्य ) ' विषा इति नाम पुत्री शीघ्रं वनराजस्य दातव्या ' इति लेखे लिलेख । औष्ट्रिकः प्रातरुत्थाय पुरे गत्वा नृसिंहकुमारं लेखमार्पयत् । नृसिंहोऽपि लेखमवाचयत् । कुमारोऽपि वनराजस्य समीपे लेखस्वरूपं कथयित्वा विवाहसामग्रीविधिं चिनोति । उच्छलत्तूर्यनादैन महाधवलमंगलैः नृपपुत्रीं विषां वनराजः परिणिन्ये । वनराजस्तया विषया महात्यन्तं शुशुभे । कतिपयैर्वासरै-

नृपोऽपि पुरे समाययौ । कन्यापाणिग्रहणमहोत्सवं कुमारी व्यजिज्ञपत् । धनराजस्य विवाहं ज्ञात्वा नृपो दध्यौ—" अरे दैव त्वया किं कृतं ? एवं मार्यमाणोऽपि यदेष भृशमेधते । अथवा किं मुधा दैवोपालंभेन । पुनरपि प्रतीकारं करिष्ये " । इति ध्यात्वा कथितं—' साधु साधु कृतं ' । वनराजस्तया कान्तया सह सुखं भुनक्ति । पुनः पुनर्नृपस्तस्य वधार्थमुपक्रमं करोति । एकदा निर्व्यंजने निज-मातंगौ समाकार्य शिक्षयामास—" अरे अद्य मध्ययामिन्यां पुरद्वारवासिनीकुलदेवतापूजनार्थं सोपस्करो य आयाति स हन्तव्य एव " । इति तौ तत्र प्रहीय सन्ध्यासमये वनराजं समाकार्य प्रच्छन्नमिदमब्रवीत्—" वत्स त्वं यदा संग्रामार्थं चलितस्तदा मया द्वार-वासिन्या देवताया अर्चनं मानितमभूत् । तदद्य मध्यनिशायां तस्या अर्चनं कार्यं यथाहमनृणीभवामि " । ततो वनराजो द्वियामसमये निशि प्रदीपपूजोपस्करं करे कृत्वाऽचलत् । तदावसरे निजावासवातायनस्थेन नृपपुत्रेण नृसिंहकुमारेण प्रदीपहस्तो वनराजो दृष्टः, दीपोद्योतेनोपलक्षितः । नृपपुत्रस्तत उत्तीर्य वनराजं पप्रच्छ—' किमिदं ? ' । सोऽपि सत्यमचीकथत् । कुमारेण वनराजकरात्प्रदीप-पूजोपस्करमादायोक्तं—' त्वं गृहे याहि, यास्येऽहं स्वयं द्वारवासिन्यार्चायै ' । इत्युक्त्वा एकाग्रमानसो यावद्गच्छति तावन्नृपादिष्टनि-पादाभ्यां स कुमारः खड्गैर्हतः । कलकलरवो जातः । तन्निरीक्ष्य जना नृपं निवेदयामासुः । नृपस्तुष्टः । तत्र विलोकनाय नृपः ' कि-मस्ति ? किमस्ति ? ' इति ब्रुवन् गतः, तावत्तत्र निजांगजः पतितो दृष्टः । तदा नृपो विललाप—' हा वत्स किं जातं ? त्वदर्थं सर्वं मया कृतं तत्सर्वं ममैव जातं ' । इत्यादि बहु विलप्य निजपुत्रस्य वह्निसंस्कारं विधाय वनराजमब्रवीत्—' वत्स तव भाग्यं वज्रोपमं, पुरोधसो वचनं सर्वं सत्यमेव, त्वं भाग्याधिकः ' । जन्मवासरात्सकलोऽपि वृत्तान्तो वनराजस्य नृपेण कथितः । " अथ त्वया ममाप-राधः क्षन्तव्यः । अथ त्वं राज्यं गृहाण । तव भाग्यैस्तव राज्यं समर्पितं । अहं तु प्रव्रज्यां ग्रहीष्ये " । इत्युक्त्वा शुभमुहूर्ते नृपो

वनराजं स्वकीयसिंहासने निवेश्य राज्यं दत्वा स्वयं वने गत्वा प्रव्रज्यां जग्राह । अथ वनराजभूपालः सूर्यवत्स्वप्रतापेन शोभां प्राप्नोति, प्रजां पालयति, न्यायेन राज्यं करोति । अन्यदा नन्दनोद्याने नन्दनाचार्यश्चतुर्ज्ञानधरः समवासार्षीत् । नृपोऽपि परिवारसहितस्तं वन्दितुं ययौ । मुनीश्वरं वन्दित्वोचितासने उपविश्य तदुपदेशं श्रुत्वा नृपः प्राच्यभवं पप्रच्छ—'भगवन् प्राच्यभवे मया किं सुकृतं कृतं, येनैतदद्भुतं राज्यं प्राप्तं ?' । ज्ञानातिशयसंपन्नो मुनिर्मधुरध्वनिना कथयामास—"हे राजंस्त्वया पूर्वजन्मनि श्रद्धया जिनस्य भावेन स्तुतिपूजा कृता । तेन कारणेन त्वया प्राज्यं राज्यं प्राप्तं । यत्तु मनसा चिन्तितं स्तुतिमात्रेण मम किं लाभो भविष्यति न वेति संदेहे किंचिदन्तरेऽन्तरे सौख्यमुत्पन्नं । अन्तकाले तु चिन्तितं 'सुकुलेन किं ? भाग्यमेव प्रशस्यते, तेन दासीकुक्षौ गर्भत्वेनोत्पन्नः' । इति मुनिवचः श्रुत्वा समुत्पन्नजातिस्मरणः पूर्वभवं स्मृत्वा सध्यानमानसो जज्ञे । गृहे गत्वा जिनधर्मं करोति । जिनचैत्यानि नवीनजिनबिंबानि कारयामास । विविधां चाष्टप्रकारां पूजां विशेषतो भावस्तवपूजां मनोहरैः काव्यैर्नवनवैश्छन्दोभिः करोति कारयति च । आवश्यकादिकं करोति । तत्त्वं हृदि व्यभावयत् । अन्तकाले चारित्रं प्रतिपाल्य परमं पदं प्राप्तः । एवमनेके भव्या जिनपूजया पूज्यतां परमपदवीं च प्राप्ताः । तस्माद्भव्याः सर्वथा जिनार्चने प्रयतन्ते । अथ महताडंबरेण किं ? सर्वथा सर्वत्र भाव एव प्रधानः । श्रीउपदेशमालायामपि प्रोक्तम्—

सुग्गइमग्गपईवं नाणं दिंतस्स हुज्ज किमदेयं । जह तं पुलिंदएणं दिन्नं सिवगस्स नियगच्छिं ॥ १ ॥

तथाहि—एकस्यामटव्यां गिरिगह्वरे महानेकः प्रासादोऽस्ति । तत्र शिवस्य प्रतिमा साधिष्ठायिकाऽस्ति । सकलेयमिति मत्वा

कोऽपि विप्रो धार्मिको दूरादागत्य तामर्चयति । स्वच्छजलैः स्नपयित्वा घनचन्दनैर्विलिप्य सुगन्धैः पुष्पैः प्रपूज्य पुरो बलिं ढौकयित्वा प्रधानागरुमुत्क्षिप्य मनोहरं स्तवं कृत्वा मूर्ध्नां नत्वाञ्जलिं बद्ध्वा नित्यमेवं भाषते—

त्वयि तुष्टे मम स्वामिन् संपत्स्यन्तेऽखिलाः श्रियः । त्वमेव शरणं मेऽस्तु प्रसीद परमेश्वर ॥ १ ॥

इति विज्ञप्तिं कृत्वा नित्यमेव स्वगृहे याति । एकदा धार्मिकः स्वां पूजामपनीतां वीक्ष्य पूजयित्वा पूजापहृतिं ज्ञातुं रहः स्थितः । तदैकः पुलिन्दो वामहस्ते धनुःशरं दक्षिणकरे कुसुमानि मुखं जलपूर्णं एवंविधः समागत्य शिवस्य पूजामंह्रिणोत्सार्य गंडूषा च्छंटनं कृत्वा पुष्पपूजां कृत्वाऽनमत् । शिवस्तेन सह वार्तालापं करोति । पुलिन्दो जग्मिवान् । धार्मिको हृद्यदूयत । कोपाच्छिवमुपालेभे—"अहो शिव यादृशः पुलिन्दस्तादृशस्त्वमेव । अशुचिमूर्तिना तेनाधमेन पूजितस्त्वं तेन सह जल्पसि । मम स्वप्नान्तरे नो दर्शयसि" । सुरः प्रोवाच—'कोपं मा कुरु, स्वयमेव ज्ञास्यसि' । दिनाष्टकानन्तरं धार्मिकः शिवमेकाक्षं ददर्श । धार्मिकः [illegible]—'अहो शिवस्य द्वितीयं स्वर्णनेत्रं क्व गतं ? केनापि दुष्टेनापहृतं' । इति विज्ञप्य रहः स्थितः । ततः पुलिन्द आगात् । [illegible] वीक्ष्य भिल्लो निजं चक्षुरुध्धृत्य ददौ । शिवोऽवदत्—अहो सात्त्विक याचस्व' । भिल्लोऽवदत्—'स्वामिंस्तव प्रसादा[illegible]' । पुनः शिवोऽभादीत्—'भोः साधो सात्त्विक मया तव सत्त्वं विलोकितं' । इत्युक्त्वा स्वं नेत्रं प्रकटीकृतं । भिल्लस्य नेत्रं [illegible] । [illegible] गतः । ततः शिवेन धार्मिकस्योक्तं—'त्वया दृष्टं ? वयं देवा भावेन तुष्यामः, बाह्यभक्त्याऽलं' । धार्मिकोऽपि [illegible] ।

अतः [illegible] धनेऽपि भावात्सिद्धिर्जायते, इति ज्ञात्वा श्रीजिनधर्मे उद्यमो विधीयतां । इत्यादिदेशनां दत्वा गण-

भूद्विरतः। सर्वे जनाः श्रीपार्श्वजिनं प्रणम्य निजं निजं स्थानं ययुः। अथ धरणेन्द्रो दिव्यनाटकमकरोत्। भगवत्सेवकोऽभूत्। पार्श्वयक्षोऽधिष्ठायकोऽभूत्। स्वर्णवर्णा प्रभावाढ्या कुर्कुटोरगवाहना पद्मावती शासनदेव्यभूत्। ततोऽनन्तरं श्रीपार्श्वजिनः स्वर्णांभोजेषु पादौ दधत् धरणीतले विजहार। खे दुन्दुभिध्वनिः धर्मचक्रं छत्रं चामरे पुरतः पृष्ठे भामंडलं, एवंविधैः पदार्थैर्भगवानुपशोभितः।

सकलकुशलवल्लीवर्धने मेघतुल्यो, भविककमलहेलिः सौख्यसंपत्प्रवालः।
सुखजलनिधिचन्द्रो देवदेवेन्द्रवन्द्यो, वितरतु विजयं नः पार्श्वनाथो जिनेन्द्रः ॥१॥

॥ इति श्रीहेमसोमसूरिविजयराज्ये पूज्य पं० संघवीरगणिशिष्य पं० उदयवीरगणिविरचिते
श्रीपार्श्वनाथगद्यबन्धलघुचरित्रे भगवद्गणधरदेशनावर्णनो नाम सप्तमः सर्गः ॥

श्रीपार्श्वनाथचरित्रस्य सप्तमः सर्ग एव च।
पंडितोदयवीरेण गद्यबन्धेन निर्मितः ॥१॥

# अथाष्टमः सर्गः ।

विश्वत्रयाधारजिनं प्रणम्य श्रीपार्श्वनाथं सुरनाथनाथम् ।

सद्ग्रन्थवन्धेन गुरुप्रसादाद्वक्ष्येऽष्टमं सर्गमहं प्रधानम् ॥ १ ॥

विश्वत्रयस्वामी त्रिजगद्गुरुः श्रीपार्श्वनाथः पार्श्वयक्षेण सेवितः सर्पलाञ्छनोऽष्टमहाप्रातिहार्यैर्विराजमानश्चतुस्त्रिंशदतिशयैर्भ्राजमानः पञ्चत्रिंशद्वाग्गुणै राजमानो विहारं कुर्वन्नेकदा पुंड्रदेशे साकेतनपुरे आम्रोद्यानवने समवासार्षीत् ।

इतश्च पूर्वदेशे ताम्रलिप्त्यां नगर्यां सुधीः सागरदत्ताख्यः सार्थवाहो युवाऽभूत् । स तु प्राग्भवे विप्रोऽभूत् । पत्याऽन्यासक्तया विषं दत्त्वा वहिः क्षिप्तः । कृपानत्या गोकुलिन्या जीवितः । स तु वैराग्यात्परिव्राड् भूत्वा मृत्वा सागरदत्तोभूत् । स समुत्पन्नजातिस्मरणः सर्वथा सर्वस्त्रीषु विरक्तः । गोकुलिन्यपि मृत्वा तत्रैव महेभ्यस्य सुता रूपाढ्याभूत् । सा सागरदत्तार्थे बन्धुभिर्वृता । स तस्यां विषये मनो नाकरोत् । सा स्त्री शशीवामन्यत । सा कन्या तं वरं तादृशं मत्वा श्लोकमेकं पत्रे लिखित्वा प्रैषीत् । यथा—

"कुलीनामनुरक्तां च किं स्त्रीं त्यजसि कोविद । कौमुद्या हि शशी भाति विद्युताब्दो गृही स्त्रिया ॥ १ ॥

सागरदत्तस्तं श्लोकं वाचयित्वा प्रतिश्लोकमेकं प्रैषयत्—

"स्त्री नदीवत्स्वभावेन चपला नीचगामिनी । उद्वृत्ता च जडात्मासौ पक्षद्वयविनाशिनी ॥ १ ॥ "

तं श्लोकं सा कन्या वाचयित्वा मनसि दध्यौ—'नूनमसौ प्राच्यजन्मजं स्त्रीदोषं स्मरति' । ततः पुनः सा श्लोकं प्रैषीत् । सोऽप्यवाचयत् । तद्यथा—

" एकस्या दूषणे सर्वा तज्जातिर्नैव दुष्यति । अमावास्येव रात्रित्वात्त्याज्येन्दोः पूर्णिमाऽपि किम् ? ॥१॥"

इति तस्याः प्रतिबोधेन वैदग्ध्येन च रञ्जितः सागरो विवाहं चक्रे । तया सह भोगान् बुभुजे । ततः सागरदत्तोऽम्बुधौ जलाध्वना सप्त वारान् व्यवहर्तुं प्रचक्रमे । सप्त वारानपि यानपात्रमभज्यत । असौ पुण्यैर्लोकैर्हस्यते । स मनसि दध्यौ—'किं करोमि ? धिगस्तु मे जन्म' । इति किंकर्तव्यतामूढोऽभवत् । इतस्ततो ग्रामेषु भ्रमन् सोऽन्यदा कूपादंभोऽकर्षयत् । सप्त वारान् जलं नागात् । अष्टमवारे जलमागतं । तद्दृष्ट्वा सोऽस्मरत्—'सप्त वारान् यानभंगोऽभवत्, पुनरष्टमवारं विलोकयामि' । इति ध्यात्वा शुभशकुनैः सिंहलद्वीपं मति पोतेन चचाल । स सुवातवशात् क्रमेण सिंहलद्वीपाद्रत्नद्वीपे गतः । तत्र बहूनि रत्नानि संगृह्य स्वनगरं प्रति प्रतस्थौ । स रत्नलुब्धैर्नियामकैर्निशि वारिधौ क्षिप्तः । स दैवयोगात् फलकं प्राप्य तटेऽगात् । क्रमेण स भ्रमन् पाटलीपुरे प्राप्तः । तत्र वाणिज्यागतेन श्वशुरेण दृष्टः' । ततोऽसौ स्वोत्तारके नीतः स्नातो भुक्तः । स सर्वोदन्तं कथयति । श्वशुरेण तत्र स्थापितः । सोऽप्यस्थात् । क्रमेण दैववशात् कतिपयवासरैर्यानमपि तत्रागात् । ते निर्यामकाः सागरेण राजाज्ञया रोधिताः । रत्नान्यादाय मोचिताः । सागरः स्वगृहेऽगात् । विशेषार्जितधनः सागरदत्तो दानभोगाद्धनं सफलं चकार । स तु क्रमेण विप्राणां योगिनां चान्यदर्शनिनामपि आहारवस्त्रदानं ददाति । तान् पृच्छति—' को देवः को गुरुश्च मुक्तिदायी ? ' । ते सर्वेऽपि पृथक् पृथक् वदन्ति । स सागरदत्तः संशये पतितः—

'कं धर्मं करोमि ? कः सत्यवादी ? यस्मादहं धर्मं लेभे'। नानाविधशास्त्राणां श्रवणं करोति। एकदा वने शरीरचिन्तार्थं गतः। तत्रैकं साधुं ध्यानस्थितं दृष्ट्वा सागरो वन्दते स्म। तमभिवन्द्य पृच्छति—'स्वामिन् को देवः ? को गुरुः ? को धर्मः। के यूयं ? मम सर्वं सत्यं कथय'। ततः साधुः कायोत्सर्गं पारयित्वा तमवादीत्—"भो महानुभाव अहमनगारो राज्यं त्यक्त्वा परिव्रज्यां गृहीत्वा सिद्धध्यान करोमि। अहं तव सत्यं कथयामि, परं मम ध्यानभंगो भवति। कल्येऽत्र श्रीपार्श्वजिनेंद्रस्त्रयोविंशतितमो जिनेंद्रः समवसरिष्यति। तमभिवन्द्य प्रश्नं कुरुष्व"। तन्निशम्य मुदितो गृहे प्राप्तः। द्वितीये प्रभुः पार्श्वनाथस्तत्र समवासार्षीत्। नृपादिपौरा जिनागमनं ज्ञात्वा जिनवन्दनाय जग्मुः। स सागरोऽपि हर्षितो जिनवन्दनाय गतः। भगवानपि लाभं ज्ञात्वा सागरमुद्दिश्य धर्मदेशनां प्रारेभे। देवतत्त्वगुरुतत्त्वधर्मतत्त्वभेदान् प्रकाशयति। सागरश्चैकमनाः शृणोति। श्रीपार्श्वो भगवान् सागरस्य धर्मसंशयं छिनत्ति। सागरो धर्मं शृण्वन् वैराग्यं प्राप्तः भगवतश्चरणौ ननाम। तत्रैव शुभवासनया शुक्लध्यानं ध्यायन् केवलज्ञानं प्राप। यतिवेषमंगीकृत्य केवलिसभायामुपविष्टः। स तु क्रमेण सिद्धः। भगवता संसारात्तारितः। एवंविधः परोपकारी श्रीपार्श्वजिनेन्द्रः॥

अथ प्रभोः शिष्याश्चत्वारः शुद्धवंशोद्भवाः शिवसुन्दरसोमजयाह्वा मुनयश्चिराचीर्णव्रता भूरिश्रुतपाठका भगवन्तं प्रणम्येदं व्यजिज्ञपन्—'हे भगवन् अस्माकमस्मिन् भवे सिद्धिर्भविता न वा ?'। प्रभुर्जगाद—'यूयं चरमदेहा अस्मिन् भवे सेत्स्यथ'। ततस्तैश्चिन्तितं—"चेदस्मिन् भवेऽस्माकं सिद्धिः कथिता तदा देहे कष्टं किं वृथा क्रियते ? स्वेच्छया भुज्यते पीयते स्थीयते। बौद्धदर्शनेऽप्युक्तमस्ति। तथाहि—

मनोज्ञं भोजनं भुक्त्वा मनोज्ञशयनासनः। मनोज्ञभवने तिष्ठन्मनोज्ञं धार्यते व्रतम्॥ १॥

दुग्धं मृद्वी प्रगे पेया भक्तं मध्ये परेऽहनि। पानकं शर्करा द्राक्षा नक्तमन्ते पुनः शिवम्॥ २॥

इति। तथैव दिनान् वाहयाम। कष्टकरणेन किं कार्यं"। इति निर्णीय ते साधवोऽन्यत्र गत्वा तथैव कालं निन्युः। अन्यदा कियता कालेन तेषामासन्नमोक्षत्वान्मनसीदं समुत्पन्नं—"अहो त्रैलोक्याधारं श्रीजगद्गुरुं श्रीपार्श्वनाथं गुरुं प्राप्यास्माभिरात्मा शिथिलीकृतः। सच्चारित्रजलेऽस्माभिः स्नात्वा कुमतिकुसंसर्गरजस्यात्मा लोठितः। प्रमादवशादस्माकं का गतिर्भविता। वयमनन्यशरणाः"। तत्रैव स्थितास्ते चिन्तयन्ति—'भगवन् त्वमेव शरणं प्रभोऽधुना भगवन् कृपयाऽस्माकमालंबनं देहि'। ते तु तदा चत्वारोऽपि क्षपकश्रेणिमारुरुहुः। श्रीपार्श्वनाथध्यानप्रभावात्केवलज्ञानं प्राप्य सिद्धिपदं प्रापुः। अहो प्रभुध्यानप्रसादः। एवंविधो भगवान् परोपकारी॥

इतश्च नागपुर्यां धनपतिव्यवहारी धनी वसति। तस्य बन्धुदत्तनामांगजोस्ति। स पित्रा वसुनन्दसुतां चन्द्रलेखां परिणायितः। सा कंकणहस्तैवाहिना दष्टा निशि मृता। एवं तस्य षड् भार्या ऊढमात्रा मृताः। तस्य बन्धुदत्तस्य प्रसिद्धिर्जाता—'विषहस्तः विषवरः'। तस्य पुनः कोऽपि कन्यां न ददाति। कृष्णपक्षचन्द्रवत्स दिने दिने क्षीयते। जनकस्तं तादृशं विषण्णचित्तं वीक्ष्य यानं संवाह्य सुतं प्रैषीत्। सोऽपि पित्राज्ञया द्वीपान्तरे गत्वा भूरिस्वमार्जयत्। बहुलाभेन संतुष्टः। स्वपुरीं प्रतस्थे। तस्य गच्छतो दुर्वाताद्वार्धौ यानमभज्यत। स काष्ठफलकं प्राप्य रत्नद्वीपं प्राप। स पादचारी फलाहारी रत्नाद्रिं ययौ। तत्र रत्नाद्रौ रत्नानि गृह्णन् महारत्नमयं प्रासादं ददर्श। तत्र चैत्ये प्रविश्य श्रीनेमिनाथबिंबमानमत्। जिनमानम्य बहिस्तरुच्छायास्थितान् शुक्लध्यानं ध्यायमानान् मुनीन् ववन्दे। स्वोदन्तः सर्व आख्यातः। तेष्वाद्यमुनिना स प्रतिबोध्य जिनधर्मे द्रढीकृतः। तत्र जिनधार्मिक-

चित्रांगदखेचरो मुनिवन्दनार्थं समेतोऽस्ति। स बन्धुदत्तोपरि साधर्मिकतया प्रीतः। तमामंत्र्य स्वगृहे नीतवान्। तत्र बन्धुदत्तस्य स्नानमज्जनभक्तिभोजनं कारयित्वाऽवदत्—" त्वं मम धर्मबान्धवः साधर्मिकोसि। तवाकाशगामिनीं विद्यां ददामि कन्यां वा ददामि"। ततो बन्धुदत्तेनोक्तं—' अहं सामान्यो वणिग् व्यापारी विद्यया किं करोमि ? इत्युक्त्वा तूष्णीं स्थितः। तदा खेचरो दध्यौ—"नूनमेष बन्धुदत्तः कन्यामिच्छति। या सुरूपायुष्मती च कन्या भवति साऽस्मै प्रदातव्या। सा क्वास्ति ?"। तदा तस्य भगिनी सुवर्णलेखास्ति, तयोक्तं—" कौशांब्यां नगर्यां मम सखी जिनदत्तश्राद्धस्य पुत्री प्रियदर्शनाभिधा कुमारिका सुरूपायुष्मती चास्ति। तस्याः पित्रा चतुर्ज्ञानी मुनिः पृष्टः—इयं कन्या कीदृशी भविष्यति। ज्ञानिनोक्तं—इयं कन्या पाणिग्रहणं कृत्वा सुतं प्रसूय चारित्रं ग्रहीष्यति। तदा मया श्रुतं। तस्मात्सैवैतस्य दातव्या"। तदा चित्रांगदविद्याधरो मित्रविद्याधरैः परिवृतो बन्धुदत्तयुतः कौशांब्यां गतः। तत्र श्रीपार्श्वनाथप्रासादं ददर्श। तन्मध्ये प्रविश्यानमत्। श्रीपार्श्वनाथप्रतिमाग्रे बन्धुदत्तः स्तौति। तथाहि—

जय त्रिभुवनोत्तंस पार्श्वनाथ जिनेश्वर। सुरासुरनत स्वामिन्नमेयमहिमांबुधे॥ १॥
रोगानलजलव्यालचोरारिश्वापदापदः। वहिरन्तरपि स्वामिन्न भिये त्वयि वीक्षिते ॥ २ ॥

इत्यादिस्तुतिपाठपरे बन्धुदत्ते सति जिनदत्तः पूजायै तत्रागात्। तत्र खेचरान् बन्धुदत्तसाधर्मिकं च वीक्ष्य जिनदत्तः प्रमोदं प्राप्तः। तानामंत्र्य गृहे नीत्वा बहुस्वागतं कृतवान्। स्नानभोजनादिभिस्ते सत्कृताः। तेन ते पृष्टाः—' किमर्थमत्र समेताः ?'।

तैरुक्तं—' वयं तीर्थवन्दनार्थमत्रागताः '। पुनर्जिनदत्तेनोक्तं—'मदुचितं कार्यमादिशत '। तैरुक्तं—" वयं खेचराः, वन्धुदत्तो भूचरः, त्वमपि भूचरः, बन्धुदत्तस्य तव पुत्रीं प्रियदर्शनां देहि। अयं महानुभावो धर्मिष्ठश्च "। ततो जिनदत्तो धर्मरञ्जितः स्वपुत्रीं बन्धुदत्तस्य पर्यणाययत्। खेचरा हृष्टाः स्वस्थानं जग्मुः। बन्धुदत्तः सप्रियस्तत्रैवास्थात्। तया सह पञ्चेन्द्रियविषयसुखानि बुभुजे। धर्मकृत्यानि सामायिकप्रतिक्रमणपौषधादीन्यपि करोति। क्रमेण कियता कालेन सा गुर्विणी जाता। तया गुर्विण्या सह बन्धुदत्तः श्वशुरमापृच्छ्य स्वां पुरीं प्रति प्रस्थितः। स्तोकसार्थेन सह चलितः। क्रमेण स भीष्माटवीं ययौ। त्र्यहेणोल्लंघ्यैकस्य सरसस्तीरे समागमत्। तदा भवितव्यतावशाच्चंडसेनाभिधस्य पल्लीशस्य भिल्ला यमदूता इवाकस्मात्तस्मिन् सार्थेऽपतन्। ते भिल्लाः सार्थस्य सर्वस्वं प्रियदर्शनां च गृहीत्वा गताः। ते दुष्टास्तस्य सार्थस्य सर्वस्वं प्रियदर्शनां च चंडसेनपल्लीशस्यार्पयत्। पल्लीशस्तां सुरूपां दृष्ट्वा हृष्टः सन् चिन्तयामास—' अहमेतां मुख्यस्त्रीं करिष्ये '। तेन सा पृष्टा—' भद्रे त्वं कासि ? कस्य सुता ? किं नाम ? '। तयोक्तं—'अहं कौशांव्यां जिनदत्तश्रेष्ठिनः पुत्री प्रियदर्शना '। तन्निशम्य स ऊचे—'अहो एवं चेत्तर्हि त्वं मम भगिनी। त्वं ममोपकारकसुता। शृणु, एकदा चौरैः परिवृतोऽहं सायं कौशांव्या बहिर्मद्यं पिबन् तलवरैर्निरीक्ष्य धृतः। तदान्ये भिल्लाः पलायांचक्रुः। अहमेकाकी राज्ञे समर्पितः। राज्ञ आज्ञयाऽहं वधार्थं नीयमानस्त्वत्पित्रा पौषधान्ते निजं गृहं गच्छता नृपं विज्ञप्य मोचितः। अतः कारणात्त्वं मम भगिनी। वद तवाहं किं करोमि ? "। तेनेत्युक्ते साऽब्रवीत्—" हे बान्धव तव धाट्या वियोजितं मे पतिं बन्धुदत्तं शोधयित्वा समानीय दर्शय "। तदा पल्लीशोऽपि तां भगिनीमिव मत्वा गृहे मुक्त्वा तत्पतिशोधनाय ययौ। स बहु भ्रान्त्वा बन्धुदत्तमसंप्राप्य स्वगृहमागतः। पुनः सर्वत्र भिल्लान् प्रेषयामास। तदा तत्र प्रियदर्शना सुतमसूत। ते भिल्लाः परिभ्रमंति, परं क्वापि स बन्धु-

दत्तो न प्राप्तः। एकदा पल्लीशेन स्वकुलदेवताग्रे प्रोक्तं—" मातर्यदि मासमध्ये प्रियदर्शनापतिर्बन्धुदत्तो मिलिष्यति, तदाऽहं तव दशभिर्नरैर्बलिं दास्ये "। क्षेमेण पञ्चविंशतिर्दिना व्यतिक्रान्ताः। बन्धुदत्तो न प्राप्तः। तथापि बलियोग्यान्नरानानेतुं भृत्यान् दिशो दिशं पल्लीपतिः प्रैषीत्। इतश्च बन्धुदत्तोऽपि प्रियाविरहाद् दुःखसंतप्तः सर्वत्र भ्रमन् हिंतालपर्वतवने प्राप्तः। तत्रैकः सप्तच्छदद्रुमो महानुच्चैस्तरुर्दृष्टः। तं दृष्ट्वा बन्धुदत्तेन चिन्तितं—" मां विना प्रियदर्शना क्षणमात्रमपि न जीवेत्। मृता भविष्यति। मम जीवितेन किं? तदहमपि म्रिये "। इति निश्चित्य तस्मिन् द्रुमे यावद्गलपाशः क्षिपति तावत्सरस्तीरे हंसीवियोगिनं हंसं ददर्श। स हंसः सर्वत्र भ्रमन् पद्मच्छायानिलीनां हंसीं ददर्श। तया मिलित्वा स सुखी जातः। तत्कौतुकं दृष्ट्वा बन्धुदत्तोऽचिन्तयत्—" जीवतां नृणां संयोगो भवतीति मृत्युना किं? पुनरपि विलोकयामि। निःस्वोऽहं स्वपुरीं कथं यामि?। विशालायां पुर्यां मम मातुलोऽस्ति, तस्माद् द्रव्यं गृहीत्वाऽहं निजां प्राणप्रियां शोधयित्वा मोचयामि। पश्चादहं स्वगृहाद् द्रव्यं दास्ये"। इति ध्यात्वा द्वितीयेऽह्नि विशालां पुरीं प्रति चलितः। तावन्मार्गे गिरिपुरनगरासन्ने यक्षालये श्रान्तत्वाद्विश्रामार्थं निशायां स्थितः। तावदेकः पथिकोऽपि विश्रामार्थं तत्र रजन्यां स्थितोऽस्ति। बन्धुदत्तेन पथिकः पृष्टः—' भोः पान्थ बान्धव त्वं कुतः समागतः?' तेनोक्तं—' अहं विशालायाः पुर्याः समागतः'। बन्धुदत्तेनोक्तं—' तत्र मम मातुलो धनदत्तः श्रेष्ठी वसति, तस्य कुशलमस्ति?'। पान्थः स्माह—' भोः पथिक तव मातुलो धनदत्तो राज्ञा रक्षितोऽस्ति। गुप्तिगृहे सकुटुंबः स्थापितोऽस्ति'। तदा बन्धुदत्तेनोक्तं—'कस्मात् कारणाद्रक्षितोऽस्ति?'। पुनः पथिकेनोक्तं—'ग्रामेशो नरपतिरन्येद्युरेकस्मिन् वने क्रीडां कृत्वा पश्चाद्वलन् तत्र मातुलपुत्रेण व्यग्रत्वान्न ज्ञातः, अतो नोत्थितः। तस्मान्नृपः क्रुद्धः। तदा मातुलो धनदत्तः कस्मिन्नपि ग्रामे गतोऽभूत्। पुत्रो रक्षितः। पश्चाद्धनदत्तेन ग्रामा

दागतेन कोटिसंख्यं द्रव्यं दत्वा मोचितः । दंडावशेषधनग्रहणार्थं धनदत्तो निजं भागिनेयं बन्धुदत्त समुद्दिश्य हास्तने दिने गृहादचलत्" । तन्निशम्य बन्धुदत्तोऽचिन्तयत्—"अहो मदीयकर्मणां गतिर्विषमा । यतः—

इतो न किंचित्परतो न किंचिद्यतो यतो यामि ततो न किंचित् ।
यदेव कार्यं प्रकरोमि किंचिन्न तत्कदा सिध्यति कर्मयोगात् ॥ १ ॥

अथाहं किं करोमि ? क गच्छामि ? "। इति विमृश्य मातुलग्रामसंमुखं चलितः । तदा तस्य पथि गच्छतो मातुलो मिलितः । अन्योऽन्यमालिंगनेन सस्नेहं मिलितौ । स्वकीयस्वकीयोदन्तं कथितवन्तौ तौ दुःखिनौ जातौ विमृष्टवन्तौ च । तदाऽकस्माद्दलिनरेक्षिभिः पल्लीशनरैः तौ पथि दृष्टौ । धृत्वा बलिहेतवे नीतौ । अन्येऽप्यष्टौ पुरुषा मार्गाद्धृत्वा समानीताः । तदा मासो जातः । पल्लीशेनोक्तं—" अद्य मासिकस्यावधिर्जातः, बन्धुदत्तो न प्राप्तः, परंतु ये नरा देव्या मानिताः सन्ति तेषां बलिर्दातव्यः " । इति विमृश्य पल्लीशेनोक्तं—' भो भो भृत्यजना नराणां बलिं देव्यग्रे ददत '। तदा प्रियदर्शनां सपुत्रामानाय्य देव्यै प्राणमयत् । तदा प्रियदर्शना दध्यौ—" हा हा महत्कष्टं । अहं श्रावककुले जाता । मदर्थमेते नरा हन्यन्ते । पल्लीशो वारितोऽपि नोपशाम्यति " ततो बन्धुदत्तोऽप्यासन्नमृत्युं ज्ञात्वा परमेष्ठिनमस्कारोच्चारमारभत । क्षमति क्षामणां करोति । तदनु श्रीपार्श्वनाथस्य नाम बाढस्वरेणोच्चरति । श्रीपार्श्वनाथाभिधानप्रसादात् खड्गो न लगति । यथा यथा श्रीपार्श्वनाथनाममंत्रं स्मरति तथा तथा बाढं मुक्तोऽपि खड्गघातो न लगति । तस्य मातुलस्यापि भगवतः प्रभावात् खड्गो न लगति । तदा भृत्यैरागत्य पल्लीशस्योक्तं—' स्वा-

मिन्नेकस्य वैदेशिकनरस्य बाढं मुक्तोऽपि खड्गो न लगति'। तदा पल्लीशेनोक्तं—'तमानयन्तु'। सोऽप्यानीतः। तत्र प्रियदर्शना समुपविष्टाऽस्ति। तयोपलक्षितः। बन्धुदत्तोऽपि निजां प्रियां वीक्ष्य मुदितः। तयोरन्योऽन्यं मुदितयोर्हर्षाश्रूणि नेत्रे अमुंचतां' तदा पल्लीशेनोक्तं—'किमेतत्?'। प्रियदर्शनया कथितं—'ममायं पतिः'। तदा पल्लीशेन बन्धुदत्तः समालिंगितः। महानादरः कृतः। 'कोऽन्यः' इति पल्लीशेन पृष्टे बन्धुदत्तेनोक्तं—'ममायं मातुलः'। अन्येऽष्टौ बन्दिनरा मोचिताः। दिनाष्टकं तत्र सप्रियो बन्धुदत्तः स्थितः। पल्लीशेन गौरवितः। एकदा पल्लीशेन बन्धुदत्तः पृष्टः—"भो बन्धुदत्त मम महान् विस्मयोऽस्ति। त्वं सत्यं कथय। तव कर्कशः कठिनः खड्गप्रहारो बाढं मुक्तोऽपि न लग्नस्तत्र किं मंत्रप्रभाव ओषधिप्रभावो वा?"। तदा बन्धुदत्तोऽवदत्—'स्वामिन्नायं मंत्रप्रभावः न चौषधिप्रभावः। अत्र मम देवगुरुप्रभावः'। पल्लीशोऽवक्—'तव को देवः? कश्च गुरुः?'। तदा बन्धुदत्तोऽवदत्—"स्वामिन् शपथपूर्वं सत्यं शृणु। मम देवः श्रीपार्श्वनाथः। गुरुरपि श्रीपार्श्वनाथः। खड्गप्रहारस्य रोधने किमाश्चर्यं? अन्यान्यपि बहूनि विघ्नानि श्रीपार्श्वनाथनामप्रसादात्क्षयमुपयान्ति"। पुनः पल्लीपतिः प्रोवाच—'स देवः कीदृशः क्वास्ति?'। बन्धुदत्तोऽवदत्—"तं श्रीपार्श्वनाथप्रभुमिन्द्रादिदेवा नरेन्द्राश्च सेवन्ते। प्राकारत्रयच्छत्रविराजमानः सचामरोपशोभितो भगवानधुना नागपुर्यां संव्यनहरति। अनन्तकोटिभवसंदेहान् भगवान् भनक्ति। तन्नामप्रसादान्मनोवांछितपदार्थाः प्राप्यन्ते"। तन्निशम्य पल्लीशः प्रोचे—'तस्य दर्शनं मम कारय, यथाहं कृतार्थो भवामि'। बन्धुदत्तेनोक्तं—'एवमस्तु'। तदा पल्लीशः, स्त्रीयुक्तो बन्धुदत्तः, बन्धुदत्तस्य मातुलो धनदत्तश्च ते त्रयोऽपि महर्ध्या चेलुः। क्रमेण ते नागपुर्यां प्रापुः। यत्र त्रिजगतीपतिश्रीपार्श्वनाथस्य समवसरणमस्ति तत्र गत्वा भगवन्तं ववन्दिरे। तत्र भगवान् देशनामादिदेश। तत्र बन्धुदत्तो देशनां श्रुत्वा भगवन्तं परिपृ-

च्छति—'हे भगवन् केन कर्मणा ममोढमात्रा अपि पण्मिताः प्रिया मृताः ? सप्तम्याश्च विरहोऽभवत् ?"। भगवताख्यायते स्म—"तव पूर्वभवकृतकर्मणः संबन्धं शृणु। विन्ध्याचलपर्वते हिंसापरः पल्लीपतिः शिखरसेनाख्योऽभूद्। तत्प्रिया चन्द्रावतीनाम्नी बभूव। स पल्लीपतिः सप्तव्यसनसेवी अनेकानि पापसहस्राणि करोति। एकदा मार्गभ्रष्टः साधुगच्छस्तत्रागतः। स पल्लीशस्तान् मुनिवरान् दृष्ट्वाऽपृच्छत्—'भो यूयं के ?'। तेऽप्यूचुः—'वयं मुनयो मार्गभ्रष्टा अत्रागताः'। तत्प्रिया चन्द्रावत्यवादीत्—'स्वामिन्नेतान् फलाद्यैर्भोजयित्वाऽध्वनि लगय'। तैरुक्तं—"अस्माभिर्वर्णगन्धादिरहितं फलं चिरकालीनं गृहीतमस्ति। इतरैः कल्पितफलैरस्माकं कार्यं नास्ति। क्षणमेकं तिष्ठ। अस्मदीयं वाक्यं शृणु"। ततः स उपविष्टः। साधवो नमस्कारमादिशन्—"त्वयायं नमस्कारः स्मरणीयः, अथ च त्वया संग्रामं विना कस्यापि घातो न कार्यः"। इत्युक्त्वा ते मुनिवरा अन्यत्र विजन्हुः। पल्लीशेन मार्गे मुक्ताः साधवश्चेलुः। पल्लीशो गृहे गतः। साधूननुमोदयति। अन्येद्युश्चन्द्रावतीप्रियायुक्तः पल्लीशो नद्यां क्रीडां कर्तुं ययौ। तत्र जलपानार्थमागतेन सिंहेनोभावपि भक्षितौ। तावुभावपि तदा नमस्कारध्यानानुभावात्सौधर्मे पल्योपमायुषौ सुरौ जातौ। तत्र देवायुः प्रतिपाल्य ततश्च्युत्वा महाविदेहे चक्रपुर्यां नगर्यां कुरुमृगांकस्य नृपतेर्मीनमृगांकनामा पुत्रो जातः। चन्द्रावतीजीवो दिवश्च्युत्वा भूषणभूपतेर्वसन्तसेनाख्या सुता समजनि। यौवनावस्थायां तयोः पाणिग्रहणं संजातं। तावन्योऽन्यं पूर्वभवस्नेहवशात्परमप्रेमपरायणौ सुखमनुबभूवतुः। मीनमृगांकस्य पिता कुरुमृगांकश्चिरकालं राज्यसुखं भुक्त्वा वैराग्यं प्राप्तः। पुत्रस्य मीनमृगांकस्य राज्यं दत्वा स्वयं वने गत्वा तापसोऽभूत्। मीनमृगांको राज्यं सुखं भुनक्ति। वसन्तसेना पट्टराज्ञी कृता। नृपस्तु यौवनमदमत्तो मृगयाव्यसनसेवी जातः। तिर्यग्वियोजनं कुरुते। तिरश्चां भोगान्तरायं करोति। वृषभाणामश्वानां नराणां च षंढत्वं करोति। एवं स बहुपापव्यसनपरायणो भूत्वा

दाहज्वरोत्पन्नपीडया मृतः । रौद्रध्यानवशात् षष्ठं नरकं ययौ । वसन्तसेनाऽपि चाग्निं प्रविश्य तत्रैव नरके नारकोऽभूत् । तत उद्वृत्य पुष्करवरद्वीपभरते रोरगेहयोः पुनपुत्र्यावजायेतां । तौ मिथः परिणीतौ । ताभ्यामन्यदा साधवो ददृशिरे । ताभ्यां साधवो भक्त्या परमादरादन्नपानैः प्रतिलाभिताः । अपराह्ने चोपाश्रये गत्वा तन्मुखाद्धर्मं शृण्वाते । ततो गृहिधर्मं प्रतिपद्य परिपाल्योभावपि मृत्वा पञ्चमे ब्रह्मदेवलोके सुरौ जातौ । ततश्च्युत्वेमौ युवामिभ्यसुतौ संजातौ । भो बन्धुदत्त भिल्लभवे यत्त्वया तिर्यग्वियोगः कृतः, तत्प्रभावात्त्वया दुःखं प्राप्तं । यानि यानि कर्माणि क्रियन्ते तानि तानि कर्माणि भोग्यकाले प्रकटीभवन्ति । ततो बन्धुदत्तस्य जिनवचनं शृण्वतोऽपीहापोहवशाज्जातिस्मरणं समजनि । पूर्वभवो दृष्टः, तुष्टः, भगवत्पादौ प्रणम्योवाच—" भगवन् यद्भवद्भिरुक्तं तत्तथैव ।
दृष्टः । सर्वं सत्यमेव । अद्यापि मे भाग्यं जागर्ति यद्भगवतश्चरणारविन्दे वन्दिते । अथ मया किं करणीयं किं स्मरणीयं ?" । श्रीभगवानुवाच

"त्यज दुर्जनसंसर्गं भज साधुसमागमम् । कुरु पुण्यमहोरात्रे स्मर नित्यमनित्यताम् ॥१॥

न लंघनीयमौचित्यं मान्यः सेव्यश्च सद्गुरुः । प्रवर्तितव्यं दानादौ भावना मानसीह च ॥२॥

निक्षेपः परिहर्तव्यः प्रक्रम्य योगसिद्धये । नित्यमन्तर्मुखैर्भाव्यं भाव्या वैराग्यभावना ॥ ३ ॥

कार्यो मंगलजापश्च गर्हणीयं स्वदुष्कृतम् । चतुःशरणमाराध्यं कार्यं पुण्यानुमोदनम् ॥ ४ ॥

यतितव्यं परे ज्ञाने विचिन्त्य सन्निदर्शनम् । श्रोतव्यं धर्मशास्त्रं च संसारासारसारता ॥५॥

च्छति—'हे भगवन् केन कर्मणा ममोढमात्रा अपि षण्मिताः प्रिया मृताः ? सप्तम्याश्च विरहोऽभवत् ?"। भगवताख्यायते स्म— "तव पूर्वभवकृतकर्मणः संबन्धं शृणु। विन्ध्याचलपर्वते हिंसापरः पल्लीपतिः शिखरसेनाख्योऽभूद्। तत्प्रिया चन्द्रावतीनाम्नी बभूव। स पल्लीपतिः सप्तव्यसनसेवी अनेकानि पापसहस्राणि करोति। एकदा मार्गभ्रष्टः साधुगच्छस्तत्रागतः। स पल्लीशस्तान् मुनिवरान् दृष्ट्वाऽपृच्छत्—'भो यूयं के ?'। तेऽप्यूचुः—'वयं मुनयो मार्गभ्रष्टा अत्रागताः'। तत्प्रिया चन्द्रावत्यवादीत्—'स्वामिन्नेतान् फलाद्यैर्भोजयित्वाऽध्वनि लगय'। तैरुक्तं—"अस्माभिर्वर्णगन्धादिरहितं फलं चिरकालीनं गृहीतमस्ति। इतरैः कल्पितफलैरस्माकं कार्यं नास्ति। क्षणमेकं तिष्ठ। अस्मदीयं वाक्यं शृणु"। ततः स उपविष्टः। साधवो नमस्कारमादिशन्—"त्वयायं नमस्कारः स्मरणीयः, अथ च त्वया संग्रामं विना कस्यापि घातो न कार्यः"। इत्युक्त्वा ते मुनिवरा अन्यत्र विजह्रुः। पल्लीशेन मार्गे मुक्ताः साधवश्चेलुः। पल्लीशो गृहे गतः। साधूननुमोदयति। अन्येद्युश्चन्द्रावतीप्रियायुक्तः पल्लीशो नद्यां क्रीडां कर्तुं ययौ। तत्र जलपानार्थमागतेन सिंहेनोभावपि भक्षितौ। तावुभावपि तदा नमस्कारध्यानानुभावात्सौधर्मे पल्योपमायुषौ सुरौ जातौ। तत्र देवायुः प्रतिपाल्य ततश्च्युत्वा महाविदेहे चक्रपुर्यां नगर्यां कुरुमृगांकस्य नृपतेर्मीनमृगांकनामा पुत्रो जातः। चन्द्रावतीजीवो दिवश्च्युत्वा भूषणभूपतेर्वसन्तसेनाख्या सुता समजनि। यौवनावस्थायां तयोः पाणिग्रहणं संजातं। तावन्योऽन्यं पूर्वभवस्नेहवशात्परमप्रेमपरायणौ सुखमनुबभूवतुः। मीनमृगांकस्य पिता कुरुमृगांकश्चिरकालं राज्यसुखं भुक्त्वा वैराग्यं प्राप्तः। पुत्रस्य मीनमृगांकस्य राज्यं दत्त्वा स्वयं वने गत्वा तापसोऽभूत्। मीनमृगांको राज्यं सुखं भुनक्ति। वसन्तसेना पट्टराज्ञी कृता। नृपस्तु यौवनमदमत्तो मृगयाव्यसनसेवी जातः। तिर्यग्वियोजनं कुरुते। तिरश्चां भोगान्तरायं करोति। वृषभाणामश्वानां नराणां च षंढत्वं करोति। एवं स बहुपापव्यसनपरायणो भूत्वा

दाहज्वरोत्पन्नपीडया मृतः । रौद्रध्यानवशात् षष्ठं नरकं ययौ । वसन्तसेनाऽपि चाग्निं प्रविश्य तत्रैव नरके नारकोऽभूत् । तत उद्वृत्य पुष्करवरद्वीपभरते रोरगेहयोः पुत्रपुत्र्यावजायेतां । तौ मिथः परिणीतौ । ताभ्यामन्यदा साधवो ददृशिरे । ताभ्यां साधवो भक्त्या परमादरादन्नपानैः प्रतिलाभिताः । अपराह्णे चोपाश्रये गत्वा तन्मुखाद्धर्मं शृण्वाते । ततो गृहिधर्मं प्रतिपद्य परिपाल्योभावपि मृत्वा पञ्चमे ब्रह्मदेवलोके सुरौ जातौ । ततश्च्युत्वेमौ युवामिभ्यसुतौ संजातौ । भो बन्धुदत्त भिल्लभवे यत्त्वया तिर्यग्वियोगः कृतः, तत्प्रभावात्त्वया दुःखं प्राप्तं । यानि यानि कर्माणि क्रियन्ते तानि तानि कर्माणि भोग्यकाले प्रकटीभवन्ति । ततो बन्धुदत्तस्य जिनवचनं शृण्वतोऽपीहापोहवशाज्जातिस्मरणं समजनि । पूर्वभवो दृष्टः, तुष्टः, भगवत्पादौ प्रणम्योवाच—" भगवन् यद्भवद्भिरुक्तं तत्तथैव दृष्टः । सर्वं सत्यमेव । अद्यापि मे भाग्यं जागर्ति यद्भगवतश्चरणारविन्दे वन्दिते । अथ मया किं करणीयं किं स्मरणीयं ? " । श्रीभगवानुवाच

"त्यज दुर्जनसंसर्गं भज साधुसमागमम् । कुरु पुण्यमहोरात्रे स्मर नित्यमनित्यताम् ॥ १ ॥

न लंघनीयमौचित्यं मान्यः सेव्यश्च सद्गुरुः । प्रवर्तितव्यं दानादौ भावना मानसीह च ॥ २ ॥

निक्षेपः परिहर्तव्यः प्रकृष्य योगसिद्धये । नित्यमन्तर्मुखैर्भाव्यं भाव्या वैराग्यभावना ॥ ३ ॥

कार्यो मंगलजापश्च गर्हणीयं स्वदुष्कृतम् । चतुःशरणमाराध्यं कार्यं पुण्यानुमोदनम् ॥ ४ ॥

यतितव्यं परे ज्ञाने विचिन्त्य सन्निदर्शनम् । श्रोतव्यं धर्मशास्त्रं च संसारासारसारता ॥ ५ ॥

इत्थं श्रुत्वा पल्लीशः प्रोचे—" स्वामिन्नहं पापिष्ठः दुष्टः धृष्टः दुराचारी हीनचारी सप्तव्यसनासक्तः जीवघातकः परद्रव्यापहारको लंपटः। मम कथमपि शुद्धिर्भवेत् ? " तदा जगत्प्रभुः श्रीपार्श्वजिनवरेन्द्रः प्राह—" हे भद्र पापिष्ठोऽपि पापानि त्यजति, सुकृतानि करोति तदा शुद्धिं प्राप्नोति। अत्र श्रीगुप्तस्य निदर्शनं शृणु—

## ॥ अथ श्रीगुप्तकथा ॥

अस्मिन्नेव भरतक्षेत्रे वैजयन्ती पुरी वर्तते। तत्र नलनामा नृपोऽस्ति। स राजा न्यायवान् प्रजापालकः। तस्य महीधरः सार्थवाहः परमप्रेमपात्रं मित्रमस्ति। तस्य सार्थवाहस्य सप्तव्यसनासक्तः श्रीगुप्तनामा पुत्रोऽस्ति। स पुत्रो निशायां चौर्यं करोति। अन्यदा सार्थवाहो विषण्णचित्तो निशायां नृपसमीपे समाययौ। स भूपेनालाप्य सगौरवं सादरं पृष्टः—'कथं त्वमीदृशो विषण्णवदनो दृश्यसे ?'। सार्थवाहोऽधो वीक्ष्य निःश्वासं मुक्त्वा जगौ—" विभोऽन्यस्मादुत्पन्नं दुःखमाख्यातुं सुखेन शक्यते। परं तु स्वसमुत्थं दुःखमाख्यातुं निगोपितुं च कथं शक्यते ? "। ततो राज्ञा रहस्यवृत्त्या पृष्टं—' तव किं दुःखं ? सत्यं कथय '। सार्थवाहो जगाद—"प्रभो ममैक एव पुत्रः। स तु द्यूतादिव्यसनसेवी। पूर्वसंचितो ममार्थः क्षपितः। मया वारितोऽपि कुसंगान्न निवर्तते। चौर्यमपि करोति। अन्यायं बहु करोति मया बहु वारितोऽपि नोपशाम्यति। अहं किं करोमि ? कस्याग्रे कथयामि ?। द्यूतकारगृहात्कथमपि समुत्थाय सोमश्रेष्ठिगृहे खात्रं दत्वा सर्वस्वमग्रहीत्। तज्ज्ञात्वाऽहमत्रागतः। मेऽपराधिनो गृहसारं सर्वस्वं गृह्यतां। यतः—

चौरश्चौरापको मंत्री भेदज्ञः काणकक्रयी। अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥ १ ॥

ततो नृपतिर्जगाद—' भोः सार्थेश विश्रब्धो भव, शास्यते क्रमेण सर्वमपि । इति धीरयित्वा सन्मान्य भूपतिना विसर्जितः । अथ नृपः प्रभातकृत्यानि कृत्वाऽऽस्थानसभायामुपविष्टः । तदा पूत्कुर्वन् पूर्जनः समागात् । नृपेण पृष्टं, तदा चौर्योदन्तं व्यजिज्ञपत् । पुनर्भूपेन पृष्टं—' अहो कियत्संख्यं द्रव्यं गतं ? ' । पौरैरुक्तं—' प्रभो पञ्चविंशतिस्वर्णसहस्रा गताः ' । तन्निशम्य राजा स्वभांडागारात्तत्प्रमाणं द्रव्यं प्रदाप्य पौरजनं विससर्ज । तलारक्षं क्षणं निर्भर्त्स्य श्रीगुप्तमाह्वयत् । तमाधिक्षिप्य राज्ञोक्तं—' भो निशि यन्मुषितं द्रव्यं तत्समर्पय ' । तदा तेन श्रीगुप्तेन नतेनोक्तं—' प्रभोऽस्माकं कुले न कदाप्येवं कुकर्म विधीयते ' । नृपः कुपितः प्राह—' चेत्त्वया मुषितं नास्ति, तदा त्वं दिव्यं करिष्यसि ? ' । तेनोक्तं—एवं भवतु, अहं दिव्यं करिष्यामि । तदा नृपो वह्नौ लोहगोलकमक्षिपत् । तप्तं कृत्वा चोक्तं—' भो लोहगोलकं कर्षयित्वा तव करे स्थापय ' । ततः श्रीगुप्तो दिव्याग्निस्तंभकरं गिद्दमन्त्रं पुरा लब्धमस्मरत् । तस्यानुभावतः स वह्निना स्वल्पमपि न दग्धः । शुद्धो जातः । शुद्धतालाश्च पतिताः । महताडंबरेण स गृहे जगाम । नृपः कृष्णमुखोऽजनि । नृपो मनसि दध्यौ—' अयं तु शुद्धः, अस्य मया कूटमालं दत्तं । अथ मम जीवितेन किं ? ' । इति मर्तुमना भूपः सर्वान्मंत्रिणः समाकार्य समादिशत्—' भोः प्रधानाः श्रूयतां, श्रीगुप्तो दिव्यतः शुद्धः । अहं तु शिरसि स्थित्वा महानलीको जातः । अतः कारणात्स्वयमेवाहमात्मनि चौरदंडं करिष्ये । मम राज्येनालं । राज्ये यथोचितं कुरुत " । ते प्रधाना ऊचुः—" प्रभोऽश्रोतव्यमेतद्वचो वयं किं श्राविताः ? प्रभूणां कोऽपराधः ? । यतः—

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं, नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।

वर्षा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं, यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥१॥

तैरित्यादियुक्तिभिर्गाढं बोधितोऽपि न बुध्यति । पुनर्नृपेणोक्तं—' इत्यादिवाग्विकल्पैः किं ? शीघ्रं भवत, चन्दनानि समानीयन्तां । अरेऽहं काष्ठभक्षणं करिष्ये ' । तच्छ्रुत्वा सार्थवाहो झटित्यागत्य पार्थिवमुवाच—" भोः स्वामिन् किमिदमसमंजसमारब्ध ? असमंजसकार्यमहितायैव भवति । ममैवमादिश । अहमेवानर्थकारणमस्मि । ममैव दंडोऽस्तु " । राजोचे—" भद्र मा कार्षीः खेदं । यत्त्वया ममाग्रे समाख्यातं, तत्सत्यं, परं त्वयं वह्निना शुद्धः । अग्निरेव साक्षीभूतः । अहमेवापराधी लोकदृष्ट्या जातः । तस्मादहं काष्ठभक्षणं करिष्ये " । पुनः सार्थवाहोऽवदत्—" नाथ तवाग्रे यन्मयोक्तं तन्नालीकं, सत्यमेव, प्रलयेऽप्यन्यथा न । परंतु केनचित्कारणेन भाव्यं " । तच्छ्रुत्वा मंत्रिणः प्राहुः—' यद्येवं तर्हि मंत्रेण श्रीगुप्तो वह्निमस्तंभयत् ' । तदा मंत्री मतिसागरो नृपतिं प्रणम्येदमुवाच—' प्रभो रथनूपुरनगरे सिद्धपुरुषो विद्यावान् लसति । स आहूयते । स पृच्छ्यते ' । राज्ञोक्तं—' वरं, तमाकारयतु ' । तदा मतिसागरमंत्रिणा बहुमानेन स समाकारितः । सोऽप्यागतः । राज्ञा मंत्रिणा च तस्य सर्वमाख्यातं । तेनोक्तं—" पुनर्दिव्यं कारयत । परविद्यास्तंभिनी विद्या ममास्ति । मद्दृष्ट्या दिव्यं कारयत । सर्वं ज्ञास्यते " । तदा पुनः श्रीगुप्तमाहूय प्रोक्तं—' चेत्त्वं सत्योऽसि तदा पुनरपि दिव्यं कुरु ' । तेनोक्तं—' प्रमाणं ' । तेन दिव्यं कृतं । तस्य करद्वयमदह्यत । नृपस्य जयजयारवो जातः । विविधा मंगलोत्सवाः प्रवृत्ताः । नृपेण श्रीगुप्तः पृष्टः स सर्वं यथातथमाख्यत् । स चौर्यवस्तु सर्वमपि गृहीत्वा सार्थवाहस्य लज्जया जीवन्मुक्तो देशान्निष्कासितः । वसुधायां भ्रमन् भवितव्यतावशात् रथनूपुरनगरे गतः । तत्र स सिद्धपुरुषो मंत्रवादी दृष्टः । तेन चिन्तितं—' ममायं रिपुः ' । तत्र प्रस्तावं विलोक्य तं हत्वा पलायितः । स पूर्जनैर्धृत्वा तलारक्षस्यार्पितः ।

तलारक्षेण नृपस्यार्पितः । नृपेण वधाय समादिष्टः । श्रीगुप्तः कंपमानांगस्तरोः शाखायां गलपाशेन बद्धः । स्वस्थानं ते नरा जग्मुः । श्रीगुप्तः कंठपाशार्दितो रोदसीं पश्यति । आयुषो योगबलात् पाशस्त्रुटितः । श्रीगुप्तो भुवि पतितः । शीतवातेन चैतन्यं प्राप्य भीत्या शीघ्रं पलाय्य गतः । वननिकुञ्जे प्रविष्टः । तत्र मधुरध्वनिं शुश्राव । शब्दसंमुख गतः तत्र स्वाध्यायं कुर्वन्तं मुनिं ददर्श । तं पठन्तं वीक्ष्य भिया वृक्षान्तरितो भूत्वा सोऽशृणोत् । तत्र तच्छृण्वन् शुभभावनां भावयति—"एष महानुभावस्तपःसंयमं करोति । अहं दुराचारी महापापिष्ठो महादुष्टः सप्तव्यसनी । मम का गतिर्भविष्यति ? " । ततः स श्रीगुप्तः साहसमवलंब्य मुनिसमीपे समागत्य मुनिमभिवन्द्य निविष्टः । मुनेः पठनं शृणोति । मुनिरवादीत्—" भो भोस्त्वया पापवृक्षस्य कुसुमं भुक्तं । अथ फलं भोक्ष्यसि । मुधा किं पापं करोषि ? । नरके कष्टं पचनं पीडनं ताडनं तापनं विदारणं च कथं सहिष्यसे ? । तत्पापफलमनन्तवारं सहिष्यसे " । तेनोक्तं—'अथाहं किं करोमि ? ' । मुनिः प्राह—'मदुक्तं कुरु' । श्रीगुप्तोऽवदत्—प्रमाणं, करिष्यामि । मुनिरुवाच—"हिंसाचौर्यव्यसनानि मुञ्च । श्रीशत्रुञ्जयतीर्थस्य सेवां कुरु । तत्र दानं तपो ध्यानं श्रद्धया कृतं बहुफलकारकं भवति । पापानि विलयं यान्ति । सप्त षष्ठाः अष्टमोऽष्टमः पारणके चैकाशनं प्रासुकोदकपानं सचितादिपरिहारः । एवं वर्षे वर्षे प्रति क्रियते द्वादशवर्षं यावत् तदा जन्मकोटिकृतं पापं विलयं याति " । तेनोक्तं—'एवं करोमि ' । ततश्चलित्वा श्रीशत्रुञ्जयतीर्थे गत्वा द्वादशवर्षं यावत्तपोदानादिकं कृत्वा स्वात्मा विमलतीर्थे विमलीकृतः । एवं कृत्वा गिरिपल्लीपुरे स्वमातुलगृहेऽगात् । तत्र जनकस्तस्य शुद्धिं ज्ञात्वा तत्र गतः । तत्र श्रीगुप्तं वीक्ष्य संजातपुलकांगोऽभूत् । तेन समालिंग्य प्रोक्तं—" वत्स त्वं मया बहुभिर्वर्षैरद्य दृष्टः । अथाद्य मम मनोरथः सफलो जातः यत्त्वं मया

दृष्टया दृष्टः। अथ त्वं वंशं निर्मलीकुरु "। श्रीगुप्तोऽपि रुदन्नाह—"आम तात बहु किं कथयामि। मया कष्टान्यनेकप्रकारैर्भुक्तानि। गुरूपदेशेन श्रीशत्रुञ्जयतीर्थे गत्वा बहूनि तपांसि तप्तानि। अथाद्य प्रभृति अविश्वासो मदीयः क्वापि न कार्य एव। अथ मया गुरूपदेशात् श्रीजैनधर्मोऽङ्गीकृतः। पापैरलं "। ततः सार्थेशः पुत्रेण सह पुरे ययौ। पार्थिवस्य श्रीगुप्तवृत्तान्तो निवेदितः। श्रीगुप्तो नृपाज्ञया स्वपुरेऽवसत्। सामायिकावश्यकपौषधादीनि धर्मकृत्यानि कुरुते। बहूनि वर्षाणि जातानि। सर्वत्र यशो विस्तृतं। अन्यदा निशान्ते सामायिकं कृत्वा नमस्कारं स्मरति, तदा सुरः कोऽपि प्राग्भवमित्रं समायातः—' भोः श्रीगुप्त त्वं धर्मं कुरु सप्तमे दिवसे तव मृत्युर्भविष्यति ' इत्युक्त्वा सुरो दिवि गतः। श्रीगुप्तोऽपि जिनं पूजयित्वा प्रान्ते व्रतमग्रहीत्। अनशनं कृत्वा नमस्कारपरायणो विपद्य दिवं गतः। क्रमात्सिद्धिं यास्यति। अतः कारणाद् भोः पल्लीश! महापापी पापत्यागात् ध्यानदानतपःप्रभावात्सद्गतिं प्राप्नोति। भोः पल्लीश! संसारोऽसार एव। सर्वेऽपि जीवाः स्वार्थवल्लभाः सन्ति। परंतु कोऽपि कस्यापि नैव। संसारसुखं परिणामे मधुबिन्दुसदृशमस्ति "। पल्लीशेनोक्तं—' मधुबिन्दुसदृशं तत्कथं ? '। श्रीपार्श्वप्रभुणोक्तं—"शृणु, यथा कोऽपि नरोऽटव्यां यत्र तत्र भ्रमति। वने भ्रमन् एकेन गजेन दृष्टः। स गजस्तं हन्तुं प्रधावितः। स नरो नष्टः। यत्र यत्र नरो याति तत्र तत्र पृष्ठिलग्नः स धावति। क्रमेण पलायन् वटं दृष्ट्वा तत्र चटितः। तत्र वटजटा प्रलंबमानाऽस्ति। स तां वटजटामवलंब्य स्थितः। तत्र कूपमध्येऽजगरद्वयं विकाशवदनं समस्ति। चत्वारो भुजंगमा विकरालवक्त्राः सन्ति। तत्र वटजटायां उच्चैर्महान्मधुपूपकोऽस्ति। ततः स्थानान्मक्षिकाः समुड्डीय तस्य शरीरे चटचटान् ददति। मूषकद्वयं सितासितं वटजटां दन्तैश्छिनत्ति। गजराजो वटं पातयति। तदा स नरः शनैः शनैर्वटजटया समुत्तीर्य वटजटायामवलंब्य कूपमध्ये प्रलंबमानः स्थितोऽ-

स्ति। मधुपूपकान्मधुबिन्दुः पतति। तं जिह्वया स्वादते। एतदेव सुखं। पुनः पुनर्मधुबिन्दुसंमुखं विलोक्य गृह्णाति, तमेव न पाञ्छति। तस्मिन्समये कोऽपि विद्याधरोऽनुकंपया विमानं गृहीत्वा समागत्य प्रोक्तवान्—' भोः शीघ्रमस्मिन् विमाने तिष्ठ यथा त्वां निरुपद्रवं करोमि '। तेनोक्तं—'क्षणमेकं प्रतीक्षस्व यथा मधुबिन्दुं जिह्वया गृह्णामि '। विद्याधरेणोक्तं—' भोः साधो अहो तव जिह्वालांपट्यं दुःखदायकं। अहं यामि '। विद्याधरो गतः। स तत्रैव स्थितः। अत्रोपनयं शृणु—यदरण्यं स संसारः। यो गजराजो धावति स मृत्युः निरंतरं धावति। यत् जरा मृत्युर्नावतरणं स तु कूपः। यत्तु कूपोदकं तत्तु कर्माण्यष्टकं। अजगरद्वयं नरकतिर्यक्त्वं। चत्वारो भुजंगमास्ते तु चत्वारः क्रोधमानमायालोभाख्याः सर्पाः। वटजटा चायुः। सितासितमूषकौ तु श्वेतकृष्णपक्षौ। या मक्षिकाणां चटकास्ते तु रोगवियोगशोकादयः। यो मधुबिन्दुस्वादः स स्त्रीलक्ष्मीपुत्रोस्पर्शादिः। यो विद्याधरः स तु गुरुः परोपकारी। यत्तु विमानं तत्तु धर्मोपदेशनं। विषया मधुस्वादोपमाः। तस्मिन् समये यो धर्मं निदधाति सोऽसारसंसारदुःखं मोचयति "। स पल्लीपतिः प्रभुवचनामृतं निपीय सम्यक् प्रतिबोधं प्राप्तः। बन्धुदत्तेनोक्तं—' स्वामिन्ममाग्रे का गतिः ? '। भगवता प्रोक्तं—" युवां द्वावपि व्रतं गृहीत्वा सहस्रारे व्रजिष्यथः। ततश्च्युत्वा त्वं चक्री विदेहे भविष्यसि। पल्लीशस्तव राज्ञी भावी। ततो भुक्तभोगौ परिव्रज्य सिद्धिं प्रयास्यथः "। तच्छ्रुत्वा बन्धुदत्तः सपत्नीकः पल्लीशोऽपि व्रतमाददे। निरतिचारं चारु चारित्रं पालयति। बाह्यं संसारकुटुंबं मुक्त्वाऽन्तरंगकुटुंबमंगीकृतं। तद्यथा—श्रुताभ्यासः पिता, जिनभक्तिर्जननी, विवेकः सोदरः, सुमतिर्जामिः, विनयस्तनयः संतोषो मित्रं, शमो भवनं, शेषा गुणा बान्धवाः। इदमन्तरंगकुटुंबं समाश्रयतां। तौ निर्मुक्तात्मानौ चारु चारित्रं निर्वाहयतां। क्रमेण सहस्रारे देवलोके सुरौ जातौ। एवं भगवता तौ तारितौ।

इत्तर लूताभिधे ग्रामेऽशोकाख्यो मालिकोऽजनि । स तु नित्यं कुसुमानां क्रयविक्रयं करोति । सगुरूपदेशं श्रुत्वा जिनस्य नवांगेषु नवकुसुमैः पूजां करोति । एवं प्रतिदिनं नवकुसुमैर्जिनं पूजयति । तस्मिन्नेव भवे श्रीमान्महर्धिको जातः । क्रमेण विपद्य नवकोटीश्वरो व्यवहारी जातः । एवं सप्त भवा जाताः । अष्टमे तु नवलक्षग्रामेशो नृपोऽजनि । नवमेऽपि नवकोटिग्रामेशो नृपोऽजनि । सोऽप्यन्येद्युः प्रभोरन्ते प्राच्यं निजभवं श्रुत्वा प्रव्रज्यां गृहीत्वा मोक्षाख्यं नवमं तत्त्वं प्राप्तवान् । एवं प्रभुणाऽनेके जीवास्तारिताः ।

अथ प्रभोः परिवारः—षोडश सहस्राः साधवः समभवन् । अष्टात्रिंशत्सहस्राः साध्व्यः व्रतग्राहिण्यः । चतुःषष्टिसहस्राधिकलक्षाः श्राद्धाः । सप्तविंशतिसहस्राधिकास्त्रिलक्षमिताः श्राध्व्यः समजनिषत । सप्तपंचाशदधिकाः शतत्रयीमिताश्चतुर्दशपूर्विणो बभूवुः । चतुर्दशशतान्यवधिज्ञानिना बभूवुः । सार्धसप्तशतानि केवलिनः संजाताः । वैक्रियलब्धिनः सहस्रसंख्याका अदीदिपन् । केवलज्ञानवासरात्प्रभोः श्रीपार्श्वनाथस्येत्यादिबहुपरिवारः समज[illegible] । [illegible]मेण भगवान् विहरन्नासन्ननिर्वाणं ज्ञात्वा संमेताद्रिं ययौ । अजिताद्वितीर्थकराणां सिद्धिस्थानं ज्ञात्वा [illegible]नैः परि[illegible] [illegible]रोह । [illegible] वासवाश्चलितासना-

शन्मु-

आसदन्। शेषाणां मुनीनां सुरा एवं व्यधुः। सुगन्धांबुकुसुमवर्षणं धूपघट्यादिधारणं गीतनृत्यवाद्यक्रन्दनपरिदेवनस्तुतिपुष्पादिपूजनं देवदेवीगणाश्चक्रुः। शक्रः स्वामिनः शिबिकां सुराः साधूनां शिबिकां समुध्धृत्य स्कन्धे निन्युः। श्रीखंडागरुदारूणां चिताश्चक्रुः। अग्निकुमारका वह्निं विकुर्व्य वायुकुमारका वातं विकुर्व्य स्वामितपस्विनां देहान् संचस्कुः। क्षणेन जिनांगस्यास्थिवर्जाखिलधातुषु दग्धेषु मेघकुमारकाः सुराः क्षीरांभोधिजलैर्व्यध्यापयन्। शक्रेशानौ प्रभोरुपरिदंष्ट्रे जगृहतुः। चरमबलीन्द्रौ प्रभोर्दक्षिणवामे चाधःस्थिते दंष्ट्रे जगृहतुः। अन्ये वासवा दन्तांश्च स्वीचक्रुः। सुरा अस्थीनि मानवाश्च भस्मादिकं जगृहुः। तस्मिन् स्थाने सुरा रत्नमयं स्तूपं व्यदधुः। ततो नन्दीश्वरे द्वीपे सर्वे वासवाः सुराश्च शाश्वतप्रतिमाग्रेऽष्टाह्निकामहोत्सवं विधाय स्वस्वास्पदं ययुः। इन्द्राः स्वस्वविमाने सुधर्मायां पर्षदि अधिमाणवकस्तंभे धृतवज्रसमुद्गके स्वामिदंष्ट्रा मुञ्चन्ति। प्रतिदिनमानर्चुः। तासां प्रभावात्तेषां विजयमंगलं भवतः।

विश्वातिशायिमहिमा धरणोरगेन्द्रपद्मावतीसततसेवितपादपीठः।
अन्तर्बहिश्च दुरितच्छिदनन्तशर्मा पार्श्वः क्रियादुपयिनी शुभभावलक्ष्मीम् ॥ १ ॥

॥ इति तपागच्छीयश्रीपूज्यश्रीजगच्चन्द्रसूरिपट्टपरंपरालंकारश्रीहेमविमलसूरिसन्तानीयश्रीपूज्यगच्छाधिराजहेमसूरि-
विजयराज्ये पूज्यपं०संघवीरगणिशिष्यपं०उदयवीरगणिविरचिते पार्श्वनाथगद्यबन्धचरित्रे
भगवद्विहारवर्णननिर्वाणमहोत्सववर्णनो नामाष्टमः सर्गः ॥

इतश्च लूराभिधे ग्रामेऽशोकाख्यो मालिकोऽजनि । स तु नित्यं कुसुमानां क्रयविक्रयं करोति । सद्गुरूपदेशं श्रुत्वा जिनस्य नवांगेषु नवकुसुमैः पूजां करोति । एवं प्रतिदिनं नवकुसुमैर्जिनं पूजयति । तस्मिन्नेव भवे श्रीमान्महर्धिको जातः । क्रमेण विपद्य नवकोटीश्वरो व्यवहारी जातः । एवं सप्त भवा जाताः । अष्टमे तु नवलक्षग्रामेशो नृपोऽजनि । नवमेऽपि नवकोटिग्रामेशो नृपोऽजनि । सोऽप्यन्येद्युः प्रभोरन्ते प्राच्यं निजभवं श्रुत्वा प्रव्रज्यां गृहीत्वा मोक्षाख्यं नवमं तत्त्वं प्राप्तवान् । एवं प्रभुणाऽनेके जीवास्तारिताः ।

अथ प्रभोः परिवारः—षोडश सहस्राः साधवः समभवन् । अष्टात्रिंशत्सहस्राः साध्व्यः व्रतग्राहिण्यः । चतुःषष्टिसहस्राधिकलक्षाः श्राद्धाः । सप्तविंशतिसहस्राधिकाखिलक्षमिताः श्राध्व्यः समजनिषत । सप्तपंचाशदधिकाः शतत्रयीमिताश्चतुर्दशपूर्विणो बभूवुः । चतुर्दशशतान्यवधिज्ञानिनां बभूवुः । सार्धसप्तशतानि केवलिनः संजाताः । वैक्रियलब्धिनः सहस्रसंख्याका अदीदिपन् । केवलज्ञानपासरात्प्रभोः श्रीपार्श्वनाथस्येत्यादिबहुपरिवारः समजनि । क्रमेण भगवान् विहरन्नासन्ननिर्वाणं ज्ञात्वा संमेताद्रिं ययौ । अजितादितीर्थकराणां सिद्धिस्थानं ज्ञात्वा देवैः परिवृतः किन्नरीभिर्गीयमानगुणः संमेताद्रिमारुरोह । तदा सर्वे वासवाश्चलितासनास्तत्रागताः । प्रभोः पादपद्मं नत्वा ते निषण्णा निषण्णाः । तदा प्रभुः श्रावणसिताष्टम्यां विशाखायां मनोवाग्योगमरुन्धत् । त्रयस्त्रिंशन्मुनीश्वरास्तथैवाकुर्वन् । अपूर्वं शुक्लध्यानं प्रभुर्ध्यातवान् । पञ्चह्रस्वाक्षरोच्चारमितं कालं प्रभुरशिश्रयत् । क्षीणकर्मा सर्वसंसारदुःखमलोज्झितः शिवमचलमरुजमक्षयमनन्तमव्याबाधं सिध्धगतिनामधेयं लोकाग्रपदं प्रभुः प्राप । एतावता भगवान् मुक्तिमासदत् । त्रयस्त्रिंशन्मुनीश्वरा अपि स्वामिवन्निर्वृतिं प्रापुः । गार्हस्थ्ये त्रिंशद्वर्षाणि व्रतभावे सप्तत्यब्दानि अब्दशतं सर्वायुः प्रभोरभूत् । तदा शक्रः प्रभोर्वपुः क्षीरांभोधिजलैः स्नपयित्वा गोशीर्षचन्दनैर्लिप्त्वा दिव्यभूषणैरभूषयत् । देवदूष्येण चाच्छाद्य नत्वा वासवा

आसदन् । शेषाणां मुनीनां सुरा एवं व्यधुः । सुगन्धांबुकुसुमवर्षणं धूपघट्यादिधारणं गीतनृत्यवाद्यक्रन्दनपरिदेवनस्तुतिपुष्पादिपूजनं देवदेवीगणाश्चक्रुः । शक्रः स्वामिनः शिबिकां सुराः साधूनां शिबिकां समुध्धृत्य स्कन्धे निन्युः । श्रीखंडागरुदारूणां चिताश्चक्रुः । अग्निकुमारका वह्निं विकुर्व्य वायुकुमारका वातं विकुर्व्य स्वामितपस्विनां देहान् संचस्कुः । क्षणेन जिनांगस्यास्थिवर्जाखिलधातुषु दग्धेषु मेघकुमारकाः सुराः क्षीरांभोधिजलैर्व्यध्यापयन् । शक्रेशानौ प्रभोरुपरिदंष्ट्रे जगृहतुः । चमरबलीन्द्रौ प्रभोर्दक्षिणवामे चाधःस्थिते दंष्ट्रे जगृहतुः । अन्ये वासवा दन्तांश्च स्वीचक्रुः ॥ सुरा अस्थीनि मानवाश्च भस्मादिकं जगृहुः । तस्मिन् स्थाने सुरा रत्नमयं स्तूपं व्यदधुः । ततो नन्दीश्वरे द्वीपे सर्वे वासवाः सुराश्च शाश्वतप्रतिमाग्रेऽष्टाह्निकामहोत्सवं विधाय स्वस्वास्पदं ययुः । इन्द्राः स्वस्वविमाने सुधर्मायां पर्षदि अधिमाणवकस्तंभे वृत्तवज्रसमुद्गके स्वामिदंष्ट्रा मुञ्चन्ति । प्रतिदिनमानर्चुः । तासां प्रभावात्तेषां विजयमंगले भवतः ।

विश्वातिशायिमहिमा धरणोरगेन्द्रपद्मावतीसततसेवितपादपीठः ।
अन्तर्बहिश्च दुरितच्छिदनन्तशर्मा पार्श्वः क्रियादुपयिनी शुभभावलक्ष्मीम् ॥ १ ॥

॥ इति तपागच्छीयश्रीपूज्यश्रीजगच्चन्द्रसूरिपट्टपरंपरालंकारश्रीहेमविमलसूरिसन्तानीयश्रीपूज्यगच्छाधिराजहेमसूरि-
विजयराज्ये पूज्यपं०संघवीरगणिशिष्यपं०उदयवीरगणिविरचिते पार्श्वनाथगद्यबन्धचरित्रे
भगवद्विहारवर्णननिर्वाणमहोत्सववर्णनो नामाष्टमः सर्गः ॥

जीर्णशास्त्रानुसारेण ग्रन्थोऽयं निर्मितो मया ।
मिथ्या मे दुष्कृतं भूयान्न्यूनाधिकतरे सति ॥ ६ ॥

सार्धपञ्चसहस्राणि प्रत्येकं श्लोकसंख्यया । पार्श्वनाथचरित्रस्य ग्रन्थमानं विनिर्मितम् ॥ ७ ॥
वेदबाणर्तुचन्द्राख्यसंख्ये (१६५४) वर्षे वचोष्टके । मासे च सितसप्तम्यां ग्रन्थोऽयं निर्मितो मुदा ॥ ८ ॥
आचन्द्रार्कमयं नन्द्याद्वाच्यमानो बुधैः सदा । पार्श्वनाथप्रसादेन यतो भवतु वाञ्छितम् ॥ ९ ॥

॥ इति प्रशस्तिः ॥

॥ श्रीपार्श्वनाथचरितं समाप्तम् ॥

॥ अथ प्रशस्तिः ॥

श्रीवीरशासनसरोवरराजहंसाः श्रीचन्द्रगच्छसरसीरुहचञ्चरीकाः ।
सत्त्वाधिकत्वसकलाजितसद्गुणौघाः श्रीपूज्यसोमविमला गुरवो बभूवुः ॥ १ ॥
येषां पदक्षालनवारिणाहिज्वरादिरोगाः प्रशमन्ति नूनम् ।
ते पूज्यपादा हि जयन्तु नित्यं गच्छाधिराजाः प्रकटप्रभावाः ॥ २ ॥
तत्पट्टपूर्वाचलसप्तसप्तिर्भाग्याधिको जंगमकल्पवृक्षः ।
गच्छाधिपः श्रीगुरुहेमसोमसूरीश्वरो राजतु साधुधुर्यः ॥ ३ ॥
तदीयगच्छे गुरुसंघवीरगीतार्थमुख्याः सकला बभूवुः ।
येषां करस्पर्शनतोऽपि मूर्खः प्राज्ञो भवेत्सर्वकलाप्रधानः ॥ ४ ॥
तदीयशिष्योदयवीर एव सद्ग्रन्थबन्धेन हि शास्त्रमेतत् ।
कथाप्रबन्धैः सरसं प्रधानं निरूपयामास गुरुप्रसादात् ॥ ५ ॥

जीर्णशास्त्रानुसारेण ग्रन्थोऽयं निर्मितो मया ।
मिथ्या मे दुष्कृतं भूयान्न्यूनाधिकतरे सति ॥ ६ ॥

सार्धपञ्चसहस्राणि प्रत्येकं श्लोकसंख्यया । पार्श्वनाथचारित्रस्य ग्रन्थमानं विनिर्मितम् ॥ ७ ॥

वेदवाणर्तुचन्द्राख्यसंख्ये (१६५४) वर्षे वचोष्टके । मासे च सितसप्तम्यां ग्रन्थोऽयं निर्मितो मुदा ॥८॥

आचन्द्रार्कमयं नन्द्याद्वाच्यमानो बुधैः सदा । पार्श्वनाथप्रसादेन यतो भवतु वाञ्छितम् ॥ ९ ॥

॥ इति प्रशस्तिः ॥

॥ श्रीपार्श्वनाथचरितं समाप्तम् ॥